# अथ ईशावास्योपनिषद्भूमिका।

भो भोः सुधियो विद्वांसः विदितमेवैतत्तत्रभवतां, यत्किल सम्प्रत्यस्मिञ्जगति विभिन्नेषु द्वीपेषु विभिन्नेषु देशेषु च ये ये धर्मास्तत्प्रतिपादका ग्रन्थाश्चोपलभ्यन्ते तेषु वैदिकधर्मस्य वैदिकग्रन्थानां चातिप्राचीनत्वं मूलभूतत्वं च निर्विवादमेव सर्वैराद्रियते। यद्यपि स्व-स्वधर्माभिमानग्रहगृहीताः केचन वेदस्य प्राचीनत्वे विवदन्तो दृश्यन्ते। ते तथैव विवदन्तां नाम। तथापि निर्मत्सराः समधियो विवेकिनः नात्र विप्रतिपद्यन्ते। त इमे आर्याणां चतुर्विधपुरुषार्थसाधनभूताश्चतुर्दशविद्यानां चतुःषष्टिकलानां च मूलभूता वेदा भगवता जगत्कारणेन परमात्मना आदिकवये ब्रह्मणे हृदैवोपदिष्टाः। स च ब्रह्मा तानितरेभ्यः प्रकाशयामास। तद्यथा—

समाहितात्मनो ब्रह्मन्ब्रह्मणः परमेष्ठिनः।
हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते॥
ततोऽभूत्त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट्।
स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः॥
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम्।
तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह॥
धार्यन्ते यैस्त्रयो भावा गुण-नामार्थ-वृत्तयः।
ततोऽक्षरसमाम्नायमसृजद्भगवानजः॥
अन्तस्थोष्म-स्वर-स्पर्श-ह्रस्व-दीर्घादिलक्षणम्।
तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः॥
सव्याहृतिकान्सोङ्कारांश्चातुर्होत्रविवक्षया।
पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन्ब्रह्मकोविदान्॥
ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन्।
ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः॥
चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः।

इति। एवं ब्रह्मणः सकाशात्तत्पुत्रा मरीच्यादयस्तेभ्यस्तच्छिष्य-प्रशिष्यादिपरम्परया वेदाः प्रसृता बभूवुः। द्वापरादिषु वेदविस्तारकर्तारोऽन्ये वेदव्यासा आसन्। अस्मिन्नप्यन्तरे—

पराशरात्सत्यवत्यामंशांशकलया विभुः ।
अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम् ॥
ऋगथर्वयजुस्साम्नां राशीनुद्धृत्य वर्गशः ।
चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव ॥

इति । ताश्च ऋग्यजुस्सामाथर्वाख्याश्चतस्रः संहिताः पैल-वैशम्पायन-जैमिनि-सुमन्तुसंज्ञकैश्चतुर्भिः स्वशिष्यैर्ग्राहयामास भगवान्पाराशर्यो वेदव्यासः । तं च पैलादयः स्व-स्वशिष्यानध्यापयामासुः स्वां स्वां संहिताम् । तत्र यजुर्वेद-धरस्य वैशम्पायनस्य याज्ञवल्क्यप्रभृतयो बहवः शिष्या आसन् ।

अथ कदाचित् भगवान्वैशम्पायनः ब्रह्महत्यां बालहत्यां स्वस्रीयहत्यां चावाप्तवाना-कस्मिकेन दैवयोगेन । तदुक्तं विष्णुपुराणे—

ऋषिर्योऽद्य महामेरौ समाजे नागमिष्यति ।
तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति ॥
पूर्वमेवं मुनिगणैः समयोऽभूत्कृतो द्विज ।
वैशम्पायन एवैकस्तं व्यतिक्रान्तवांस्तदा ॥
स्वस्रीयं बालकं सोऽथ पदा स्पृष्टमघातयत् ।

इति । एवं ऋषिकृतसमयानुसारेण मेरुपर्वते ऋषिसमाजेऽगमनाद्ब्रह्महत्यामनि-च्छयापि पदा स्पृष्टस्य बालस्य मरणात्स्वस्रीयहत्यां बालहत्यां च लब्धवतो वैशम्पायनस्य शिष्या गुरोर्निर्देशेन तत्पापशान्तये उग्रं तपश्चेरुः । अतस्तेषां चर-काध्वर्यव इति प्रथा आसीत् । एवं तपश्चरतोऽन्यान्सहाध्यायिनोऽवजानन्निव—

याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन्किमेतत् ।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥

। सतीर्थ्याननिक्षिपता याज्ञवल्क्येन—

इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया ।
विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥

। सोऽपि सभावत्वाच्छिष्यो याज्ञवल्क्यः गुरोर्वैशम्पायनादधीतं यजुषां गणं छर्दित्वा तदन्तिकान्निर्गतः । अथ तच्छर्दितान्यजुर्गणान्वीक्ष्य वेदलोलुपा ऋषयश्छर्दि-तस्य विप्ररूपेणादानमनुचितमिति विचार्य तित्तिरसंज्ञकपक्षिरूपेण याज्ञवल्क्यत्य-क्तान् यजुर्गणानादहुः । ततश्च सा तैत्तिरीयेति प्रसिद्धा शाखाऽभवत् ।

अथ याज्ञवल्क्यः गुरोर्वैशम्पायनादप्यधिकानि यजूंषि गवेषयन्भगवन्तमर्कं च-तुर्णां वेदानामीश्वरमुपतस्थे । तथा च श्रुतिः—

ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अन्हः ।
सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः ॥

इति । तस्य भक्त्या तुष्टो भगवानादित्यः वाजिरूपधरो भूत्वा—

यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः ।

इति । एवं याज्ञवल्क्योऽर्काद्वेदमधीत्य कण्व–मध्यन्दिनप्रभृतींस्त्वशिष्यानध्यापयामास । ते च रविणाऽश्वरूपेण वाजेभ्यः केसरेभ्यो वाजेन वेगेन वा संन्यस्ताः त्यक्ताः शाखा वाजसनीसंज्ञाः तासां ग्रहणाद्वाजसनेयिन इत्याचक्षते ।

तदेवं यजुर्वेदस्य द्वौ भेदौ । वैशम्पायनेन महर्षेर्व्यासादधीता चरकाध्वर्य्वादीन्स्वशिष्यानध्यापिता संहिता कृष्णयजुःसंहितेत्यभिधीयते । याज्ञवल्क्येन वाजिरूपधरात्सूर्यादधीता कण्व–मध्यन्दिनादीनध्यापिता संहिता शुक्लयजुःसंहितेत्याचक्षते । शुक्लयजुर्वेदस्य पञ्चदश शाखाः । तदुक्तं होलीरभाष्ये—

" आदित्येनाधायित्वादादित्यान्युच्यन्ते ।
वाज इत्यन्नस्य नामधेयम् । ' अन्नं वै
वाज ' इति श्रुतेः । वाजस्य सनिर्दानं
यस्य महर्षेरस्ति सोऽयं वाजसनिः ।
तस्य पुत्रो वाजसनेयः । तस्य याज्ञव-
ल्क्य इति नामधेयम् । तेन याज्ञवल्क्ये-
न तानि यजूंषि महर्षिभ्यः पञ्चदश
समर्पितानि " ।

केषाञ्चिन्मते सप्तदश भेदाः । तदेवं शाखाभेदेऽपि न संहिताभेदः । केवलं पाठभेद एव ।

सेयं शुक्लयजुःसंहिता काण्डद्वयात्मिका । " ऋग्भिः स्तुवन्ति यजुर्भिर्यजन्ति " इत्यभिधानाद्यजनात्मिकायामस्यां संहितायां प्रथमाध्यायस्य प्रथममन्त्रमारभ्य एकोनचत्वारिंशाध्यायसमाप्तिपर्यन्तं दर्शपूर्णमासाद्यश्वमेधान्तं कर्मकाण्डं प्रतिपादितम् । अन्तिमे चत्वारिंशेऽध्यायेऽष्टादशभिर्मन्त्रैर्ज्ञानकाण्डं प्रतिपादितम् । तस्य च ज्ञानकाण्डप्रतिपादकत्वात् ब्रह्मविद्यापरगणां सहेतोः संसारस्यात्यन्तोच्छेदकत्वाद्ब्रह्मविद्योपनिषदित्यभिधीयते । उपनिषदिति ' षद्लृ विशरणे ' इत्यस्य अन्तर्भावितण्यर्थस्य विशरणार्थस्य धातोः क्विपि रूपम् । उप नितरां सादयति संसारहेतुभूतामविद्यां नाशयतीत्युपनिषद्ब्रह्मविद्या । तदर्थप्रतिपादकग्रन्थोऽप्युपचारादुपनिषदित्यभिधानवान्भवति । यथाहुराचार्याः—

" उपनीयेममात्मानं ब्रह्मापास्तद्वयं ततः ।
निहन्त्यविद्यां तज्जं च तस्मादुपनिषन्मता " ॥

इति । सेयं संहितोपनिषदिति ' ईशावास्ये ' त्यादिमं मन्त्रमुपजीव्य ईशावास्योपनिषदिति चाभिधीयते ।

ननु—" ईशावास्यादयो मन्त्राः कर्मस्वविनियुक्ताः । तेषामकर्मशेषस्यात्मनो याथात्म्यप्रकाशकत्वात् " इति एतेषां मन्त्राणां कर्मस्वविनियोगे कारणमुक्तम् । तत्र प्रथमाध्यायमारभ्य एकोनचत्वारिंशत्तमाध्यायपर्यन्तं तेषां तेषां मन्त्राणां तेषु तेषु दर्शपूर्णमासाद्यश्वमेधान्तेषु यथा विनियोगः । तथैव कर्मप्रतिपादकत्वाभावेऽपि ' सहस्रशीर्षे ' त्यादिवत् ईशावास्यादीनामपि मन्त्राणां कर्मसु यथाकथंचन विनियोगः किं न स्यात्—? इति चेत् । मैवम् ।

" ऋचा पुरुषं ब्रह्माणं दक्षिणतः पौरुषेण नारायणे-
' नाभिष्टौति । ' सहस्रशीर्षा पुरुष ' इत्यनेन षोडशर्चेन " ॥

इत्यादिवत्कर्मसु प्रमाणतो विनियोगाभावात्कर्मप्रतिपादकत्वाभावाच्च । तर्हि यागकल्पना कुतो न क्रियत—इति चेत् । न । विशेषं परिहृत्यैव सा कल्पना भविष्यति । अत एव श्रीमदाचार्यभगवत्पादैः—

" विरोधादेवाविनियोगस्तेषां मन्त्राणां कर्मणि "

इति प्रतिपादितम् । तस्माद्विहितकर्मणा शुद्धान्तःकरणस्य अधिकारिण आत्मस्वरूपप्रकाशनेन शोकमोहादिसाधनाज्ञाननिवृत्तिपूर्वकमात्मस्वरूपं दर्शयतीत्यभिधेयसंबन्धप्रयोजनवानयमीशावास्यादिमन्त्रसमूहः ।

सेयमुपनिषत् भाष्यटीका दीपिकारहस्यादिसंवलिता सर्वसुलभा भवत्विति विचार्य आनन्दाश्रमाधिपतिना स्वकीयग्रन्थावल्यां संगृहीता । इयं च कलिकाताराजधान्यां वङ्गदेशीयास्यातिकममाजानुमत्या शंकरभाष्यानन्दगिरि[1]कृतटीकामहिता मुद्रिताऽऽसीत् । सा च अधुना दुष्प्राप्या संवृत्ता । किंच तत्र उवटादिभाष्यत्रय-रहस्य-दीपिकादिसंग्रहाभावाच्च सा विदुषां प्रीतयेऽलमितीयं पुनर्मुद्रिता । अस्यां च—

१ आनन्दज्ञानविरचितटीकासनाथम् ईशावास्यशाङ्करभाष्यम् ।
२ उवटार्य अथवा उवटाचार्यकृतम् ईशावास्यभाष्यम् ।
३ ब्रह्मानन्दकृतम् ईशावास्यरहस्यम् ।
४ शङ्करानन्दकृता ईशावास्यदीपिका ।

---

१ केषुचित्पुस्तकेषु 'आनन्दज्ञान' इति केषु चित्पुस्तकेषु 'आनन्दगिरि' रितिचोपलभ्यते तथापि तत्र न कश्चिद्भेदः । नामद्वयमेकस्यैवेति विदुषां मतम् ।

५ रामचन्द्रपण्डितकृता ईशावास्यरहस्यविवृतिः ।

६ आनन्दभट्टोपाध्यायकृतम् ईशावास्यभाष्यम् ।

७ अनन्ताचार्यकृतम् अथवा आनन्ताचार्यकृतम् ईशावास्यभाष्यम् ।

एतानि सप्त संगृहीतानि सन्ति । तत्र उवटार्य-आनन्दभट्टोपाध्याय-अनन्ताचार्यकृतं भाष्यत्रयं न केवलमस्या उपनिषद एव, अपि तु समग्राया अपि शुक्लयजुःसंहिताया भाष्याणि तैः कृतानीति अन्तिमवाक्यात्प्रतीयते । आनन्दभट्टोपाध्यायः अनन्ताचार्यश्च काण्वावेवेति प्रतीयते । उवटार्यस्तु माध्यन्दिनः । तेन तच्छाखापाठमाश्रित्यैव व्याख्यातम् । 'रहस्यविवृति' स्तु स्वतन्त्रैव । न सा ब्रह्मानन्दकृतरहस्यविवृतिः । तेन तु प्रथमं श्लोकरूपेण संक्षेपतो रहस्यं विरच्य तस्यैव विवृतिः कृतेति प्रतीमः । शुक्लयजुस्संहितायां सायणमाधवाचार्यकृतं महीधरकृतं च भाष्यद्वयं वर्तते । शार्मण्यदेशमुद्रितपुस्तके टिप्पणीरूपेण द्वयमपि संगृहीतम् । कालिकातामुद्रितपुस्तके महीधरभाष्यमेकमेव वर्तते । भाष्यद्वयमपीदं–प्रसिद्धत्वान्मुद्रितत्वात्सम्पत्यपि सुलभत्वाच्च नास्माभिः संगृहीतम् । स एष प्रयत्नो विदुषां मोदमावहन् सर्वत्र विजयतामित्याशास्ते—

तत्रभवदन्तेवासी—

**वामनशास्त्रिशर्मा.**

मुंबई,-गिरगांव मार्गशीर्ष
शुक्लप्रतिपत् १९१०.

---

ईशावास्योपनिषद आदर्शपुस्तकानि शुद्धीकरणार्थं येषां मिलितानि तेषां संज्ञा नामानि च प्रदर्श्यन्ते ।

( क. ) इति संज्ञितम्—ईशावास्यं सभाष्यं सटीकं बिब्लोथिकास्थं मुद्रितं कैलासवासिनां वे. शा. संपन्नदेवोपाह्वबालशास्त्रिणां तदधिकारिभिर्दत्तम् ।

( ख. ) इति संज्ञितम्—ईशावास्यं सभाष्यं सटीकं काश्यां शिलामुद्रितं रा. रा. महादेवचिमणाजी आपटे इत्येतेषाम् । मुद्रणकालः संवत् १९२९

( ग. ) इति संज्ञितम्—ईशावास्यभाष्यं पुण्यपत्तनवासिभिः श्रीयुतैः रा. रा. बाल्यासाहेब खाजगीवाले इत्येतैर्दत्तम् ।

(घ.) इति संज्ञितम्—ईशावास्यं सभाष्यं सटीकं वटोदरनिवासिभिः श्रीयुतैः पटवर्धनोपाह्वैः रा. रा. कृष्णरावभीमाशंकरैर्दत्तम् ।

(ङ.) इति संज्ञितम्—ईशावास्यं सभाष्यं सटीकम् इन्दूरपुरनिवासिभिः किबे इत्युपाह्वैः श्रीयुतैः रा.रा. भाऊसाहेब बाळासाहेब इत्येतैर्दत्तम् ।

(च.) इति संज्ञितम्—ईशावास्यं सभाष्यं सटीकं विंचूरपुरनिवासिभिः श्रीयुतैः रा. रा. रावसाहेब अण्णासाहेब इत्येतैर्दत्तम् । लेखनकालः शके १७३८

(छ.) इति संज्ञितम्—ईशावास्यं सभाष्यं सटीकं मुम्बापुरनिवासिनां वे. शा. संपन्नजयकृष्णमहाराजानां तदधिकारिभिर्दत्तम् ।

(ज.) इति संज्ञितम्—ईशावास्यं सभाष्यं सटीकं बडलींग्रामनिवासिभिः वे. शा. संपन्नैश्चिंदंबरदीक्षितकुलोत्पन्नमार्तण्डदीक्षितैर्दत्तम् ।

(झ.) इति संज्ञितम्—ईशावास्यं सभाष्यं सटीकं करवीरपुरनिवासिभिः श्रीयुतैः वे. शा. संपन्नैर्गुरुमहाराजैर्दत्तम् । लेखनकालः संवत् १८७५

(ञ.) इति संज्ञितम्—ईशावास्यं सभाष्यं करवीरपुरनिवासिभिः श्रीयुतैः वे. शा. संपन्नैः गुरुमहाराजैर्दत्तम् ।

(ट.) इति संज्ञितम्—ईशावास्यं सभाष्यं करवीरपुरनिवासिभिः वे. शा. संपन्नैर्द्रविडोपाह्वैर्नानाशास्त्रिभिः दत्तम् ।

(ठ.) इति संज्ञितम्—ईशावास्यं सभाष्यं सटीकम् अष्टेग्रामनिवासिभिः लिमये इत्युपाह्वैः रा० रा० गोविन्दशर्मभिर्दत्तम् ।

(ड.) इति संज्ञितम्—ईशावास्यं सभाष्यं सटीकम् उज्जयिनीक्षेत्रनिवासिभिः वेदशास्त्रज्ञैः सोरटीबुवा इति प्रसिद्धैर्दत्तम् ।

(ढ.) इति संज्ञितम्—ईशावास्यं पुण्यपत्तननिवासिभिः श्रीयुतैः रा०रा० भाऊसाहेब नगरकर इति प्रसिद्धैर्दत्तम् ।

(ख.) इति संज्ञितम्—ईशावास्यं सासवडग्रामनिवासिभिः श्रीमद्भिः पुरन्दरे इत्युपाह्वैः रा. रा. मल्हारराव इत्याख्यैर्दत्तम् । लेखनकालः शके १७६५

(क.) इति संज्ञितम्—उवटार्यकृतमीशावास्यभाष्यं समूलं विंचूरग्रामनिवासिभिः श्रीमद्भिः रा. रा. रावसाहेब इत्येतैर्दत्तम् ।

( ख. ) इति संज्ञितम्--उवटार्यकृतमीशावास्यभाष्यं वटोदरनिवासिभिः पटवर्धनोपाह्वैः श्रीमद्भिः रा. रा. कृष्णरावभीमाशंकरैर्दत्तम् ।

( क-ख. ) इति संज्ञिते—ब्रह्मानन्दसरस्वतीकृतेशावास्यरहस्ये समूले वटोदरनिवासिभिः पटवर्धनोपाह्वैः श्रीमद्भिः रा. रा. कृष्णरावभीमाशंकरैर्दत्ते ।

( क. ) —इति संज्ञितस्य लेखनकालः शके १७७१

( ग. ) इति संज्ञितम्—ब्रह्मानन्दसरस्वतीकृतमीशावास्यरहस्यं समूलं करवीरपुरनिवासिभिः वे. शा. संपन्नैः श्रीमद्भिर्गुरुमहाराजैर्दत्तम्।

( घ. ) इति संज्ञितम्—ब्रह्मानन्दसरस्वतीकृतमीशावास्यरहस्यं समूलं रा० रा० आपटे इत्युपाह्वैर्महादेवचिमणाजी इत्येतेषाम् ।

( क. ) इति संज्ञिता—शंकरानन्दकृता ईशावास्यदीपिका विंचूरग्रामनिवासिभिः श्रीमद्भिः रा. रा. रावसाहेब इत्याख्यैर्दत्ता ।

( ख. ) इति संज्ञिता—शंकरानन्दकृता ईशावास्यदीपिका मुम्बापुरनिवासिनां वे. शा. संपन्नजयकृष्णमहाराजानामधिकारिभिर्दत्ता ।

( ग. ) इति संज्ञिता—शंकरानन्दकृता ईशावास्यदीपिका वटोदरनिवासिभिः पटवर्धनोपाह्वैः श्रीमद्भिः रा. रा. कृष्णरावभीमाशंकराभिधैर्दत्ता ।

( घ. ) इति संज्ञिता—शंकरानन्दकृता ईशावास्यदीपिका त्रुटिता श्रीमद्भिः रा रा. भाऊसाहेब नगरकर इत्येतैर्दत्ता ।

( क. ) इति संज्ञिता—रामचंद्रपण्डितकृता ईशावास्यरहस्यविवृतिः समूला करवीरपुरनिवासिभिः वे. शा. संपन्नैः श्रीपुतैः गुरुमहाराजैर्दत्ता ।

( क. ) इति संज्ञितम्—आनन्दभट्टोपाध्यायकृतमीशावास्यभाष्यं समूलं बडलीग्रामनिवासिभिः वे. शा. संपन्नैः मार्तण्डदीक्षितैर्दत्तम् । लेखनकालः शके १७९०

( क. ) इति संज्ञितम्—अनन्ताचार्यकृतमीशावास्यभाष्यं समूलं बडलीग्रामनिवासिभिः वे. शा. संपन्नैर्मार्तण्डदीक्षितैर्दत्तम् ।

# ॐ तत्सद्ब्रह्मणे नमः ।

---

॥ अथ शाङ्करभाष्यम् ॥

**ईशा वास्यमित्यादयो मन्त्राः कर्मस्वविनियुक्तास्तेषामकर्मशेषस्यात्मनो याथात्म्यप्रकाशकत्वात् । याथात्म्यं चात्मनः शुद्धत्वापापविद्धत्वैकत्वनित्यत्वाशरीरत्वसर्वगतत्वादि वक्ष्यमाणम् । तच्च कर्मणा विरुध्येतेति युक्त एवैषां कर्मस्वविनियोगः । न ह्येवंलक्षणमात्मनो याथात्म्यमुत्पाद्यं**

## ॥ आनन्दगिरिटीका ॥

येनात्मना परेणेशा व्याप्तं विश्वमशेषतः ।
सोऽहं देहद्वयीसाक्षी वर्जितो देहतद्गुणैः ॥ १ ॥

ईशा वास्यमित्यादिमन्त्रान्व्याचिख्यासुर्भगवान्भाष्यकारस्तेषां कर्मशेषत्वशङ्कां तावद्व्युदस्यति । तथाहि कर्मजडाः केचन मन्यन्ते स्म । ईशा वास्यमित्यादयो मन्त्राः कर्मशेषा मन्त्रत्वाविशेषादिषे त्वादिमन्त्रवत् । अतः पृथक्प्रयोजनाद्यभावादव्याख्येया इति तान्प्रत्याह । **ईशा वास्यमित्यादय इति । कर्मस्वविनियुक्ता इति ।** इषे त्वेति शाखां छिनत्तीत्यादिवद्विनियोजकप्रमाणादर्शनात्प्रकरणान्तरत्वाच्चेत्यर्थः । श्रौतविनियोगाभावेऽपि बर्हिर्देवसदनं दामीत्यस्य बर्हिर्लवनप्रकाशनसामर्थ्याद्बर्हिर्लवने यथा विनियोगस्तथा कर्मशेषात्मप्रकाशनसामर्थ्येन कर्मस्वेषां विनियोग इत्यपि नाशङ्कनीयमित्याह । **तेषामिति ।** शुद्धादिविशेषणस्यात्मनः कर्मशेषत्वे प्रमाणाभावात्तद्याथात्म्यं न केवलं कर्मानुपयोगि किन्तु कर्मणा विरुध्यते चेत्याह । **याथात्म्यं चेति ।** शुद्धोऽहं स्वभावतो नागन्तुकेनापि पाप्मना विद्धः सर्वत्रैकोऽशरीर आकाशोपम इति जानन्न कटाक्षेणापि कर्म वीक्षते । किन्त्वापातप्रतिपत्तिरप्येतादृशी निरुणद्ध्येव कर्मप्रवृत्तिमित्यर्थः । किञ्च यः कर्मशेषः स उत्पाद्यो दृष्टो यथा पुरोडाशादिः । विकार्यः सोमादिः । आप्यो मन्त्रादिः । संस्कार्यो व्रीह्यादिस्तदुत्पाद्यादिरूपत्वं व्यापकं व्यावर्तमानमात्मयाथात्म्यस्य कर्मशेषत्वमपि व्यावर्तयति । तथात्मयाथात्म्यं कर्तृ भोक्तृ च न भवति । येन ममेदं समीहितसाधनं ततो मया कर्तव्यमित्यहङ्कारान्वयपुरःसरः कर्मान्वयः स्यादित्याह । **न ह्येवमिति ।** ननूपनिषदां जपोपयोगित्वादन्यस्य च प्रमाणस्यादर्शनो-

---

१ ( घ. ङ. छ. ज. ) °सर्व्यास्तत्र क°। २ ( च. ज. ( शुद्धत्वादि°। ३ ( क. ख. ग. ) °तो न तु के°। ४ ( घ. ङ. छ. ) °त्वाधिकारा°। ५ ( क. ख. ग. ) °नात्र निरूप्यमेव ।

शा० भा० विकार्यमाप्यं संस्कार्यङ्कर्तृभोक्तृरूपं वा येन कर्मशेषता स्यात्। सर्वासामुपनिषदामात्मयाथात्म्यनिरूपणेनैवोपक्षयात् । गीतानां मोक्षधर्माणां चैवंपरत्वात् । तस्मादात्मनोऽनेकत्वकर्तृत्वभोक्तृत्वादि चाशुद्धत्वपापविद्धत्वादि चोपादाय लोकबुद्धिसिद्धङ्कर्माणि विहितानि । यो हि

भा० टी० नास्त्येव । एतादृशमात्मयाथात्म्यं तत्राह । **सर्वासामिति** । यत्परः शब्दः सशब्दार्थ इति मीमांसाप्रसिद्धेः सर्वासामुपनिषदामैकात्म्ये तात्पर्यदर्शनान्न जपोपयोगित्वमुपनिषदां शक्यं वक्तुम् । तथाहि ईशा वास्यमित्युपक्रम्य स पर्यगाच्छुक्रमित्युपसंहारादनेजदेकं तदन्तरस्य सर्वस्येत्यभ्यासदर्शनान्नैनद्देवा आप्नुवन्नित्यपूर्वतासङ्कीर्तनात्को मोहः कः शोक एकत्वमनुपश्यत इति फलवत्तासङ्कीर्तनात्कुर्वन्नेवेहेति जिजीविषोर्भेददर्शिनः कर्मकरणानुवादेनासुर्या नाम त इति निन्द्यैकात्म्यदर्शनस्य स्तुतत्वात्तस्मिन्नपो मातरिश्वा दधातीति युक्त्यभिधानाच्चास्यास्तावदुपनिषद ऐकात्म्यतात्पर्यं दृश्यते । एवमन्यासामप्युपनिषदामुपक्रमोपसंहारैकरूप्याभ्यासापूर्वताफलवत्तार्थवादयुक्त्युपपादनानि षट् तात्पर्यलिङ्गानि विकल्पेन समुच्चयेन चास्माभिस्तत्त्वालोके दर्शितानीति नेह प्रतन्यन्ते । किञ्च प्रत्ययसंवादोऽपि बलवत्त्वे कारणं प्रसिद्धम् । विद्यते चोपनिषदर्थे गीतादिसंवादस्तस्मादुपनिषत्पदसमन्वयेनावगम्यमानमैकात्म्यं न प्रमाणान्तरानुपलम्भविरोधेनापलपनीयम् । यथेन्द्रियान्तरेणानवगम्यमानमपि रूपं चक्षुषावगम्यमानं नापह्नूयते तथैकात्म्यमपि नापह्नवार्हमित्याह । **गीतानामिति** । समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् । विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यतीत्यादिगीतानामेक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवदित्यादिमोक्षशास्त्राणां चैकात्म्यपरत्वादित्यर्थः । यद्येतादृशमात्मतत्त्वं तर्हि निरधिकारित्वात्कर्मकाण्डमुच्छिद्येतेत्यपि नाशङ्कनीयमित्याह । **तस्मादिति** । औपनिषदात्मयाथात्म्यविज्ञानवत इष्यत एव कर्मकाण्डाप्रामाण्यम् । यथा न हिंस्यात्सर्वा* भूतानीति निषेधशास्त्रार्थनिश्चयवत इष्यत एव श्येनादिविध्यप्रामाण्यम् । यथा च तीव्रक्रोधाक्रान्तस्वान्तं प्रत्येव श्येनादिविधिप्रामाण्यम् । तथा मिथ्यात्मदर्शिनं प्रत्येव कर्मविधिप्रामाण्यमित्यर्थः अत्र जैमिनिप्रभृतीनां सम्मतिमाह । **यो हीत्यादिना** । अर्थित्वादियुक्तस्य कर्मण्यधिकारः षष्ठेऽध्याये प्रतिष्ठापितः । अर्थित्वादि च मि-

१ (क. ख.) °ता त्वाभिधायिन्याश्चास्या° (ङ.) °ता नियुक्त्याभिधायिन्याश्चास्या°। २ (क. ख. ङ.) °वत्कार°। ३ (क. ख. ङ.) °धेनापलम्भनी°। ४ (क. ख.) °पह्नुवते।* (घ. ङ.) सर्वभूतानीत्यत्र बहुपुस्तकेषु सर्वाभूतानीत्येव पाठो दृश्यते स श्रुतिमूलक इत्यनुमीयते सर्वा इति सर्वाणीत्यर्थकमेवार्षत्वादिति ज्ञेयम् ।

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ । शान्तिः शान्तिः शान्तिः ।

हरिः ॐ । ईशा वास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् ।

शा०भा० कर्मफलेनार्थी दृष्टेन ब्रह्मवर्चसादिनाऽदृष्टेन स्वर्गादिना च द्विजातिरहं न काणकुब्जत्वाद्यनधिकारप्रयोजकधर्मवानित्यात्मानं मन्यते सोऽधिक्रियते कर्मस्विति ह्यधिकारविदो वदन्ति । तस्मादेते मन्त्रा आत्मनो याथात्म्यप्रकाशनेनात्मविषयं स्वाभाविकमज्ञानं निवर्तयन्तः शोकमोहादिसंसारधर्मविच्छित्तिसाधनमात्मैकत्वादिविज्ञानमुत्पादयन्ति । इत्येवमुक्ताधिकार्यभिधेयसम्बन्धप्रयोजनान्मन्त्रान्सङ्क्षेपतो व्याख्यास्यामः ॥

ईशा वास्यमित्यादि । ईशा ईष्ट इतीट् तेनेशा । ईशिता परमेश्वरः परमात्मा सर्वस्य । स हि सर्वमीष्टे सर्वजन्तूनामात्मा सन्प्रत्यगात्मतया तेन स्वेन रूपेणात्मनेशा वास्यमाच्छादनीयम् । किम् । इदं सर्वं यत्किञ्च यत्किञ्चिज्जगत्यां पृथिव्यां जगत्तत्सर्वं स्वेनात्मना ईशेन प्रत्यगात्मतयाहमेवेदं

आ०टी० थ्याज्ञाननिदानम् न हि नभोवन्निष्क्रियस्य स्वत एव दुःखासंसर्गिणः परमानन्दस्वभावस्य सुखं मे स्याद्दुःखं मे मा भूदित्यर्थित्वं शरीरेन्द्रियसामर्थ्येन च समर्थोऽहमित्यभिमानित्वं मिथ्याज्ञानं विना संभवतीत्यर्थः । यस्मादात्मयाथात्म्यप्रकाशका मन्त्रा न कर्मविधिशेषभूता न च मानान्तरविरुद्धास्तस्मात्प्रयोजनादिमत्त्वमपि तेषां सिद्धमित्याह । तस्मादेत इति । व्याख्येयत्वमुक्त्वा प्रतिपदं व्याचष्टे । ईशेति । ईश ऐश्वर्येऽस्य धातोः क्विपि लुप्ते कृदन्तरूपमीट् तस्य तृतीयैकवचनमीशेति । ननु कर्तरि क्विब्विधानात्परमात्मनश्चाविक्रियत्वात्कथं क्विबन्तशब्दवाच्यतेति तत्राह । ईशितेति । मायोपाधेरीशनकर्तृत्वसंभवात्क्विबन्तशब्दवाच्यता न विरुध्यते निरुपाधिकस्य च लक्ष्यत्वं भविष्यतीत्यर्थः । ईशित्रीशितव्यभावेन तर्हि भेदः प्राप्त इत्याशङ्क्याह । सर्वजन्तूनामात्मासन्निति । यथादर्शादिषु प्रतिबिम्बानामात्मा सन्बिम्बभूतो देवदत्त ईशिता भवति तथा कल्पितभेदेनेशित्रीशितव्यभावसंभवान्न वास्तवभेदानुमानं संभवतीत्यर्थः । वस आच्छादने । अस्य रूपं वास्यम् । तत्त्वत ईश्वरात्मकमेव सर्वं भ्रान्त्या यदनीश्वररूपेण गृहीतं तत्सर्वमीश्वर एवात्मैवेति ज्ञानेनाच्छाद-

१ ( क. ख. ग. ) °क कर्मविद्या° । २ ( क.ख. इ. ञ. ट. ) सन् तेन स्वेनात्म° । ३ ( क.ख. इ. ञ. ) °ना इ° । ४ ( क. ख. इ. ) °रमेश्वरस्य चाक्रि° ।

## तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥ १ ॥

शा०भा० सर्वमिति परमार्थसत्यरूपेणानृतमिदं सर्वं चराचरमाच्छादनीयं स्वेन परमात्मना । यथा चन्दनागर्वादेरुदकादिसम्बन्धजक्लेदादिजमौपाधिकं दौर्गन्ध्यं तत्स्वरूपनिघर्षणेनाच्छाद्यते स्वेन पारमार्थिकेन गन्धेन । तद्वदेव हि स्वात्मन्यध्यस्तं स्वाभाविकं कर्तृत्वभोक्तृत्वादिलक्षणं जगद्द्वैतरूपं जगत्यां पृथिव्यां जगत्यामित्युपलक्षणार्थत्वात्सर्वमेव नामरूपकर्माख्यं विकारजातं परमार्थसत्यात्मभावनया त्यक्तं स्यात् । एवमीश्वरात्मभावनया युक्तस्य पुत्राद्येषणात्रयसंन्यास एवाधिकारो न कर्मसु । तेन त्यक्तेन त्यागेनेत्यर्थः । न हि त्यक्तो मृतः पुत्रो वा भृत्यो वात्मसम्बन्धिताया अभावादात्मानं पालयत्यतस्त्यागेनेत्ययमेव वेदार्थः । भुञ्जीथाः पालयेथाः । एवं त्यक्तैषणस्त्वं मा गृधः गृ-

आ०टी० नायम् । सर्वात्मक ईश्वरोऽस्मीति ज्ञातव्यमेष तत्त्वोपदेशश्छान्दोग्ये तत्त्वमसीतिवदित्यर्थः । ब्रह्मैव सर्वमात्मैव सत्प्रकाशाविशेषतः । हेयोपादेयभावोऽयं न सन्स्वप्रवदीर्यते ॥ उक्तञ्च । न बन्धोऽस्ति न मोक्षोऽस्ति न विकल्पोऽस्ति तत्त्वतः । नित्यप्रकाश एवास्ति विश्वाकारो महेश्वरः ॥ इति यस्यौपदेशिकज्ञानमात्रेणानृतदृष्टिर्न तिरस्क्रियते तस्य विचारादिप्रयत्नेन तत्त्वप्रकाशे सत्यनृतदृष्टिस्तिरस्क्रियेतेत्यभिप्रेत्य दृष्टान्तमाह । **यथेति** । चन्दनागर्वादेरुदकादिसम्बन्धादार्द्रीभावादिना जातं यद्दौर्गन्ध्यमौपाधिकं मिथ्या तद्यथा तत्स्वरूपनिघर्षणाभिव्यक्तेन स्वाभाविकेन गन्धेनाच्छाद्यते तद्वद्विचारादेः स्वरूपसद्भावान्मिथ्याबुद्धेर्बाधकत्वं संभवतीत्याह । **तद्वदेव हीति** । स्वभावोऽनादिरविद्या तत्कार्यं स्वाभाविकमित्यादिबाधयोग्यत्वप्रदर्शनार्थं विशेषणम् । एवं विचारादिप्रयत्नवतोऽनृतदृष्टितिरस्कारसंभावनामुक्त्वा युक्त्यनभिज्ञस्य सर्वमिदमहं चेश्वर एवेति भावनायामधिकृतस्य युक्तिकुशलस्य च विचारेऽधिकृतस्य सर्वकर्मसंन्यास एवाधिकार इह मन्त्रे विवक्षितस्तेन त्यक्तेनेत्यत्र त्यागपरामर्शात् । त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदमित्यन्यत्राप्युक्तत्वात्पुत्राद्येषणायाश्चित्तविक्षेपहेतुत्वेन प्रसिद्धत्वाच्चेत्यभिप्रेत्याह । **एवमीश्वरात्मेति** । चिकीर्षितं संन्यासं स्तौति । **तेन त्यक्तेनेति** । त्यागेनात्मा रक्षितः स्यान्निष्क्रियात्मस्वरूपावस्थानानुकूलत्वात्त्यागस्येत्यर्थः । संन्यासिनः शरीरसन्धारणोपयुक्तकौपीनाच्छादनभिक्षाशनादिव्यतिरिक्तेऽपि कथञ्चिद् द्रव्यपरिग्रहेरागश्चेत्प्राप्नोति तन्निरोधे यत्नः कर्तव्यः । तस्य प्रधानविरोधित्वादित्यभिप्रेत्य नियमविधिमाह । **एवं त्यक्तैषण इति** । स्विदिति निपातस्य सामान्यार्थे-

१ ( क. ख. ग. झ. ञ. ट. ) °मेवार्थः। २ ( घ. ङ. ठ. ) °रादेव वस्तुबलस° ( ज. च. छ. °रादेर्वस्तुबलस°। ३ ( घ. ङ. छ. ज. ठ. ) °ति विधित्सितं सं°।

कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः ।

शा०भा० धिमाकाङ्क्षां मा कार्षीर्धनविषयाम् । कस्यस्विद्धनं कस्यचित्परस्य स्वस्य वा धनं मा काङ्क्षीरित्यर्थः । स्विदित्यनर्थकोनिपातः । अथवा मा गृधः । कस्मात् । कस्यस्विद्धनमित्याक्षेपार्थो न कस्यचिद्धनमस्ति यद्गृध्येत आत्मैवेदं सर्वमितीश्वरभावनया सर्वं त्यक्तमत आत्मन एवेदं सर्वमात्मैव च सर्वमतो मिथ्याविषयां गृधिं माकार्षीरित्यर्थः ॥ १ ॥

एवमात्मविदः पुत्राद्येषणात्रयसंन्यासेनात्मज्ञाननिष्ठतयात्मा रक्षितव्य इत्येष वेदार्थः । अथेतरस्यानात्मज्ञतयात्मग्रहणायाशक्तस्येदमुपदिशति मन्त्रः । कुर्वन्नेवेति । कुर्वन्नेव इह निर्वर्त्तयन्नेव कर्माण्यग्निहोत्रादीनि जिजीविषेज्जीवितुमिच्छेच्छतं शतसङ्ख्याकाः समाः संवत्सरान् । तावद्धि पुरुषस्य परमायुर्निरूपितम् । तथा च प्राप्तानुवादेन यज्जिजीविषेच्छतं वर्षाणि तत्कुर्वन्नेव कर्माणीत्येतद्विधीयते । एवमेवम्प्रकारेण त्वयि जिजीविषति नरे नरमात्राभिमानिनीति एतस्मादग्निहोत्रादीनि कर्माणि कुर्वतो वर्त्तमानात्प्रकारादन्यथा प्रकारान्तरं नास्ति येन प्रकारेणाशुभं कर्म न लिप्यते कर्मणा न लिप्यत इत्यर्थः । अतः शास्त्रविहितानि कर्माण्यग्निहोत्रादीनि कुर्वन्नेव जिजीविषेत् । कथं पुनरिदमवगम्यते । पूर्वेण मन्त्रेण संन्यासिनो ज्ञाननिष्ठोक्ता द्वितीयेन तदशक्तस्य कर्मनिष्ठेत्युच्यते । ज्ञानकर्मणोर्वि-

आ०टी० त्वेऽपि कस्यस्विदादि वितर्कार्थत्वमन्यत्र प्रसिद्धं तदिह न गृह्यत इत्यनर्थकमित्युक्तम् । व्यवहारदृष्ट्याप्यात्मन एवेदं सर्वं शेषभूतं जडस्य चित्परतन्त्रत्वादेनोऽप्राप्ते विषये नाकाङ्क्षा कर्त्तव्या । परमार्थतस्त्वात्मैव सर्वमित्याकाङ्क्षाविषय एव नास्तीत्यर्थः ॥ २ ॥

आद्यमन्त्रस्य पूर्वार्द्धेन तत्त्वोपदेशः कृतस्तृतीयपादेनापरिपक्वज्ञानस्य संन्यासविधिरुक्तश्चतुर्थपादेन संन्यासिनो नियमविधिरुक्त इति प्रतिपदं व्याख्याय संक्षिप्यार्थमनुवदत्युत्तरस्य सम्बन्धाभिवित्सया । एवमात्मविद इत्यादिना । पूर्वमन्त्रेण ज्ञानं विहितं यस्य तस्यैवोत्तरमन्त्रेण कर्म विहितं ततः समुच्चयानुष्ठाने तात्पर्यं मन्त्रद्वयस्येत्येकदेशीशङ्कामुद्भावयति । कथं पुनरिति । शुद्धब्रह्मज्ञानकर्मणोरेकाधिकारे विरुद्धत्वादनुगमनत्रिदण्डधर्मवदस्त्येव तत्रापि क्रमेणैककर्तृकत्वमितिचेन्न । विशिष्टरूपभेदाद्भिन्नाधिकारत्वात् । यथोक्तम् ज्ञानकर्मणोर्वेदविहि-

१ (क. ख. ङ. ञ.) °णाश°। २ (क. ख. ङ. ञ. ट.) °गुहावितम् । ३ (क. ख. ङ. ङ. ञ. ट.) °म् यथा प्रा°। ४ (क. ख. ङ. ञ. ट.) °रे त्व°। ५ (क. ख. ग.) °प्यस इ°। ६ (क. ख. च. ङ.) °दतः प्रा°।

एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥२॥

---

शा०भा० रोधं पर्वतवदकम्प्यम् यथोक्तं न स्मरसि किम् । इहाप्युक्तं यो हि जिजीविषेत् स कर्म कुर्वन् । ईशा वास्यमिदं सर्वं तेन त्यक्तेन भुञ्जीथामा गृधः कस्यस्विद्धनमिति च । न जीविते मरणे वा गृधिं कुर्वीतारण्यमियादिति च पदम् । ततो न पुनरियादिति संन्यासशासनात् । उभयोः फलभेदं च वक्ष्यति । इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः क्रियापथश्चैव पुरस्तात्संन्यासश्चोत्तरेण निवृत्तिमार्गेण एषणात्रयस्य त्यागः । तयोः संन्यासपथ एवातिरेचयति । न्यास एवात्यरेचयदिति च तैत्तिरीयके । द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो

भा०टी० तत्वेन शुद्धिसाम्याद्विरोधोऽसिद्ध इति तदसत् । ऋतुगमनत्रिदण्डिधर्मयोरप्यविरोधप्रसङ्गात् । तदुभयं नैकस्य विहितमिति चेत्तुल्यमेतत्प्रतिषेधात्तत्र न समुच्चय इति चेदिहापि न कर्मणा न प्रजया नानुध्यायाद्बहूञ्छब्दानित्यादिप्रतिषेधस्तुल्यः केवलकर्मविषयो निषेध इति न च वाच्यम् । केवलपदव्यवच्छेद्याभावात् समुच्चयविधेरप्यानिश्चितत्वात्तस्मान्न समुच्चये तात्पर्यं मन्त्रद्वयस्येत्याह । ज्ञानकर्मणोर्विरोधमिति कर्तृत्वाद्यध्यासाश्रयं कर्म शुद्धत्वाकर्तृत्वादिज्ञानेनोपमृद्यत इति सम्बन्धग्रन्थे यथोक्तं महानवस्थानलक्षणं विरोधं किन्न स्मरसि येनैकाधिकारत्वं तयोः कल्पयसीत्यर्थः । मन्त्रलिङ्गादपि तयोर्भिन्नाधिकारत्वं प्रतीयत इत्याह । इहाप्युक्तमिति । जिजीविषोरागिणः कर्म विहितं सर्वमीश्वर एवेति ज्ञानवतस्त्यागो विहितः । किञ्च धनसम्पन्नस्यैव कर्मण्यधिकारः । प्रथममन्त्रार्थाधिकारिणश्च धनाकाङ्क्षानिषेधेन कर्माधिकारनिषेधः प्रतीयत इत्यर्थः । जिजीविषा हि कर्माधिकारिण एव न ज्ञानाधिकारिण इत्यत्र प्रमाणमाह । न जीवित इति । अरण्यं विजनासङ्कीर्णमाश्रममियाद्गच्छेदितिपदं वेदशास्त्रस्थितिस्मृतेऽरण्यवासोपलक्षितात्संन्यासान्न पुनरियात्कर्मश्रद्धया न प्रत्यावृत्तिं कुर्यादिति जिजीविषारहितस्य संन्यासविधानादित्यर्थः । इतश्च नैकफलकामस्य ज्ञानकर्मणोरधिकारः प्रतिपत्तव्य इत्याह । उभयो रिति । को मोहः कः शोक एकत्वमनुपश्यत इति सनिदानानर्थप्रहाणं ज्ञानफलं वक्ष्यति । संसारमण्डलान्तर्गतमेव च देशान्तरप्राप्त्यायत्तं हिरण्यगर्भपदप्राप्त्यादिलक्षणं कर्मफलं वक्ष्यति । अग्ने नय सुपथेत्यन्तेनेत्यर्थः । नारायणोपनिषद्वाक्यमपि भिन्नाधिकारित्वे प्रमाणयति । इमौ द्वावेवेति ।

---

१ (क. ख.) 'ध्यायेद्'।

अमुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः।
ता ँ स्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥३॥

शा०भा० निवृत्तश्च विभावित इत्यादि पुत्राय विचार्य निश्चितमुक्तं व्यासेन वेदाचार्येण भगवता। विभागश्चानयोर्दर्शयिष्यामः॥ २॥

अथेदानीमविद्वन्निन्दार्थोऽयं मन्त्र आरभ्यते। असुर्याः परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुरास्तेषाञ्च स्वभूता लोका असुर्या नाम। नामशब्दोऽनर्थको निपातः। ते लोकाः कर्मफलानि लोक्यन्ते दृश्यन्ते भुज्यन्त इति जन्मानि। अन्धेनादर्शनात्मकेनाज्ञानेन तमसाऽऽवृता आच्छादितास्तान्स्थावरान्तान्प्रेत्य त्यक्त्वेमं देहमभिगच्छन्ति यथाकर्म यथाश्रुतम्। ये के चात्महनः। आत्मानं घ्नन्तीत्यात्महनः। के ते जनाः येऽविद्वांसः। कथं त आत्मानं नित्यं हिंसन्ति। अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात्। विद्यमानस्यात्मनो यत्कार्यं फलमजरामरत्वादिसंवेदनलक्षणं तद्धतस्येव तिरोभूतं भवतीति प्राकृताविद्वांसो जना आत्महन उच्यन्ते। तेन ह्यात्महननदोषेण संसरन्ति ते॥ ३॥

आ०टी० पुरस्तात्सृष्टिकालेऽनुनिष्क्रान्ततर्गे भूतसृष्टिमनुप्रवृत्तौ भिन्नाधिकारित्वादुभयोः संन्यास एवातिरिक्तः श्रेष्ठो भवति परमपुरुषार्थव्यवधानादित्यर्थः। व्यासवाक्यमपि संवादकमाह। द्वाविमाविति॥ २॥

आद्यमन्त्रार्थं प्रपञ्चयितुं प्रथममविद्वन्निन्दा क्रियत इत्याह। अथेति। ते लोका इति तच्छब्दो यच्छब्दार्थे। यथाश्रुतमिति। येन यादृशं प्रतिषिद्धं विहितं वा देवतादिज्ञानमनुष्ठितं स तदनुरूपामेव योनिमाप्नोतीत्यर्थः। आत्महन्तृत्वस्योदरभेदिति प्रसिद्धः कथमविद्वांस आत्महन इत्याह। कथं तइति। उदरभेदिनोऽध्यात्माधिकारे प्रसङ्गाभावादशुद्धत्वाध्यासेन तिरस्कार एवात्महन्तृत्वमित्याह। अविद्यादोषेणेति। यथा कस्यचित्कुटुम्बस्य मिथ्याभिशापोऽशस्त्रवध उच्यते तद्वदात्मनि पापित्वाद्यध्यासोऽपि हिंसैवेत्यर्थः। अजरामरत्वादिलक्षणोऽहमिति संवेदनमभिधानञ्च यत्कार्यं तद्धतस्येव न दृश्यत इति हननमुपचर्यत इत्याह। विद्यमानस्येति। अस्यात्मघातस्य प्रायश्चित्तविधानादर्शनात्संसरणमेव फलमित्याह। तेनहीति॥ ३॥

१ (क. ख.) 'वृत्तो च वि' (घ. ङ. च. ट. ठ.) 'वृत्तिश्च विभावित (छ. ञ.) 'वृत्तो चैव भावित। २ (ग.) 'नि योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति य'। ३ (ञ.) इति शङ्कते क'। ४ (घ. छ. ञ.) 'नो ह्यात्मा'। ५ (घ. ङ. च. ञ. ठ.) 'फलितमि'

# अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् ।

शा॰भा॰ यस्यात्मनो हननादविद्वांसः संसरन्ति तद्विपर्ययेण विद्वांसो जना मुच्यन्ते ते नात्महनः । तत्कीदृशमात्मतत्त्वमित्युच्यते । अनेजदिति । अनेजत् न एजत् । एजृ कम्पने । कम्पनं चलनम् स्वावस्थाप्रच्युतिस्तद्वर्जितं सर्वदैकरूपमित्यर्थः । तच्चैकं सर्वभूतेषु मनसः सङ्कल्पादिलक्षणात् जवीयो जववत्तरम् । कथं विरुद्धमुच्यते । ध्रुवं निश्चलमिदं मनसो जवीय इति च । नैष दोषः । निरुपाध्युपाधिमत्त्वेनोपपत्तेः । तत्र निरुपाधिकेन स्वेन रूपेणोच्यते अनेजदेकमिति । मनसोऽन्तःकरणस्य सङ्कल्पविकल्पलक्षणस्योपाधेरनुवर्त्तनादिह देहस्थस्य मनसो ब्रह्मलोकादिदूरगमनं सङ्कल्पेन क्षणमात्राद्भवतीत्यतो मनसो जविष्ठत्वं लोके प्रसिद्धम् । तस्मिन्मनसि ब्रह्मलोकादीन्द्रुतं गच्छति सति प्रथमं प्राप्त इवात्मचैतन्यावभासो गृह्यतेऽतो मनसो जवीय इत्याह । नैनद्देवा द्योतनाद्देवाश्चक्षुरादीनीन्द्रियाण्येतत्प्रकृतमात्मतत्त्वं नाप्नुवन्न प्राप्तवन्तः । तेभ्यो मनो जवीयो मनोव्यापारव्यवहितत्वात् । आभासमात्रमप्यात्मनो नैव देवानां विषयीभवति । यस्माज्जवनान्मनसोऽपि पूर्वमर्षत् पूर्वमेव गतम् । व्योमवद्व्यापित्वात् । सर्वव्यापि तदात्मतत्त्वं सर्वसंसारधर्मवर्जितं स्वेन निरुपाधिकेन स्वरूपेणाविक्रियमेव सदुपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीवाऽविवेकिनां मूढानामनेकमिव च प्रतिदेहं प्रत्यवभासत इत्येतदाह । तद्धावतो द्रुतं गच्छतोऽन्यानात्मविलक्षणान्मनोवागि-

आ॰टी॰ उत्तरमन्त्रमवतारयति । यस्यात्मन इत्यादिना । अविक्रियमेकञ्चेदात्मतत्त्वं कथन्तर्हि केचन स्वर्गगामिनः केचन नरकगामिन इति सांसारिकव्यवस्था स्यादिति चेन्मनउपाधिनिबन्धनेत्यभिप्रेत्याह । मनस इत्यादिना । उपाधेरनुवर्त्तनात् विक्रियादिव्यवहाराश्रयत्वमिति शेषः । ननु मनसो देहान्तःस्थत्वाद्बहिर्गमनायोग्यत्वात्कथं वेगवत्त्वमित्याशङ्क्याह । देहस्थस्येति । जवीयस्त्वादश्वादिवत्तर्हि चक्षुरादिप्राप्यत्वं प्राप्तमित्याशङ्क्याह । नैनद्देवाइति । चक्षुरादिप्रवृत्तेर्मनोव्यापारपूर्वकत्वात्तदविषयत्वे चक्षुरादिविषयत्वमप्यात्मनो न संभवतीत्यर्थः । मनसो वा कथं न विषय आत्मेत्यत आह । यस्मादिति । यथा मनस्थं परिमाणं मनसो न विषयोऽ-

१ (घ. ङ.छ.) °मर्शत्° । २ (क. ख.) °नं स्थिरत्वम° । ३ (क.ख.ग.ङ. च. छ.झ. ठ.) °जवीय° । ४ (ज.) °धिकः स्वे° । ५ (क. ख ग. ङ. च घ.ङ.) °रस्थसंकल्पनं क्ष° । ६ (घ.ङ.) °मर्षत् । ७ (ज.ठ.) इत्यत आह । ८ (ठ.) °रनिव° (क. ख. झ.) °रनुवर्त्तमाना° । ९ (घ. ङ. च. छ. ठ.) °त् क्रि° ।

तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥४॥ तदेजति तन्नैजति तद्दूरे तद्वन्तिके। तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

शा०भा० न्द्रियप्रभृतीनत्येति अतीत्य गच्छतीव। इवार्थं स्वयमेव दर्शयति। तिष्ठदिति। स्वयमविक्रियमेव सदित्यर्थः। तस्मिन्नात्मतत्त्वे सति नित्यचैतन्यस्वभावे मातरिश्वा मातरि अन्तरिक्षे श्वयति गच्छतीति मातरिश्वा वायुः सर्वप्राणभृत्क्रियात्मको यदाश्रयाणि कार्यकरणजातानि यस्मिन्नोतानि प्रोतानि च यत्सूत्रसंज्ञकं सर्वस्य जगतो विधारयितृ स मातरिश्वा। अपः कर्माणि प्राणिनां चेष्टालक्षणानि। अग्न्यादित्यपर्जन्यादीनां ज्वलनदहनप्रकाशाभिवर्षणादिलक्षणानि दधाति विभजतीत्यर्थः। धारयतीति वा। भीषास्माद्वातः पवत इत्यादिश्रुतिभ्यः। सर्वा हि कार्यकारणादिविक्रिया नित्यचैतन्यात्मस्वरूपे सर्वास्पदभूते सत्येव भवन्तीत्यर्थः ॥ ४ ॥

न मन्त्राणां जामिताऽस्तीति पूर्वमन्त्रोक्तमप्यर्थं पुनराह। तदेजतीति। तदात्मतत्त्वं यत्प्रकृतं तदेजति चलति तदेव च नैजति स्वतो नैव चलति स्वतोऽचलमेव सच्चलतीवेत्यर्थः। किञ्च तद्दूरे वर्षकोटिशतैरप्यविदुषामप्राप्यत्वाद्दूर इव। तत् उ अन्तिके इति च्छेदः तद्वन्तिके समीपेऽत्यन्तमेव विदुषामात्मत्वान्न केवलं दूरेऽन्तिके च। तदन्तरभ्यन्तरेऽस्य सर्वस्य। य आत्मा सर्वान्तर इति श्रुतेः। अस्य सर्वस्य जगतो नामरूपक्रियात्मकस्य तदु अपि सर्वस्यास्य बाह्यतो व्यापकत्वादाकाशवन्निरतिशयसूक्ष्मत्वादन्तः। प्रज्ञानघन एवेति च शासनान्निरन्तरं च ॥ ५ ॥

आ०टी० त्यन्ताव्यवधानात्तथात्माप्यत्यन्ताव्यवधानान्मनसो न विषयस्तद्व्यापकत्वादित्यर्थः। उक्तात्मसंभावनायामुपपत्तिमाह। तस्मिन्नात्मतत्त्वे सतीति। श्रौतानि कर्माणि सोमाज्यपयःप्रभृतिभिरद्भिः सम्पाद्यन्तइति संबन्धाल्लाक्षणिकोऽप्शब्दः कर्मसु प्राणचेष्टायाश्चाब्निमित्तत्वप्रसिद्धेः। कारणवाचकः शब्दः कार्ये लक्षणया प्रयुक्त इत्यर्थः। ईश्वरस्यापि हिरण्यगर्भस्य नियतप्रवृत्त्यन्यथानुपपत्त्याधिष्ठाता परमेश्वरः संभाव्यत इत्युक्तमिदानीं मातरिश्वग्रहणमुपलक्षणार्थमादाय तात्पर्यमाह। सर्वा हीति ॥ ४ ॥

जामिता आलस्यं व्यापित्वाद्बाह्यतोऽस्ति निरतिशयसूक्ष्मत्वादन्तश्चेदस्ति तर्हि निरन्तरमेकरसं न स्यान्मानाभावादित्याशङ्क्याह। प्रज्ञानघन एवेति ॥ ५ ॥

१ (घ. क. च. ठ.) इममर्थं। २ (ज. ठ.) °यंकार°। ३ (झ. ञ. ट.) °कंकर°। ४ (घ.च. छ.) °विक्रि°। ५ (क. ख. झ.) प्राणिचे°।

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥
यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥

शां॰भा॰ यस्तु । यः परिव्राड् मुमुक्षुः सर्वाणि भूतान्यव्यक्तादीनि स्थावरान्तान्यात्मन्येवानुपश्यत्यात्मव्यतिरिक्तानि न पश्यतीत्यर्थः । सर्वभूतेषु च तेष्वेव चात्मानं तेषामपि भूतानां स्वमात्मानमात्मत्वेन यथास्य देहस्य कार्यकारणसङ्घातस्यात्माऽहं सर्वप्रत्ययसाक्षिभूतश्चेतयिता केवलो निर्गुणोऽनेनैव स्वरूपेणाव्यक्तादीनां स्थावरान्तानामहमेवात्मेति सर्वभूतेषु चात्मानं निर्विशेषं यस्त्वनुपश्यति स ततस्तस्मादेव दर्शनान्न विजुगुप्सते विजुगुप्सां घृणां न करोति । प्राप्तस्यैवानुवादोऽयम् । सर्वा हि घृणात्मनोऽन्यद्दुष्टं पश्यतो भवत्यात्मानमेवात्यन्तविशुद्धं निरन्तरं पश्यतो न घृणानिमित्तमर्थान्तरमस्तीति प्राप्तमेव । ततो न विजुगुप्सत इति ॥ ६ ॥
इममेवार्थमन्योऽपि मन्त्र आह । यस्मिन्सर्वाणि भूतानि । यस्मिन्काले यथोक्तात्मनि वा तान्येव भूतानि सर्वाणि परमार्थात्मदर्शनादात्मैवाभूदात्मैव संवृत्तः परमार्थवस्तु विजानतस्तत्र तस्मिन्काले तत्रात्मनि वा को मोहः कः शोकः । शोकश्च मोहश्च कामकर्मबीजमजानतो भवति । न त्वात्मैकत्वं विशुद्धं गगनोपमं पश्यतः को मोहः कः शोक इति । शोकमोहयोरविद्याकार्ययोराक्षेपेणासंभवप्रदर्शनात् । सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति ॥ ७ ॥

आ॰टी॰ उक्तात्मज्ञानस्य फलं विधिनिषेधातीतजीवन्मुक्तस्वरूपेणावस्थानमित्याह । यस्त्विति ॥ ६ ॥
निरतिशयानन्दस्वरूपमत एव दुःखास्पृष्टमात्मानमजानतः शोको भवति हा हतोऽहं न मे पुत्रोऽस्ति न मे क्षेत्रमिति । ततः पुत्रादीन्कामयते तदर्थं देवताराधनादि चिकीर्षति न त्वात्मैकत्वं पश्यतस्ततोऽन्वयव्यतिरेकाभ्यां शोकादेरविद्याकार्यत्वावधारणान्मूलाविद्यानिवृत्त्यैव शोकादेरात्यन्तिकी निवृत्तिर्विद्याफलत्वेन विवक्षिता । लयमात्रस्य सुषुप्तेऽपि भावादित्याह । शोकश्च मोहश्चेत्यादिना ॥ ७ ॥

१ (घ.ञ.) 'त्मैवा' । २ विचिकित्सतीत्ययं पाठ उवटभाष्यपुस्तकस्थः। ३ (क.ख.घ.ङ. छ. ढ.ज.) 'मंबीजमज्ञान' ( च. ) 'मज्ञानवतो । ४ ( घ. ङ. च. छ. ) 'क मोहयोरित्या' ।

**स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम्। कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः॥ ८॥**

**अँन्धन्तमः प्रविशन्ति येऽविद्यामुपासते।**

---

शा॰भा॰ योऽयमतीतैर्मन्त्रैरुक्त आत्मा स स्वेन रूपेण किंलक्षण इत्याहायं मन्त्रः। स पर्यगात्स यथोक्त आत्मा पर्यगात्परि समन्तादगाद्गतवानाकाशवद्व्यापीत्यर्थः। शुक्रं शुद्धं ज्योतिष्मद्दीप्तिमानित्यर्थः। अकायमशरीरो लिङ्गशरीरवर्जित इत्यर्थः। अव्रणमक्षतं। अस्नाविरं स्नावाः शिरा यस्मिन्न विद्यन्त इत्यस्नाविरं। अव्रणमस्नाविरमित्याभ्यां स्थूलशरीरप्रतिषेधः। शुद्धं निर्मलमविद्यामलरहितमिति कारणशरीरप्रतिषेधः। अपापविद्धं धर्माधर्मादिपापवर्जितम्। शुक्रमित्यादीनि वचांसि पुल्लिङ्गत्वेन परिणेयानि। स पर्यगादित्युपक्रम्य कविर्मनीषीत्यादिना पुल्लिङ्गत्वेनोपसंहारात्। कविः क्रान्तदर्शी सर्वदृक्। नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतेः। मनीषी मनस ईषिता सर्वज्ञ ईश्वर इत्यर्थः। परिभूः सर्वेषां पर्युपरि भवतीति परिभूः। स्वयम्भूः स्वयमेव भवतीति येषामुपरि भवति यश्चोपरि भवति स सर्वः स्वयमेव भवतीति स्वयम्भूः। स नित्यमुक्त ईश्वरो याथातथ्यतः सर्वज्ञत्वाद्यथातथा भावो याथातथ्यं तस्माद्यथाभूतकर्मफलसाधनतोऽर्थान्कर्त्तव्यपदार्थान्व्यदधाद्विहितवान्यथानुरूपं व्यभजदित्यर्थः। शाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्य इत्यर्थः॥ ८॥

अत्राद्येन मन्त्रेण सर्वैषणापरित्यागेन ज्ञाननिष्ठोक्ता प्रथमो वेदार्थः। ईशा

---

भा॰टी॰ योऽयमिति। स्नुप्रस्रवणे धातुः। स्नावयन्ति शरीरमिति स्नावाः शिराः क्रान्तमतिक्रान्तं नष्टमित्युपलक्षणं भूतभाविष्यद्वर्तमानदर्शी॥ ८॥

प्रकरणविभागं दिदर्शयिषुर्वृत्तमनुवदति। अत्राद्येनेति। यदुक्तं भास्करेण

---

* उवटभाष्येशावास्यरहस्येशावास्यविवृतिषु तु नवमदशमयोर्मन्त्रयोर्द्वादशत्रयोदशयोश्च यथासङ्ख्यं वैपरीत्यं तथा चतुर्दशैकादशयोर्वैपरीत्यं तथाग्ने नयेति मन्त्रः षोडशः तथा वायुरनिलमिति पञ्चदशः किञ्च वायुरनिलमित्यस्योत्तरार्धस्थाने ॐ क्रतो स्मर क्लिबे स्मर कृतं स्मरेति तथा हिरण्मयेनेति सप्तदशः किञ्च हिरण्मयेनेत्यस्योत्तरार्धस्थाने योऽसावादित्ये पुरुषः सोऽसावहम्॥ १७॥ ॐ खं ब्रह्मेति तथा पूषन्नेकर्षे इति मन्त्रो नास्त्येव तथासुर्यानामेतिमन्त्रान्तर्गतप्रेत्याभिगच्छन्तीत्यस्य स्थाने प्रेत्यापि गच्छन्तीति पाठः तथा षष्ठमन्त्रस्थविजुगुप्सत इत्यस्य स्थाने विचिकित्सतीति पाठः किञ्च दशममन्त्रस्य पूर्वार्धस्य स्थाने अन्यदेवाहुर्विद्याया अन्यदाहुरविद्यायाः एवं पाठ इति ज्ञेयम्। १ (क.ख.ग.घ.) पुस्तके।

**ततो भूयइव ते तमो य उ विद्यायाᳪरताः ॥ ९ ॥**

शा० भा० वास्यमिदं सर्वं मा गृधः कस्य स्विद्धनमित्यज्ञानां जिजीविषूणां ज्ञाननिष्ठासंभवे कुर्वन्नेवेह कर्माणि जिजीविषेदिति कर्मनिष्ठोक्ता द्वितीयो वेदार्थः। अनयोश्च निष्ठयोर्विभागो मन्त्रप्रदर्शितयोर्बृहदारण्यकेऽपि प्रदर्शितः। सोऽकामयत जाया मे स्यादित्यादिना। अज्ञस्य कामिनः कर्माणीति मन एवास्यात्मा वाग्जायेत्यादिवचनात्। अज्ञत्वं कामित्वं च कर्मनिष्ठस्य निश्चितमवगम्यते। तथा च तत्फलं सप्तान्नसर्गस्तेष्वात्मभावेनात्मस्वरूपावस्थानं जायाद्येषणात्रयसंन्यासेन चात्मविदां कर्मनिष्ठाप्रातिकूल्येनात्मस्वरूपनिष्ठैव दर्शिता। किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इत्या-

भा० टी० सर्वोप्युपनिषदेकं ब्रह्मविद्याप्रकरणं ततः प्रकरणभेदकरणमनुचितमिति। तदसत्। प्राणाद्युपासनविधानस्याप्युपनिषत्सु दर्शनात्। न च तदपि ब्रह्मज्ञानाङ्गमिति वाच्यम्। पृथक्फलश्रवणात्[1]। तेनापि[2] व्याकृताव्याकृतोपासनसमुच्चयविधानस्य प्रकरणभेदेनेष्टत्वाद्व्याकृताव्याकृतोपासनस्य[3] प्रकारान्तरत्वात्तस्माद्यथा कर्मकाण्डेऽग्निहोत्रादिप्रकरणं भिन्नमेवेष्यते भिन्नाधिकारत्वात्तत्तत्कर्मणस्तथोपनिषत्स्वपि भिन्नाधिकारत्वात्कर्माविरुद्धतद्विरुद्धविद्याप्रकरणभेदो न विरुध्यते। मन्त्रार्थे ब्राह्मणसम्मतिं दर्शयितुमुपक्रमते। अनयोश्चेत्यादिना। तत्र वाक्ये कथमज्ञत्वमवगम्यत इत्याशङ्क्याह। मनएवेति। जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति कामयमानस्य सर्वथैव बाह्यो जायादिर्यदा न सम्पद्यते तदाध्यात्मजायादिसम्पत्तिं[4] दर्शयति। एतच्चाज्ञत्वलिङ्गं मनआदिष्वात्मत्वाद्यभिमानस्याज्ञानकार्यत्वात्। यथा च बाह्यकामिन्यलाभे सुप्तो मनोविजृम्भितकामिनीमुपभुञ्जानोऽज्ञः प्रसिद्धस्तद्वदयमपीत्यर्थः। तेषां च कर्मणां फलं सप्तान्नसृष्टिरित्यपि तत्रैव दर्शितमित्याह। तथा चेति। एकं साधारणमन्नं यदिदमद्यते द्वे देवानां हुतप्रहुते दर्शपूर्णमासौ वा त्रीण्यस्य[5] भोगसाधनानि मनोवाक्प्राणलक्षणानि पश्वर्थमेकं तत्पय इति सप्तान्नसर्गो दर्शितः श्रुत्या। यत्सप्तान्नानि मेधया तपसा जनयत्पितेत्यादिना। अत्रै[6]कैको यजमान एव विहितप्रतिषिद्धज्ञानकर्मानुष्ठानात्सर्वस्य संसारस्य साक्षात्पारम्पर्याभ्यां जनकत्वात्पितोच्यते। तेषु च सृष्टेष्वन्नेषु तस्य पितुरहमिदं ममेदमित्यात्मत्वाध्यासेन मनआदिष्वितरेषु च सम्बन्धाध्यासेनावस्थानं संसारः प्रसिद्ध इत्यर्थः। एवं मन्त्रप्रदर्शिते निष्ठाद्वये ब्राह्मणसम्मतिं दर्शयित्वा प्रकरणविभागं दर्श-

१ (च.) °वोसूपनिषत्स्वेकं। २ (क. ख. ङ.) °तुस्तेना° (ज.) तेन भास्करेणापि। ३ (घ. ङ. ठ.) °नस्यापक्रान्तत्वा° (छ. ज.) °प्रकान्तत्वा°। ४ (क. ङ.) °ध्यात्मसंप°। ५ (ङ. कः च. ञ. ठ.) त्रीणि स्वस्य। ६ (ज. ङ.) °त्रैको।

शा०भा० दिना । ये तु । ज्ञाननिष्ठाः संन्यासिनस्तेभ्योऽसुर्या नाम त इत्यादिनाऽविद्वन्निन्दाद्वारेणात्मनो याथात्म्यं स पर्यगादित्येतदन्तैर्मन्त्रैरुपदिष्टम् । ते ह्यत्राधिकृता न कामिन इति । तथा च श्वेताश्वतराणां मन्त्रोपनिषदि । अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टमित्यादि विभज्योक्तम् । ये तु कर्मिणः कर्मनिष्ठाः कर्म कुर्वन्त एव जिजीविषवस्तेभ्य इदमुच्यते । अन्धं तम इत्यादि । कथं पुनरेवमवगम्यते न तु सर्वेषामित्युच्यते । अकामिनः साध्यसाधनभेदोपमर्देन । यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यत इति । यदात्मैकत्वविज्ञानं तन्न केनचित्कर्मणा ज्ञानान्तरेण वा ह्यमूढः समुच्चिचीषति । इह तु समुच्चिचीषयाऽविद्वदादिनिन्दा क्रियते । तत्र च यस्य येन समुच्चयः संभवति न्यायतः शास्त्रतो वा तदिहोच्यते । यद्दैवं वित्तं देवताविषयं ज्ञानं कर्मसंब-

आ०टी० यति । ये तु ज्ञाननिष्ठाइत्यादिना । अत्याश्रमिभ्यइति । उत्तमाश्रमिभ्य इत्यर्थः । साध्यसाधनभेदोपमर्देन यदात्मैकत्वविज्ञानं यस्मिन्सर्वाणि भूतान्यात्मैवाभूदित्यत्रवाक्येनोक्तं पूर्वार्द्धेनोत्तरार्द्धेन च संसारनिवृत्तिफलकमुक्तं तन्न श्रौतेन स्मार्तेन वा कर्मणा केनचिदमूढः समुच्चिचीषति । अन्धन्तम इत्यादौ तु समुच्चिचीषयाऽविद्वदादिनिन्दा दृश्यते । ततः किमित्यत आह । तत्र च यस्येति । कस्य तर्हि ज्ञानस्य कर्मसमुच्चयः संभवतीत्यत आह । यद्दैवं वित्तमिति । यत्त्वोक्तं भास्करेण । ईशा वास्यमिति मन्त्रे ब्रह्मविद्यायाः प्रक्रान्तत्वात्तस्या एव समुच्चिचीषया निन्दोच्यत इति । तदसत् । न हि प्रकृतमित्येतावता संबध्यते किन्तु संबन्धयोग्यम् । शुद्धब्रह्मात्मैकत्वविद्यायास्तु कर्तृत्वाद्यध्यासोपमर्दकत्वान्नास्ति कर्मसंबन्धयोग्यता । किञ्च यस्मिन्निष्पन्नेऽपि फलस्य व्यवधानं संभाव्यते तस्यैव सहकारिसमुच्चय इष्यते दर्शादेरिह त्वेकत्वमनुपश्यतः को मोहः कः शोक इत्येकत्वदर्शनसमकालमेव मोहादिनिवृत्त्यभिधानान्न कालान्तरीयफलम् । ततो न सहकारिसमुच्चिचीषा । किञ्चास्या मन्त्रोपनिषदो ब्राह्मणे ब्राह्मणा विविदिषन्ति यज्ञेनेत्यादौ तृतीयाश्रुत्या यज्ञादिरिष्यमाणवेदने करणत्वेन संबन्धः प्रतीयते । तत्कथं दुर्बलेन प्रकरणेन सहकारितया संबन्धः प्रकल्प्यते । प्रधानस्य च विद्यायाः सहकारिसंबन्धविवक्षया निन्देत्यप्ययुक्तम् । अत एव चार्थान्धनाद्यनपेक्षेतिसूत्रविरोधश्च समुच्चयश्च परेणापि नेष्यते । विरोधेन च परिजह्रे तस्मात्कर्माविरुद्धदेवताज्ञानस्यैवात्र समुच्चयो विवक्ष्यते । ननु देवताज्ञानस्य कर्मफलाति-

१ (च.)°ते यथाद° (झ०)°दोर वेह° । २ (घ.ङ.ञ. ठ.) °किञ्च ब्राह्मणा वि°। ३ (च.ञ.) °ञ अर्थान्धनोपलक्षितकर्मसमस°। ४ (ए च. छ. ञ.)°न बाधायके त°(ङ.ठ.)°न बाधायकत्वे .[illegible]

अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥
विद्यां चाविद्यां च यस्तद्वेदोभयꣳसह ।

---

शा॰भा॰ न्धित्वेनोपन्यस्तं न परमात्मज्ञानम् । विद्यया देवलोक इति पृथक्फलश्रवणात् । तयोर्ज्ञानकर्मणोरिहैकैकानुष्ठाननिन्दा समुच्चिचीषया न निन्दापरैवैकैकस्य पृथक्फलश्रवणात् । विद्यया तदारोहन्ति । विद्यया देवलोकः । न तत्र दक्षिणायन्ति । कर्मणा पितृलोक इति । नहि शास्त्रविहितं किञ्चिदकर्तव्यतामियात् । तत्र अन्धन्तमः अदर्शनात्मकं तमः प्रविशन्ति । के । येऽविद्यां विद्याया अन्याऽविद्या तां कर्मेत्यर्थः । कर्मणो विद्याविरोधित्वात् । तामविद्यामग्निहोत्रादिलक्षणामेव केवलामुपासते तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः । ततस्तस्मादन्धात्मकात्तमसो भूय इव बहुतरमेव ते तमः प्रविशन्ति । के कर्म हित्वा ये उ ये तु विद्यायामेव देवताज्ञान एव रताः अभिरताः । तत्रावान्तरफलभेदं विद्याकर्मणोः समुच्चयकारणमाह । अन्यथा फलवदफलवतोः सन्निहितयोरङ्गाङ्गितैव स्यादित्यर्थः ॥ ९ ॥

अन्यदेवेत्यादि । अन्यत्पृथगेव विद्यया क्रियते फलमित्याहुर्वदन्ति विद्यया देवलोकः विद्यया तदारोहन्तीति श्रुतेः अन्यदाहुरविद्यया कर्मणा क्रियते कर्मणा पितृलोक इति श्रुतेः इत्येवं शुश्रुम श्रुतवन्तो वयं धीराणां धीमतां वचनम् । ये आचार्या नोऽस्मभ्यं तत्कर्म च ज्ञानं च विचचक्षिरे व्याख्यातवन्तस्तेषामयमागमः पारम्पर्यागत इत्यर्थः ॥ १० ॥

यत एवमतः विद्यां चा विद्यां च देवताज्ञानं कर्म चेत्यर्थः । यस्तदेतदुभ-

---

आ॰ टी॰ रिक्तफलाभावात्समुच्चयो न संभवतीत्यत आह । विद्ययेति । ननु समुच्चिचीषया निन्देति किमिति व्याख्यायते अध्ययनविधेर्मोक्षादर्वाक्पर्यवसानानुपपत्तेर्देवलोकादिप्राप्तेः फलाभासत्वात्प्रहाणार्थैव निन्दा किं नेष्यते तत्राह । तयोर्ज्ञानकर्मणोरिति । न फलशब्दो मोक्षे रूढो मोक्षमनिच्छतामपि स्वर्गादिषु फलव्यवहारदर्शनात्ततो यो देवलोकादिमुपादित्सते तस्य तदपि फलं भवत्येवेत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥

---

१ °विद्याया अन्य° । २ °विद्यायाः इ° । उवटभाष्यस्थाविमौ पाठौ । ३ (झ.ञ.ट.) °र्मणोऽविद्याविरोधाभावात् । (ग. घ. ङ. च. छ. ज. ठ.) एतच्चिह्नं नास्त्येव । ४ (ग.झ.ञ.ट.) °हितायां आमिते° (क.ख.) °हितया आमिते° । ५ (ज.) °स्वात्कर्मणः निन्दा मुण्डकादिषु [illegible] प्रदाः प्रहा° । (६ ज.) °पि वाञ्छतस° ।

अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥
अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते ।
ततो भूय इव ते तमो य उ संभूत्या[1] रताः ॥ १२ ॥
अन्यदेवाहुः संभवादन्यदाहुरसंभवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

शा०भा० यं संहकेन पुरुषेणानुष्ठेयं वेद तस्यैवं समुच्चयकारिण एव एकपुरुषार्थसंबन्धः क्रमेण स्यादित्युच्यते । अविद्यया कर्मणा अग्निहोत्रादिना मृत्युं स्वाभाविकं कर्म ज्ञानं च मृत्युशब्दवाच्यमुभयं तीर्त्वातिक्रम्य विद्यया देवताज्ञानेनामृतं देवतात्मभावमश्नुते प्राप्नोति । तद्ध्यमृतमुच्यते । यद्देवतात्मगमनम् ॥ ११ ॥

अधुना व्याकृताऽव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते । अन्धं तमः प्रविशन्ति ये असंभूतिं संभवनं संभूतिः सा यस्य कार्यस्य सा संभूतिः तस्या अन्या असंभूतिः प्रकृतिः कारणमविद्या अव्याकृताख्या तामसंभूतिमव्याकृताख्यां प्रकृतिं कारणमविद्यां कामकर्मबीजभूतामदर्शनात्मिकामुपासते ये ते तदनुरूपमेवान्धं तमोऽदर्शनात्मकं प्रविशन्ति । ततस्तस्मादपि भूयो बहुतरमिव तमः प्रविशन्ति य उ संभूत्यां कार्यब्रह्मणि हिरण्यगर्भाख्ये रताः ॥ १२ ॥

अधुनोभयोरुपासनयोः समुच्चयकारणमवयवफलभेदमाह । अन्यदेवेति । अन्यदेव पृथगेवाहुः फलं संभवात्संभूतेः कार्यब्रह्मोपासनादणिमाद्यैश्वर्यलक्षणं व्याख्यातवन्त इत्यर्थः । तथा चान्यदाहुरसंभवादसंभूतेरव्याकृतादव्याकृतोपासनाद्यदुक्तमन्धन्तमः प्रविशन्तीति प्रकृतिलय इति च पौराणिकैरुच्यत इत्येवं शुश्रुम धीराणां वचनं ये नस्तद्विचचक्षिरे व्याकृताव्याकृतोपासनफलं व्याख्यातवन्तइत्यर्थः ॥ १३ ॥

आ०टी० चित्तत्रा माया परमेश्वरस्योपाधिः । मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमित्यादिश्रुत्यन्तरप्रसिद्धाऽसंभूतिशब्देनोच्यते न ब्रह्म । तस्य निर्विकारस्य साक्षात्प्रकृतित्वानुपपत्तेः । भास्कराभिमतन्तु परिणामवादस्तत्त्वालोके निरस्त एवास्माभिः सांसारिकदुःखानुभवाभावेन च सुषुप्तिवत्प्रकृतिलयस्य पुरुषेणाप्यर्थ्यमानताऽप्युपपद्यते । फलं च कर्मोपासन इव प्रकृत्युपासनेऽपि परमेश्वर एव दास्यति । ततो जडत्वात्प्रकृतेः फलदातृत्वानुपपत्तेरुपास्यत्वानुपपत्तिरित्यपि कुचोद्यमेव ॥१२॥१३॥१४॥

1 (क. ख.) 'तितन्सत्या' ।

संभूतिं च विनाशं च यस्तद्वेदोभयꣳसह ।
विनाशेन मृत्युं तीर्त्वा संभूत्यामृतमश्नुते ॥ १४ ॥
हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥

शा॰भा॰ यत एवमतः समुच्चयः संभूत्यसंभूत्युपासनयोर्युक्तएवैकपुरुषार्थत्वाच्चेत्याह । संभूतिं च विनाशं च यस्तद्वेदोभयꣳसह । विनाशेन विनाशो धर्मो यस्य कार्यस्य स तेन धर्मिणाऽभेदेनोच्यते । विनाश इति तेन तदुपासनेनानैश्वर्यमधर्मकामादिदोषजातं च मृत्युं तीर्त्वा हिरण्यगर्भोपासनेन ह्यणिमादिप्राप्तिः फलम् । तेनानैश्वर्यादिमृत्युमतीत्यासंभूत्या अव्याकृतोपासनया अमृतं प्रकृतिलयलक्षणमश्नुते । संभूतिं च विनाशं चेत्यत्रावर्णलोपेन निर्देशो द्रष्टव्यः । प्रकृतिलयफलश्रुत्यनुरोधात् ॥ १४ ॥

मानुषदैववित्तसाध्यं फलं शास्त्रलक्षणं प्रकृतिलयान्तम् । एतावती संसारगतिः । अतःपरं पूर्वोक्तमात्मैवाभूद्विजानत इति सर्वात्मभाव एव सर्वैषणासंन्यासज्ञाननिष्ठाफलम् । एवं द्विप्रकारः प्रवृत्तिनिवृत्तिलक्षणो वेदार्थोऽत्र प्रकाशितः । तत्र प्रवृत्तिलक्षणस्य वेदार्थस्य विधिप्रतिषेधलक्षणस्य कृत्स्नस्य प्रकाशने प्रवर्ग्यान्तं ब्राह्मणमुपयुक्तम् । निवृत्तिलक्षणस्य वेदार्थस्य प्रकाशनेऽतऊर्ध्वं बृहदारण्यकमुपयुक्तं तत्र निषेकादिश्मशानान्तं कर्म कुर्वन् जिजीविषेद्यो विद्यया सहापरब्रह्मविषयया तदुक्तं विद्यां चाविद्यां च यस्तद्वेदोभयꣳसह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत इति तत्र केन मार्गेणामृतत्वमश्नुत इत्युच्यते । तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुष एतदुभयꣳसत्यं ब्रह्मोपासीनो यथोक्तकर्मकृच्च यः सोऽन्तकाले प्राप्ते सत्यात्मानमात्मनः प्राप्तिद्वारं याचते हिरण्मयेन पात्रेण । हिरण्मयमिव हिरण्मयं ज्योतिर्मयमित्येतत् । तेन पात्रेणेवापिधानभूतेन सत्यस्यैवादित्यमण्डलस्थस्य ब्रह्मणोऽपिहितमाच्छादितं मुखं द्वारं तत्त्वं हे पूषन्नपावृणवपसारय सत्य-

आ॰टी॰ विस्तरेणोक्तमर्थजातं सङ्क्षिप्योपसंहरति । मानुषदैववित्तसाध्यमित्यादिना । शरीरपाटवं गोभूहिरण्यादिसाधनसम्पत्तिश्च मानुषं वित्तम् । दैवं वित्तं देवताज्ञान-

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह। तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥ वायुरनिलममृतमथेदं भस्मान्त ँ शरीरम्।

शा०भा० धर्माय तव सत्यस्योपासनात्सत्यं धर्मो यस्य मम सोऽहं सत्यधर्मा तस्मै मह्यमथवा यथाभूतस्य धर्मस्यानुष्ठात्रे दृष्टये तव सत्यात्मन उपलब्धये ॥१५॥

पूषन्निति। हे पूषन्। जगतः पोषणात्पूषा रविस्तथैक एव ऋषति गच्छतीत्येकर्षिः। हे एकर्षे। तथा सर्वस्य संयमनाद्यमः। हे यम। तथा रश्मीनां प्राणानां रसानाञ्च स्वीकरणात्सूर्यः। हे सूर्य। प्रजापतेरपत्यम्प्राजापत्यः। हे प्राजापत्य। व्यूह विगमय रश्मीन्स्वान्। समूह एकीकुरु उपसंहर ते तेजस्तापकं ज्योतिः। यत्ते तव रूपं कल्याणतममत्यन्तशोभनं तत्ते तवात्मनः प्रसादात्पश्यामि। किञ्चाहं न तु त्वां भृत्यवद्याचे योऽसावादित्यमण्डलस्थो व्याहृत्यवयवः पुरुषः पुरुषाकारत्वात्पूर्णं वानेन प्राणबुद्ध्यात्मना जगत्समस्तमिति पुरुषः पुरि शयनाद्वा पुरुषः सोऽहमस्मि भवामि ॥ १६ ॥

वायुरिति। अथेदानीं मम मरिष्यतो वायुः प्राणोऽध्यात्मपरिच्छेदं हित्वाऽधिदैवतात्मानं सर्वात्मकमनिलममृतं सूत्रात्मानं प्रतिपद्यतामिति वाक्यशेषः। लिङ्गञ्चेदं ज्ञानकर्मसंस्कृतमुत्क्रामत्विति द्रष्टव्यम्। मार्गया-

आ०टी० मुत्तरग्रन्थस्य सम्बन्धाभिधित्सयार्थविशेषमनुवदति। तत्र निषेकादीत्यादिना। तदुक्तमिति तं प्रत्युक्तं मन्त्रेण विद्याञ्चेत्यादिनाऽऽपेक्षिकामृतत्वं फलमित्युक्तमस्माभिरिति योजना ॥ १५ ॥

व्याहृत्यवयव इति। तस्य भूरिति शिरः भुव इति बाहुः सुवरिति प्रतिष्ठा पादावित्यर्थः ॥ १६ ॥ १७ ॥

१ (च.) सत्यधर्मस्तस्मै। यद्यपि अयमेव पाठः मूलानुसारेण समीचीन इति भाति तथापि (च.) व्यतिरिक्तपुस्तकेषु सत्यधर्मा तस्मै इत्येव पाठ उपलब्धः अतः स एव शङ्कराचार्याभिप्रेत इति गम्यते कुत इति चेदुच्यते मूले सत्यधर्मायेति पदं वर्तते तत्तु भाषायां वैयाकरणरीत्या न सिध्यति किं तर्हि धर्मादनिच्केवलादिति पाणिनिसूत्रेण समासान्तानिच्प्रत्ययेन भाव्यम् तथा च सत्यधर्मणे इति स्यादत आचार्यैः सत्यधर्मायेत्यस्य आर्षत्वप्रदर्शनार्थं भाष्ये अनिजन्तसत्यधर्मशब्दस्य चतुर्थ्येकवचनस्य प्रदर्शितत्वादिति ज्ञेयम्। २ (ज.) 'यः परोक्षोऽसौ ज्ञाजकमा अन्नकः सु' ३ (च.) 'बाहूइति बाहू सु'।

ॐ क्रतो स्मर कृत ँ स्मर क्रतो स्मर कृत ँ स्मर ॥ १७ ॥
अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।

शां०भा० धनसामर्थ्यात् । अथेदं शरीरमग्नौ हुतं भस्मान्तं भूयात् । ओमिति यथोपासनम् ॐप्रतीकात्मकत्वात्सत्यात्मकमग्न्याख्यं ब्रह्माभेदेनोच्यते । हे क्रतो सङ्कल्पात्मक स्मर यन्मम स्मर्त्तव्यं तस्य कालोऽयं प्रत्युपस्थितोऽतः स्मर एतावन्तं कालं भावितं कृतमग्ने स्मर यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म तच्च स्मर । क्रतो स्मर । कृतं स्मरेति पुनर्वचनमादरार्थम् ॥ १७ ॥

पुनरन्येन मन्त्रेण मार्गं याचते । अग्ने नयेति । हे अग्ने नय गमय सुपथा शोभनेन मार्गेग । सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थम् । निर्विण्णोऽहं दक्षिणेन मार्गेण गतागतलक्षणेनातो याचे त्वां पुनः पुनर्गमनागमनवर्जितेन शोभनेन पथा नय । राये धनाय कर्मफलभोगायेत्यर्थः । अस्मान्यथोक्तधर्मफलविशिष्टान्विश्वानि सर्वाणि हे देव वयुनानि कर्माणि प्रज्ञानानि वा विद्वाञ्जानन् । किञ्च युयोधि वियोजय विनाशय अस्मदस्मत्तो जुहुराणं कुटिलं वञ्चनात्मकमेनः पापम् । ततो वयं विशुद्धाः सन्त इष्टं प्राप्स्याम इत्यभिप्रायः । किन्तु वयमिदानीं ते न शक्नुम परिचर्यां कर्त्तुं भूयिष्ठां बहुतराम् । ते तुभ्यं नमउक्तिं नमस्कारवचनं विधेम नमस्कारेण परिचरेम इत्यर्थः । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते । विनाशेन मृत्युं तीर्त्वा संभूत्याऽमृतमश्नुत इति श्रुत्वा केचित्संशयं कुर्वन्ति । अतस्तन्निराकरणार्थं सङ्क्षेपतो विचारणां करिष्यामः । तत्र तावत्किन्निमित्तः संशय इत्युच्यते । विद्याशब्देन मुख्या परमात्मविद्यैव कस्मान्न गृह्यतेऽमृतत्वञ्च । ननूक्तायाः परमात्मविद्यायाः कर्मणश्च विरोधात्समुच्चयानुपपत्तिः । सत्यम् । विरोधस्तु नावगम्यते विरोधाविरोधयोः शास्त्रप्रमाणकत्वात् । यथाऽविद्यानुष्ठानं विद्योपासनञ्च शास्त्रप्रमाणकं तथा तद्विरोधाविरोधावपि । यथा च न हिंस्यात्सर्वा भूतानीति शास्त्रादवगतं पुनः शास्त्रेणैव बाध्यतेऽ-

शां०टी० मन्त्रान्पदशो व्याख्याय सङ्क्षेपतो विचारमारभते । अविद्यया मृत्युं तीर्त्वेत्यादिना । अमृतत्वञ्चेति अमृतत्वञ्च मुख्यमेव कस्मान्न गृह्यत इति सम्बन्धः । शास्त्रीययोर्ज्ञानकर्मणोर्विरोधाविरोधौ शास्त्रीयावेव प्राप्तौ न तर्कमात्रेणेति परेणोक्ते

१ (घ. ङ. च. छ. ठ.) 'क म' । २ (ग.) प्रतीव ओमित्युच्य' । ३ (क.ख.घ.) 'मके-हम' । ४ (क. ख. ग. ञ. ट.) 'त्तामिधीर' । ५ (घ. ञ. ट. ढ.) 'स्यामसवेमू' । एतन्मन्त्रपुस्तकेषु सर्वाहत्येव पाठो दृश्यते अतः सर्वापीत्यर्थकत्वं इति पदपाठितवाक्यस्य श्रुतिस्वारस्य मनुष्यीको ।

युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥१८॥
इत्युपनिषद् ॥ इति वाजसनेयसंहितोपनिषत्संपूर्णा ॥
ॐ पूर्णमदः० शिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

शा० भा० ध्वरे पशुं हिंस्यादिति । एवं विद्याविद्ययोरपि स्यात् । विद्याकर्मणोश्च समुच्चयो न दूरमेते विपरीते विषूची अविद्या या च विद्येति[1] श्रुतेः । विद्यां चाविद्यां चेतिवचनादविरोध इति चेन्न । हेतुस्वरूपफलविरोधात् । विद्याविद्याविरोधाविरोधयोर्विकल्पासंभवात्समुच्चयविधानादविरोध एवेति चेन्न । सहसंभवानुपपत्तेः । क्रमेणैकाश्रये स्यातां विद्याविद्ये इति चेन्न । विद्योत्पत्तौ अविद्याया ध्वस्तत्वात्तदाश्रयेऽविद्यानुपपत्तेः । न ह्यग्निरुष्णः प्रकाशश्चेति विज्ञानोत्पत्तौ यस्मिन्नाश्रये तदुत्पन्नं तस्मिन्नेवाश्रये शीतोऽग्निरप्रकाशो वेत्यविद्याया उत्पत्तिर्नापि संशयोऽज्ञानं वा । यस्मिन्सर्वाणि भूतान्यात्मैवाऽभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यत इति शोकमोहाद्यसंभवश्रुतेः । अविद्यासंभवात्तदुपादानस्य कर्मणोऽप्य-

आ० टी० सिद्धान्ती शास्त्रसिद्ध एव विरोध इत्याह । न दूरमेत इति । विषूची नानागती विद्याऽविद्ये दूरं विपरीतेऽतिशयेन विरुद्धे इत्यर्थः । सहसम्भवानुपपत्तेरिति । कानुपपत्तिः । काठके विरोधश्रवणात् । तद्वत विद्याऽविद्ययोर्विरोधोऽस्तु इह त्वविरोधश्रवणादविरोधो भविष्यतीति न च वाच्यम् । विरोधाविरोधयोः सिद्धत्वेन विकल्पासंभवादुदितानुदितहोमयोरिव पुरुषतन्त्रत्वाद्युक्तो विकल्प इत्युक्तं तर्ह्यविरोध एवास्तु समुच्चयविधिबलादिति चेन्न । मुख्यब्रह्मविद्याविद्ययोः शुक्तिविद्याविद्ययोरिव सहसंभवानुपपत्तेः समुच्चयविधिरसिद्धः । सिद्धे समुच्चयविधौ तद्बलादविरोधावगमोऽविरोधावगमाच्च समुच्चयसिद्धिरित्यन्योन्याश्रयः स्यादित्यर्थः । सहसंभवानुपपत्तावपि क्रमेणैकाश्रये विद्याविद्ये स्यातामिति चेद्यदि पूर्वमविद्या पश्चात्तु विद्येति क्रमस्तर्हीष्यत एव यदि पश्चात्तदसंभव इत्याह । न विद्योत्पत्ताविति । पूर्वसिद्धाया अविद्यायाः प्रध्वस्तत्वादन्यस्याश्चोत्पत्तौ कारणासंभवान्मूलाभावेन भ्रमसंशयाग्रहणानामपि विदुषोऽनुपपत्तिरित्यर्थः । विद्योत्पत्तौ मा भूदविद्या कर्म तु भविष्यति विदुषोऽपि व्याख्यानभिक्षाटनादिदर्शनादित्याशङ्क्याह । अविद्यासंभवादिति । चोदनाप्रयुक्तानुष्ठानं हि कर्म ज्ञानेन सह तव समुच्चीयते

१ ( घ.ङ.च.छ.ज.ठ.ड. ) 'ति ज्ञातेति श्रु' । २ ( ज. ञ. ष. अ. ठ. ) 'श विरोधात्' । ३ ( क. ख. ङ. ड. ) 'भेदे इ' ।

शा०भा० नुपपत्तिमवोचाम । अमृतमश्नुत इत्यापेक्षिकममृतं विद्याशब्देन परमात्मविद्याग्रहणे हिरण्मयेनेत्यादिना द्वारमार्गादियाचनमनुपपन्नं स्यात्तस्मादुपासनया समुच्चयः न परमात्मविज्ञानेनेति यथाऽस्माभिर्व्याख्यात एव मन्त्राणामर्थ इत्युपरम्यते ॥ १८ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतौ वाजसनेयसंहितोपनिषद्भाष्यं संपूर्णम् ॥ ५ ॥
॥ ॐ तत्सत् ॥

---

भा०टी० ब्रह्मात्मैकत्वं तु साक्षादनुभवतो न चोदना संभवति कामाभावात्कामिनो हि सर्वाश्चोदनाः । अकामिनः क्रिया काचिद्दृश्यते नेह कस्य चित् । यद्यद्धि कुरुते[1] जन्तुस्तत्तत्कामस्य चेष्टितमिति स्मरणात् । विद्वच्छरीरस्थितिहेत्वविद्यालेशाश्रयकर्मशेषनिमित्तन्तु विदुषो भिक्षाटनादि । न कर्म । चोदनाभावात्किन्तु यावत्प्राणशरीरसंयोगभावि तत्कर्माभासं तच्च विद्वान्न स्वगतं मन्यते कर्माध्यासोपादानाविद्याया असंभवान्नैव किञ्चित्करोमीति प्रत्ययाच्चेति भावः । यदुक्तममृतशब्देन मुख्यमेवामृतत्वं किं न गृह्यते । विद्याशब्देन च परमात्मविद्येति तत्राह । अमृतमिति । मुख्यामृतत्वग्रहणे हिरण्मयादिमन्त्रेण द्वारमार्गयाचनमनुपपन्नं स्यात् । न तस्य प्राणा उत्क्रामन्त्यत्र ब्रह्म समश्नुत इत्यादिश्रुतेः[2] । ततो मुख्यार्थबाधाद्गौणार्थग्रहणं युक्तमित्यर्थः । यस्मादर्थान्तरं न सङ्गच्छते तस्मादित्युपसंहारः ॥ १८ ॥ ईशाप्रभृतिभाष्यस्य शाङ्करस्य परात्मनः । मन्दोपकृतिसिद्ध्यर्थं प्रणीतं टिप्पणं स्फुटम् । इति श्रीपरमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दभगवत्पूज्यपादशिष्यभगवदानन्दज्ञानकृता वाजसनेयसंहितोपनिषद्भाष्यटीका समाप्ता ॥ ॐ तत्सत् ॥

---

१ ( क. ख. ग. ज. ट. झ. ) 'र्माचरति' । २ ( घ. ङ. छ. ज. ठ. ) 'तेः किंचित्तत' । ३ ( घ. ङ. च. ज. ड. ) 'तेः अतोमुख्यार्थे बा' ।

# ॥ अथेशावास्यभाष्यम् उवटार्यकृतम् ॥

श्रीगणेशायनमः। ॐ। समाप्तं कर्मकाण्डं ज्ञानकाण्डमिदानीं प्रस्तूयते। ईशावास्यं तिस्रोऽनुष्टुभः। दध्यङ्ङाथर्वण ऋषिः स्वं शिष्यं पुत्रं वा गर्भाधानादिभिः संस्कारैः संस्कृतशरीरमधीतवेदमुत्पादितपुत्रं यथाशक्त्यनुष्ठितयज्ञमपापं निःस्पृहं यमनियमवन्तमतिथिपूजापनीतकिल्बिषं मुमुक्षुमुपसन्नं शिक्षयन्नाह। ईशा वास्यमिद ꣳ सर्वमिति। ईश ऐश्वर्ये क्विपि तृतीयान्तस्यैतद्रूपं यदीशानेन वास्यं वासनीयं ममेदमित्यनया भावनया आच्छादनीयमिदं सर्वमिति प्रत्यक्षतो निर्दिशति यत्किञ्च यत्किञ्चशब्दो भिन्नक्रमः किञ्च यज्जगत्यां पृथिव्यां जगज्जङ्गमादि स्वस्वामिसम्बन्धालिङ्गितं स्यात्तेनानेन सर्वेण त्यक्तेन त्यक्तस्वस्वामिसम्बन्धेन भोगान्भुञ्जीथा अनुभवेः। मा गृधः गृधुअभिकाङ्क्षायामिति माभिकाङ्क्षय मा कृथाः ममेदमिति। किं कारणं कस्य स्विद्धनं स्विदिति निपातो वितर्कवचनः। कस्य पुनरेतद्धनं न कस्यचिदपीत्यर्थ इत्यभिप्रायः। सर्वाण्ययथार्थानि हि द्रव्याण्युत्पद्यन्ते। तद्यथा स्त्रियं पतिरन्यथा भुङ्क्तेऽन्यथा पुत्रोऽन्यथा प्रोघूर्णकः। तथा च कटककेयूरकुण्डलादीन्यलङ्करणान्यन्यं चान्यं च पुरुषमुपतिष्ठमानानि दृश्यन्ते। अतः सर्वार्थस्य यः स्वस्वामिसंबन्धो ममेदमिति बुद्धिः सा त्वविद्या। निःस्पृहस्य योगेऽधिकार इति वाक्यार्थः॥ १॥

निस्पृहस्यापि योगिनो ज्ञाननिमित्ते कर्मण्यधिकार इत्येतमर्थमाह। कुर्वन्नेव। कुर्वन्नेव कर्माणि मुक्तिहेतुकानीहलोके जिजीविषेज्जिजीविषेरिति पुरुषव्यत्ययः प्रत्यक्षकृतत्वान्मन्त्रस्य जीवितुमिच्छेः पथ्यहितामितभक्षणेन शतं समा इत्युपलक्षणार्थम्। एवं त्वयि तवेति विभक्तिव्यत्ययः मुक्तिरस्तीति शेषः। नान्यथेतोऽस्ति इतः प्रकारादन्यथा मुक्तिर्नास्ति। एतदुक्तं भवति। यथा स्वर्गप्राप्तौ नानाभूताः प्रकाराः सन्ति न तथा मुक्तावित्यर्थः। ननु कर्मणः फलेन भवितव्यम्। अथ कथं मुक्तेः प्राप्तिरित्येतदाशङ्क्याह। न कर्म लिप्यते नरे। न हि मुक्त्यर्थं कर्म क्रियमाणं नरे मनुष्ये संबद्ध्यते मुक्तिदानेनोपक्षीणशक्तित्वात्। तथा च बृहदारण्यकम्। तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चेति। विविदिषन्ति वेदितुमिच्छन्ति अनेनैतद्दर्शयति यावदिच्छाप्रवृत्तिस्तावत्कर्मस्वधिकार इति॥२॥

---

१ (क.) 'चीर्णा'। २ (क.) प्रघूर्णकः। ३ (क.) 'त्वयं फलामन्त्र'।

इदानीं स्वर्गादिप्राप्तिहेतुभूतानि कर्माणि ये कुर्वन्ति ते निन्द्यन्ते । असुर्या नाम । असुर्याः परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुराः असुराणां स्वभूता एवं संज्ञकास्ते लोकाः । अन्धेन तमसा अज्ञानलक्षणेन तमसा आवृताः संवृतास्ताल्लोकांस्ते जनाः प्रेत्य मृत्वा अपि गच्छन्ति । ये के चात्महनो जनाः । ये जनाः आत्मानं निघ्नन्ति ये स्वर्गप्राप्तिहेतुभूतानि हि नूनं कर्माणि कुर्वन्ति ते हि जनित्वा म्रियन्ते मृत्वा जायन्ते एवं महतीं विनष्टिं प्राप्नुवन्ति ॥ ३ ॥

इदानीं यमनियमवतां मुमुक्षूणां यथाभूतं परं ब्रह्म आत्मत्वेनोपास्यं तदाह । उक्तं च । अहं ब्रह्मास्मि संबुद्ध्य इदं सर्वं च मन्मयम् । मयि विद्या समुद्दिष्टा विमुक्तिर्भवबन्धनीति । अनेजदेकं । त्रिष्टुप् यदनेजत् अचलत्तत्त्वमस्ति एकमद्वितीयं विज्ञानघनरूपेण मनसो जवीयः मनस्तावच्छीघ्रं भवति ततोऽपि शीघ्रतरं प्रसवदानेन कारणभूतत्वात् । नैनद्देवा आप्नुवन् । नचैतत्तत्त्वं देवा अपि प्राप्तुं शक्ताः सूक्ष्मत्वात् । पूर्वमर्शत् । रिशतिर्हिंसाकर्मा पूर्वं पूर्वमपि विद्यमानं सदर्शत् रिशतीति रिशश्च रिशदर्शत् । धातोरिकारलोपश्छान्दसः इकारलोपे कृते अर्शद्भवति अविनश्यदास्ते अनादिनिधनमित्यर्थः । तद्धावतः तदः स्थाने यदो वृत्तिः उद्देश्यत्वात् । यच्च धावतोऽन्यान् पुरुषादीनत्येति अतिक्रम्य गच्छति तथा तिष्ठत्सर्वत्र स्थितं सर्वगतत्वं सर्वशक्तित्वमनेन व्याख्यायते । तस्मिन्नपः । यस्मिन्नपः कर्माणि मातरिश्वा वायुर्दधाति स्थापयति सर्वाणि कर्माणि यज्ञदानहोमादीनि समिष्टयजूंषि वायौ स्थाप्यन्ते स्वाहा वातेधा इति वायुप्रतिष्ठत्वाभिधानात् । समष्टिव्यष्टिरूपो ह्यसाविति वायुरपि यस्मिन्कर्माणि स्थापयति यागहोमदानानां परमं निधानमित्यर्थः ॥ ४ ॥

एवं कारणरूपमात्मानमुद्दिश्याथेदानीं कार्यरूपेणोद्दिशति । तदेजति । अनुष्टुभस्तिस्रः तदेव सर्वरूपेणावस्थितं सदेजति कम्पवद्भवति क्रियावद्भवति तदेव नैजति न चलति स्थावररूपावस्थितं तद्दूरे तदेव दूरे आदित्यनक्षत्रादिरूपेण । तद्वन्तिके तदेव चान्तिके पृथिव्यादिरूपेण सर्वं खल्विदं ब्रह्मेत्येतदर्शनार्थो ग्रन्थः । तदन्तरस्य सर्वस्य प्राणिजातस्य विज्ञानघनरूपेणान्तर्मध्यत आस्ते तदु सर्वस्यास्य बाह्यतः । तदेव सर्वस्यास्य प्राणिजातस्य बाह्यतः जडरूपेण व्यवस्थितमास्ते चेतनाचेतनरूपमनन्तं सर्वगतं ब्रह्मेत्यर्थः । अस्या उपासनाया अचिरादिचिन्तनं नास्तीति के चिदाहुरिहैव ब्रह्मप्राप्तेः ॥ ५ ॥

यस्तु । तु शब्दो विशेषणार्थः यः पुनः सर्वाणि भूतानि चेतनाचेतनानि आत्मन्यात्मन्येवानुपश्यति मय्येव सर्वाणि भूतान्यवस्थितानि न मद्व्यति-

---

१ (क.) 'ब्र ह्मास्मि' ।

रिक्तान्यहमेव परं ब्रह्म सर्वभूतेषु चात्मानमवस्थितमव्यतिरिक्तं पश्यति ततो न विचिकित्सति । एवंपश्यतो योगिनो हि सर्वाणि भूतानि परब्रह्मरूपात्मा-त्मसंस्थितानि भवन्ति विज्ञानघनानन्दैकत्वादित्यतो विचारो निवर्तते ॥ ६ ॥

किञ्च । यस्मिन्सर्वाणि । यस्मिन्नवस्थाविशेषे सर्वाणि भूतानि चेतनाचेतना-न्यात्मैवाभूत्संभवति विजानतः आत्मैवेदं सर्वं । सर्वं खल्विदं ब्रह्मेत्येवमादि-वाक्यविचारणावधृतविज्ञानस्य कृतचेतसोऽवस्थाविशेषे तत्र तस्यामवस्थायां योगिनः को मोहः कः शोकः न कश्चिदपीत्यभिप्रायः । शोकमोहावपरिज्ञातत-त्त्वस्य भवतः न एकत्वमनुपश्यतः ध्यायतः ॥ ७ ॥

स पर्यगात् । जगती । य एवमात्मानमुपास्ते स पर्यगात्परिगच्छति शुक्रं शुक्रं विज्ञानानन्दस्वभावमचिन्त्यशक्तिमकायं न विद्यते कायः श-रीरं यस्य स तथोक्तः अव्रणं कायरहितत्वादेवास्नाविरं स्नायुरहितमकाय-त्वादेव शुद्धमनुपहतं सत्त्वरजस्तमोभिरपापविद्धं क्लेशकर्मविपाकाशयैरसंस्पृ-ष्टमकायमव्रणमस्नाविरमिति पुनरुक्तान्यभ्यासे भूयांसमर्थं मन्यन्त इत्यदोषः इत्थंभूतं ब्रह्म प्रतिपद्यते । अथात्मोपासनायुक्तस्य फलमाह । यश्च कविः क्रान्त-दर्शनः मनीषी मेधावी परिभूः सर्वतो भविता विज्ञानबलात्स्वयम्भूः स्वयं ज्ञानबलाद्ब्रह्मरूपेण भविता याथातथ्यतोऽर्थान्यद्यथायथास्वरूपमर्थान्विहि-तवान् । त्यक्तस्वस्वामिसंबन्धैरर्थैश्चेतनाचेतनैरुपभोगं कृतवान् । शाश्वती-भ्योऽनन्ताभ्यः समाभ्योऽर्थाय अनन्तवर्षप्राप्यं च कर्म कृतवान् । ननु कर्म-जाड्याल्लोकः कर्मवानेव भवति । सत्यमात्मसंस्कारकं तु कर्म ब्रह्मभावजनकं स्यात्तस्मात्सोऽपि गच्छति शुक्रमकायं ब्रह्म ॥ ८ ॥

इत उत्तरमुपासनामन्त्राः प्रोच्यन्ते । अन्धं तमः । षडनुष्टुभः लोकायतिकाः प्र-स्तूय निन्द्यन्ते येषामेतद्दर्शनं जलबुद्बुदवज्जीवाः मदशक्तिवद्विज्ञानमित्यन्धं तमः प्रविशन्ति । ये च असंभूतिमुपासते मृतस्य सतः पुनः संभवो नास्त्य-तः शरीरग्रहणादस्माकं मुक्तिरेव । न हि विज्ञानात्मा कश्चिदनुच्छेदिधर्मो-ऽस्ति यो यमनियमैः संबध्यते । एवं ये अध्वानमुपासते । ते अज्ञानलक्षणं तमः प्रवि-शन्ति । ततोऽपि भूयः बहुतरमिवानर्थकमन्धं तमः प्रविशन्ति । ये उ उकारः कर्मोपग्रहणार्थाय ये संभूत्यामेव रताः आत्मैवास्ति नान्यत्किञ्चिदस्तीत्यभि-प्रायः । कर्मपराङ्मुखाः यत्कर्मकाण्डज्ञानकाण्डयोरसंबन्ध इत्यभिप्रायः । स्व-बुद्धिफल्गुतां विभावयन्त आत्मज्ञानमात्र एव रताः ॥ ९ ॥

---

१ (क.) 'चित्ततय' ।

अन्यदेव । अन्यदेव फलमाहुः संभवात्संभवपरिज्ञानादन्यदाहुः फलमसंभवात् असंभवपरिज्ञानात् । इति एवं शुश्रुम श्रुतवन्तः वयं धीराणां वचांसि ये धीरानोऽस्माकं तद्ब्रह्म विचचक्षिरे व्याख्यातवन्तः ॥ १० ॥

संभूतिं च । समस्तस्य जगतः संभवैकहेतुं च परं ब्रह्म विनाशं च विनाशि च शरीरं यः योगी तदुभयमेव वेद जानाति सह एकीभूतं शरीरग्रहणेन ज्ञानोत्पत्तिहेतूनि कर्माणि करोति स विनाशेन विनाशिना शरीरेण मृत्युं तीर्त्वोत्तीर्य संभूत्या आत्मज्ञानेन विज्ञानेनामृतमश्नुते अमृतत्वं प्राप्नोति ॥ ११ ॥

अन्धं तमः प्रविशन्ति । अज्ञानलक्षणं तमः प्रविशन्ति ये अविद्यां स्वर्गार्थानि कर्माण्युपासतेऽनुतिष्ठन्ति ततोऽपि ते भूय इव बहुतरं तमः प्रविशन्ति । ये पुनर्विद्यायामेव रता आत्मज्ञान एव त्यक्तकर्माणो रताः ॥ १२ ॥

अन्यदेव । अन्यदेव फलमाहुः विद्याया आत्मज्ञानादन्यच्च आहुः अविद्यायाः कर्मण इति शुश्रुमेत्यादिव्याख्यातम् ॥ १३ ॥

विद्यां च । आत्मज्ञानं च अविद्यां कर्म च यस्तदुभयं वेद जानाति सह एकीभूतं कर्मकाण्डं ज्ञानकाण्डस्य गुणभूतमथ कर्मकाण्डं ज्ञानकाण्डं च एकीकृत्य अविद्यया कर्मकाण्डेन मृत्युं तीर्त्वोत्तीर्य कृतकृत्यो भूत्वा विद्यया ब्रह्मपरिज्ञानेनामृतत्वं मोक्षमश्नुते प्राप्नोति ॥ १४ ॥

इदानीमित्थं कृतब्रह्मोपासनस्य योगिनः शरीरपातोत्तरकाले यद्भवति तदाह । वायुरनिलं । वायुग्रहणमिन्द्रियाण्येकादश महाभूतानि पञ्च जीवात्मैकः एवं सप्तदशकलिङ्गोपलक्षणार्थं वायुः प्राणोऽनिलं स्वकीयां प्रकृतिमापद्यते अमृतं परं ब्रह्म तद्धि तद्विज्ञाय संपद्यते । अथेदं स्थूलशरीरं कीदृशं तदा भवति भस्मैव भवति कृतप्रयोजनकत्वात् । इदानीं योगिनः आलम्बनभूतमक्षरं कथ्यते ॐ नाम वा प्रतिमा वा ब्रह्मणः । इदानीमन्तकाले योगी स्मरणं करोति । क्रतो स्मर । योऽग्निर्ब्रह्मचर्यादारभ्य परिचरितः स मनःश्वासरूपेणावस्थितः संबोध्यते । हे क्रतो मां स्मरेदानीमुपस्थितः प्रत्युपकारस्य काल इत्यभिप्रायः। क्रतुर्वा यज्ञः संबोध्यते। क्रतो स्मर †क्लिबे स्मर कृप्ताय लोकाय स्मर कृतं स्मर मया यत्कृतं तत्स्मर ॥ १५ ॥

अग्ने नय । हे अग्ने नय सुपथा देवयानेन मार्गेण राये मुक्तिलक्षणाय धनायास्मान्विश्वानि सर्वाणि देव दानादिगुणयुक्त वयुनानि प्रज्ञानानि विद्वाञ्जानानः युयोधि पृथक्कुरु च प्रतिबन्धकमेनः । यतो बहुतरां तव नमस्कारोक्तिं कुर्मः व्याख्यातायाः पुनर्वचनं विशेषार्थम् ॥ १६ ॥

१ (क.) मनोऽस्ववासनारूपेणावस्थितः सं°। † क्लिबेतिवा.

हिरण्मयेन पात्रेण । इदानीमादित्योपासनमाह । यद्यपि हिरण्मयरूपेण पात्रेण पिबन्त्यस्मिन्नवस्थिताः रसाः रश्मय इति पात्रं मण्डलं मण्डलेन सत्यस्याविनाशिनः पुरुषस्यापिहितमन्तर्हितं मुखं शरीरं तथापि योऽसावादित्ये पुरुषो योगिभिरुपलभ्यते स असावहमस्मि । इत्थं चोपासनां कुर्यात् । ॐ खं ब्रह्म । ओमिति नामनिर्देशः । खमिति रूपनिर्देशः । आकाशरूपं ब्रह्म ध्यायेत् । आत्मत्वेन मनोभूरचेतन आकाश्चेतनस्त्वात्मा तद्यथा विज्ञानघनानन्दं ब्रह्म तत्रानन्दप्रतिपादकं वाक्यं । तथा स यो मनुष्याणां राद्धः समृद्धोभवतीत्युपक्रम्य अथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्द इत्यन्तम् । तथा सर्वनियन्तृत्वं दर्शयति । एतस्य वा अक्षरस्य प्रशासने गार्गीत्युपक्रम्य द्यावापृथिवी विधृते तिष्ठत इति । तथा सर्वज्ञत्वं दर्शयति । तद्यथा एतदक्षरं गार्गि अदृष्टं द्रष्टृ इत्यादि । तथा सत्यसङ्कल्पादयोऽस्य गुणाः श्रूयन्ते । सत्यसङ्कल्पः सत्यधृतिरित्यादयः । एवं तर्हि एतद्वै तदक्षरं गार्गि यस्मिन्नाकाश ओतश्च प्रोतश्चेति सामान्यादाकाशशब्देनैवैतद्रूपं ब्रह्माभिहितं स्यादित्ययमेव ब्रह्मवित्सिद्धान्तः ॥ १७ ॥ इति श्रीमद्वज्रटभट्टोपाध्यायात्मजसकलनिगमविचूडामणिश्रीमदुवटभट्टार्यविरचिते श्रीयजुर्वेदस्य वाजसनेयपञ्चदशभेदावान्तरमाध्यन्दिनशाखासंहितामन्त्रार्थप्रकाशभाष्ये चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥ समाप्तमिदमुवटार्यभाष्यम् ॥ ७ ॥

---

१ (क.) °ख सुषिर । २ (क.) °न तनुर° ।

# ॥ अथ ब्रह्मानन्दकृतम् ईशावास्यरहस्यम् ॥

ॐ येनात्मना परेणेशा व्याप्तं विश्वं चराचरम् ।
सत्यज्ञानस्वरूपेण तदेवाहं सदात्मकम् ॥ १ ॥
ईशा वास्यादयो मन्त्रा न कर्मप्रतिपादकाः ।
अखण्डैकरसे शुद्धे ब्रह्मण्येव समन्विताः ॥ २ ॥
कर्मसंबोधका वेदा न च ते ब्रह्मबोधकाः ।
इति मीमांसकाः प्राहुस्तन्न सत्यं कथञ्चन ॥ ३ ॥
अकर्मशेषमात्मानं निर्गुणं प्रकृतेः परम् ।
अशरीरं सदा मुक्तं नित्यं शुद्धस्वभावकम् ॥ ४ ॥
सत्यं ज्ञानमनन्तं च निष्कलं निष्क्रियं ध्रुवम् ।
बोधयन्ति यतः सत्यं सर्वे वेदाः षडङ्गकाः ॥ ५ ॥
अत एव हि ते मन्त्रा ब्रह्मतत्त्वप्रबोधकाः ।
ईशा ईशेन संव्याप्तं त्रैलोक्यं सचराचरम् ॥ ६ ॥
वासितं भुवनं सर्वं सत्यमेवं श्रुतिर्जगौ ।
यत्किञ्चित्सर्वमेवेदं जगत्यामुपलक्षणम् ॥ ७ ॥
जगद्ब्रह्मैव परमं ब्रह्मैवेदमिति श्रुतेः ।
यस्माद्ब्रह्मात्मकं सर्वं तस्मात्त्यक्तेन सर्वदा ॥ ८ ॥
पालयेथाः स्वमात्मानं स्वस्वरूपं निरञ्जनम् ।
त्यागशब्देन चाप्यत्र संन्यासः परिकीर्तितः ॥ ९ ॥
संन्यस्य सर्वकर्माणि ब्रह्मैवास्मीति भावयन् ।
रक्षणीयः स्वयं चात्मा संसारादज्ञकल्पितात् ॥ १० ॥
आत्मैवेदं जगत्सर्वं धनं नैवास्ति कस्यचित् ।
गृधिं वै धनविषयां मा कार्षीस्त्वं कथञ्चन ॥ ११ ॥
स्विदित्यनर्थको वात्र वाक्षेपो वा भविष्यति ।
आत्मभिन्नं परं स्वं किं कस्यचिद्विद्यते धनम् ॥ १२ ॥
सुगन्धचन्दनेनैव दुर्गन्धश्छाद्यते यथा ।
नामरूपात्मकं विश्वमात्मनाच्छादितं तथा ॥ १३ ॥
तस्मादात्मैव द्रष्टव्यः श्रोतव्यः सर्वदैव हि ।
इत्येष एव वेदार्थः प्रथमो वै निरूपितः ॥ १४ ॥

॥ इत्येको मन्त्रो व्याख्यातः ॥

सर्वकर्माणि संन्यस्य मन्तव्यः परमेश्वरः ।
तदशक्तस्य कर्माणि कर्तव्यानि श्रुतिर्जगौ ॥ १ ॥
अग्निहोत्रादिकर्माणि व्यवहारान्सदा नरः ।
कुर्वञ्जीवितुमिच्छेद्वै शतं संवत्सरान्स्वयम् ॥ २ ॥
तावद्धि पुरुषस्यायुः शतायुरिति च श्रुतेः ।
एवम्प्रकारे तु त्वयि नरमात्राभिमानिनि ॥ ३ ॥
प्रकारान्तरं नैवास्ति न कर्म लिप्यते यथा ।
ईश्वरार्पणबुद्ध्या तु कर्म कुर्वन्न लिप्यते ॥ ४ ॥
प्रसीदति परो ह्यात्मा शुद्धान्तःकरणे स्वयम् ।
इति द्वितीयमन्त्रार्थः सम्यगेव निरूपितः ॥ ५ ॥

॥ इति द्वितीयो मन्त्रो व्याख्यातः ॥

अविवेकात्तु संसारो विवेकान्नैव विद्यते ।
अविवेकनिवृत्त्यर्थं मन्त्रोऽयं संप्रवर्तते ॥ १ ॥
आत्मज्ञानमुपेक्ष्याथ देवा ये भोगलम्पटाः ।
असुरा एव ते ज्ञेया आत्मधर्मबहिष्कृताः ॥ २ ॥
येऽन्यथा संतमात्मानमकर्तारं स्वयम्प्रभम् ।
कर्ता भोक्तेति मन्यन्ते त एवात्महनो जनाः ॥ ३ ॥
स्वात्मनः स्वस्वरूपस्य तिरस्करणहेतुतः ।
अदर्शनात्मकेनैव चान्धेन तमसावृताः ॥ ४ ॥
प्रेत्य देहं परित्यज्य संसरन्ति पुनः पुनः ।
ये के च परमात्मानं न जानन्ति परात्परम् ॥ ५ ॥
योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥ ६ ॥
इति वाक्यं श्रुतिः शास्ति सत्यमेतन्न संशयः ।
अपि गच्छन्ति पाठे तु ज्ञानाभावे न चान्यथा ॥ ७ ॥
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ।
स्वात्मानं परमं ज्ञात्वा मुच्यते जन्मबन्धनात् ॥ ८ ॥

॥ इति तृतीयो मन्त्रो व्याख्यातः ॥

कीदृशं तत्परं तत्त्वं पूर्वमन्त्रेण कीर्तितम् ।
तदर्थप्रतिपत्त्यर्थं चतुर्थोऽयं प्रवर्तते ॥ १ ॥

अनेजत्परमं तत्त्वं स्वतश्चलनवर्जितम् ।
एजृ कम्पन इति च धात्वर्थोऽपि तथाविधः ॥ १ ॥
अचलं सततं ब्रह्म नित्यमुक्तस्वभावकम् ।
एकमेवाद्वितीयं च सत्यज्ञानस्वरूपकम् ॥ २ ॥
संकल्पलक्षणाद्यस्मान्मनसो वेगवत्तरम् ।
नैनत्तत्त्वं प्राप्नुवन्तो देवा ये चक्षुरादयः ॥ ४ ॥
पूर्वमेव हि संव्याप्तं व्योमवन्निर्मलं परम् ।
तद्धावतोऽन्यान्वेगेन सर्वान्व्याप्यैव तिष्ठति ॥ ५ ॥
तस्मिंस्तिष्ठति पूर्णेऽस्मिन्परे ब्रह्मणि केवले ।
अपः कर्माणि सर्वाणि मातरिश्वा दधाति च ॥ ६ ॥
अन्तरिक्षे स्वयं याति सूत्रात्मा पवनः स्वयम् ।
कर्म चैतत्फलं चैव धारयत्येव सर्वदा ॥ ७ ॥
इति सङ्क्षेपतो मन्त्रश्चतुर्थोऽपि समापितः ।
प्रसीदतु परो देवः सर्वभूतगुहाशयः ॥ ८ ॥

॥ इति चतुर्थो मन्त्रो व्याख्यातः ॥

न मन्त्राणां जामितादिदोषः कश्चन विद्यते ।
उक्तमेव वदत्यर्थं ब्रह्मतत्त्वप्रकाशकम् ॥ १ ॥
दुर्विज्ञेयं परं ब्रह्म सत्यज्ञानमनन्तकम् ।
निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ॥ २ ॥
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ।
इति वाक्यं यतः शास्ति ब्रह्म सत्यं पुनातु माम् ॥ ३ ॥
तदेजति परं ब्रह्म ब्रह्मविष्ण्वीशवात्मकम् ।
साकारं मायया भाति निराकारं तु वास्तवम् ॥ ४ ॥
उपाधिचलनेनैव चलनं तु विभाव्यते ।
तन्नैजति परं ब्रह्म निर्गुणं प्रकृतेः परम् ॥ ५ ॥
तद्दूरे परं ब्रह्म सर्वदैवाविवेकिनाम् ।
अप्राप्यत्वात्परं ब्रह्म वर्षकोटिशतैरपि ॥ ६ ॥
तदेव ह्यन्तिके ब्रह्म स्वात्मरूपं विवेकिनाम् ।
तद्बाह्याभ्यन्तरे ब्रह्म कार्यकारणवस्तुनः ॥ ७ ॥

---

१ (ख.) °क्षे भासतीति (ख.) स्वपितीति । २ (घ.) निष्कर्मं नि°

विश्वातीतं परं ब्रह्म विश्वस्याभ्यन्तरे स्थितम् ।
नीरूपं सर्वगं ज्ञात्वा मुच्यते जन्मबन्धनात् ॥ ८ ॥
इति पञ्चममन्त्रोऽयं समासेन निरूपितः ।
मायातीतं परं शुद्धं रहस्यं च प्रकीर्तितम् ॥ ९ ॥
॥ इति पञ्चमो मन्त्रो व्याख्यातः ॥
तद्ब्रह्म परमं शुद्धं कर्मणा नैव लभ्यते ।
कर्मत्यागी परं ब्रह्म प्राप्य सम्यक्प्रमुच्यते ॥ १ ॥
कर्मणा लभ्यते ब्रह्म ज्ञानान्नैव तदाप्यते ।
इति मीमांसकाः प्राहुस्तेषां पक्षो निरस्यते ॥ २ ॥
यस्तु सर्वाणि भूतानि परिव्राट् स्वयमेव हि ।
तानि सर्वाणि भूतानि स्वात्मन्येव प्रपश्यति ॥ ३ ॥
सर्वभूतेषु चात्मानं सर्वभूतगुहाशयम् ।
तस्मादेव तु विज्ञानान्न चैव विचिकित्सति ॥ ४ ॥
स्वस्वरूपपरिज्ञानात्सन्देहं न करोत्ययम् ।
माध्यन्दिनस्य पाठे तु व्याख्यानं परिकीर्तितम् ॥ ५ ॥
घृणा दया जुगुप्सा वा जायते भेददर्शिनः ।
न तु निर्भेदमद्वैतमात्मैकत्वं प्रपश्यतः ॥ ६ ॥
इति षष्ठोऽपि मन्त्रोऽयं समासेन मर्यादितः ।
अनेन प्रीयतां देवः सर्वभूतगुहाशयः ॥ ७ ॥
॥ इति षष्ठो मन्त्रो व्याख्यातः ॥
परिव्राडेव तद्वेत्ति स्वात्मानं प्रकृतेः परम् ।
इति प्रदर्शनार्थं तु सप्तमोऽयं प्रवर्तते ॥ १ ॥
यश्च संपश्यते ज्ञानं स वेत्ति परमेश्वरम् ।
इति शङ्कानिवृत्त्यर्थं तु शब्दोऽयं प्रवर्तते ॥ २ ॥
यस्मिन्ब्रह्मस्वरूपे तु निर्विकल्पे परेऽव्यये ।
सर्वाण्यात्मैव संवृत्तं ब्रह्मतत्त्वं विजानतः ॥ ३ ॥
ब्रह्मैव सकलं विश्वमहमस्मीति तत्पदम् ।
पद्यते गम्यते नित्यं स्वस्वरूपं स्वयंप्रभम् ॥ ४ ॥
शोकमोहादिसंबन्धस्तस्मिन्नैव तु विद्यते ।
अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिशासनात् ॥ ५ ॥

---

१ (ग.) °मंठेन च ल° ।

अविद्याकार्यनिर्मुक्ते संविद्रूपे परात्मनि ।
शोकमोहादिसंबन्धः कथं ब्रह्मणि भाव्यते ॥ ६ ॥
इत्ययं सप्तमो मन्त्रः स्वरूपप्रतिपादकः ।
सोऽहमस्मि स एवाहं ब्रह्मैवास्मीति वाक्यतः ॥ ७ ॥

॥ इति सप्तमो मन्त्रो व्याख्यातः॥

ब्रह्मात्मा सकलं विश्वं तस्मिन्विश्वं प्रतिष्ठितम् ।
जीवाज्ञानवशादेव चाश्रमोऽयं प्रवर्तते ॥ १ ॥
आत्मानं सर्वगं शुद्धं निरूपयितुमञ्जसा ।
आप्नोति सकलं कार्यं तस्मादात्मेति गीयते ॥ २ ॥
स पर्यगात्परो ह्यात्मा सर्वं व्याप्य व्यवस्थितः ।
यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ॥ ३ ॥
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।
इति मन्त्रो यतः शास्ति तस्माद्भेदो न विद्यते ॥ ४ ॥
निर्विभागः स्वयंज्योतिरात्मैव सकलं जगत् ।
शुक्रज्योतिःस्वभावोऽयं नित्यचिन्मात्रविग्रहः ॥ ५ ॥
लिङ्गदेहविनिर्मुक्तः सर्वभूतगुहाशयः ।
एकीभूतः स्वयं चात्मा सर्वं व्याप्य प्रतिष्ठितः ॥ ६ ॥
तमात्मानं परं शान्तं देहत्रयविवर्जितम् ।
निरिन्द्रियं परं ज्ञात्वा मुच्यते सर्वबन्धनात् ॥ ७ ॥
मायापाशविनिर्मुक्तं धर्माधर्मविवर्जितम् ।
मनसोऽपि नियन्तारं सर्वसाक्षिणमव्ययम् ॥ ८ ॥
उपर्युपरि सर्वेषां भवितारं स्वयंभुवम् ।
विभुं सर्वात्मकं ज्ञात्वा मुक्त एव भवत्यसौ ॥ ९ ॥
अथ वा स परो देवः सर्वव्यापी निरञ्जनः ।
सर्वगः सकलं व्याप्य स्वयमेव व्यवस्थितः ॥ १० ॥
व्यवहारेऽपि शुद्धोऽसौ देहद्वयविवर्जितः ।
बीजधर्मविनिर्मुक्तो नियन्ता सर्वदेहिनाम् ॥ ११ ॥
परिभवति कार्याणि परिभूः स्वयमेव हि ।
स्वातन्त्र्येण भवतीति स्वयंभूः पारविश्वदृक् ॥ १२ ॥

१ (ख.) °आत्मस°। २ (क. ग.) शुक्रं ज्यो°।

याथातथ्यत एवायं कर्तव्यार्थान्स्वयं प्रभुः ।
शाश्वतीभ्यः समाभ्यश्च प्रजापतिभ्य एव हि ॥ १३ ॥
प्रजाभ्यश्च विभज्यैव दत्तवान्परमेश्वरः ।
तदेवं परमात्मानं नित्यमुक्तस्वभावकम् ॥ १४ ॥
सोऽहमस्मीति विज्ञाय मुक्त एव भवत्ययम् ।
इत्येवमष्टमो मन्त्रः सम्यगर्थनिरूपकः ॥ १५ ॥
समाप्तः सर्वगो ह्यात्मा नित्यं सर्वस्वभावकः ।
सोऽहमस्मीति विज्ञाय मुच्यते सर्वतोभयात् ॥ १६ ॥

॥ इत्यष्टमो मन्त्रो व्याख्यातः ॥

संन्यस्य सर्वकर्माणि ज्ञातव्यः परमेश्वरः ।
इति प्रथमो वेदार्थः सम्यगेव प्रदर्शितः ॥ १ ॥
अग्निहोत्रादिकर्माणि तदशक्तेन सर्वदा ।
कर्तव्यानि द्वितीयोऽपि वेदार्थोऽयं प्रदर्शितः ॥ २ ॥
विरोधं दर्शयित्वा तु तयोरेव हि मन्त्रयोः ।
बृहदारण्यके शास्त्रे व्यवहारोऽपि दर्शितः ॥ ३ ॥
कामुकस्य तु संसारो निष्कामस्य परा गतिः ।
इति प्रदर्शनार्थस्तु नवमोऽयं प्रवर्तते ॥ ४ ॥
अन्धं मूढं तमो यान्ति ये मायां समुपासते ।
विरक्ता अपि संसारान्नैष्काम्यं ये विदुर्नराः ॥ ५ ॥
असंभूतिवचसात्र मायातत्त्वं प्रकथ्यते ।
मायातत्त्वात्तु संसारो जायते सर्वदेहिनाम् ॥ ६ ॥
भूयः पुनस्तमो यान्ति संभूत्यां ये रता नराः ।
संभवनं च संभूतिर्लिङ्गं सप्तदशात्मकम् ॥ ७ ॥
मायाबीजस्य कार्यं तत्सूत्रात्मानं प्रचक्षते ।
कार्यकारणनिर्मुक्तं ज्ञात्वात्मानं विमुच्यते ॥ ८ ॥
नवमोऽपि समाप्तोऽयं सङ्क्षेपार्थप्रदर्शकः ।
समुच्चयचिकीर्षार्थं दशमोऽपि प्रवर्तते ॥ ९ ॥

॥ इति नवमो मन्त्रो व्याख्यातः ॥

सम्भवादन्यदेवाहुः फलं कार्यस्य चिन्तनात् ।
कारणाद्बीजरूपस्य चिन्तनादन्यदेव हि ॥ १ ॥

इत्याहुर्वेदविद्वांसः फलभेदं विचक्षणाः ।
श्रुतवन्तो वयं पूर्वमाचार्याणां महात्मनाम् ॥ २ ॥
व्याख्यातवन्तो येऽस्मभ्यं गुरवस्तत्त्वदर्शिनः
तेषामेव हि तद्वाक्यं फलभेदप्रदर्शकम् ॥ ३ ॥
मतिभेदात्तु भेदोऽयं दर्शितो न तु वस्तुतः ।
धीराणां परमं वाक्यं ब्रह्मतत्त्वप्रदर्शकम् ॥ ४ ॥
सत्यं ज्ञानमनन्तं च ब्रह्मैव परमं ध्रुवम् ।
इत्थं दशममन्त्रोऽपि समासेन समापितः ॥ ५ ॥
॥ इति दशमो मन्त्रो व्याख्यातः ॥
संभूतिं कार्यरूपं च विनाशं कारणात्मकम् ।
एकादशोऽपि मन्त्रोऽयं तयोरैकत्वदर्शकः ॥ १ ॥
कार्यकारणयोरैक्यं यो वेद सततं नरः ।
विनाशेन मृत्युं तीर्त्वा संभूत्यामृतमश्नुते ॥ २ ॥
यस्मिन्विनश्यति कार्यं विनाशं कारणं परम् ।
मायाबीजं च तत्प्रोक्तं चैतन्यकवलीकृतम् ॥ ३ ॥
तयोपासनया मृत्युं तीर्त्वा स्वाभाविकं तमः ।
हिरण्यगर्भोपासनया संभूत्या मुच्यते बुधः ॥ ४ ॥
आत्मविद्यावधिः सोऽथ परं कारणमुच्यते ।
साक्षी चेता जगद्बीजमन्तर्यामीति च श्रुतौ ॥ ५ ॥
कार्यकारणरूपं च ब्रह्मैव केवलं शिवम् ।
कार्यकारणनिर्मुक्तं परं ज्ञात्वा विमुच्यते ॥ ६ ॥
इत्येकादशमन्त्रोऽपि समाप्तस्तत्त्वबोधकः ।
ब्रह्मैव परमं शुद्धं ब्रह्मैवाहं सदद्वयम् ॥ ७ ॥
॥ इत्येकादशो मन्त्रो व्याख्यातः ॥
कर्मणा बद्ध्यते जन्तुर्विद्यया च विमुच्यते ।
इति प्रदर्शनार्थं तु द्वादशोऽयं प्रवर्तते ॥ १ ॥
अन्धं मूढं तमो यान्ति केवलं कर्मचिन्तकाः ।
देवतोपासका ये च तेऽपि यान्ति पुनस्तमः ॥ २ ॥
एकैकोपासनां भिन्नां निन्दयित्वा पुनः पुनः ।
एकेनैव द्वयं सेव्यं श्रुतिराह पुनः स्वयम् ॥ ३ ॥

१ ( ख. ) सदाद्व° ।

इति द्वादशमन्त्रोऽपि समासार्थप्रदर्शकः ।
समापितः स्वयं शुद्धं ब्रह्मैवाहं सदद्वयम् ॥ ४ ॥

॥ इति द्वादशो मन्त्रो व्याख्यातः ॥

एकत्वं तु न चैवास्ति रविशार्वरयोरिव ।
पृथगेव दर्शयितुं कर्मविज्ञानजं फलम् ॥ १ ॥
त्रयोदशोऽपि मन्त्रोऽयं स्वयमेव प्रवर्तते ।
विद्याया अन्यदेवाहुः पृथगेव फलं बुधाः ॥ २ ॥
अविद्याया अन्यदाहुरग्निहोत्रादिकर्मणः ।
श्रुतवन्तो वयं वाक्यं धीराणां तत्त्वदर्शिनाम् ॥ ३ ॥
व्याख्यातवन्तो येऽस्मभ्यं गुरवो ब्रह्मतत्पराः ।
तेषां वाक्यं ब्रह्मतत्त्वबोधकं परमं ध्रुवम् ॥ ४ ॥
इति त्रयोदशो मन्त्रः पृथगर्थप्रदर्शकः ।
बोधको ब्रह्मतत्त्वस्य समासेन निरूपितः ॥ ५ ॥

॥ इति त्रयोदशो मन्त्रो व्याख्यातः ॥

पृथक्फलं विद्यते चेदग्निहोत्रादिकर्मणाम् ।
उपासनफलं चैव कथं वा क्रियते तदा ॥ १ ॥
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।
फलं सम्यक्प्रवक्तव्यं कैवल्यप्रतिपत्तये ॥ २ ॥
अग्निहोत्रं च विद्यां च देवतोपासनं परम् ।
एकीकृत्य चिन्तितं चेत्कैवल्यं लभते पदम् ॥ ३ ॥
पद्यते गम्यते चेति स्वस्वरूपं निरञ्जनम् ।
द्विविधं तत्परं ब्रह्म सगुणं निर्गुणात्मकम् ॥ ४ ॥
निर्गुणं वास्तवं ब्रह्म सगुणं परिकल्पितम् ।
कर्म विद्यां चैकीकृत्य यस्तद्वेदोभयं बुधः ॥ ५ ॥
मृत्युं तीर्त्वा कर्मणा तु विद्ययाऽमृतमश्नुते ।
हिरण्यगर्भमात्मानं ब्रह्मलोकनिवासिनम् ॥ ६ ॥
तं प्राप्य तेन सार्धं तु परं ब्रह्माधिगच्छति ।
इत्थं चतुर्दशो मन्त्रः सङ्क्षेपेण निरूपितः ॥ ७ ॥

॥ इति चतुर्दशो मन्त्रो व्याख्यातः ॥

उपासकफलं वक्तुं मन्त्रः पञ्चदशः स्वयम् ।
शाश्वतं कार्यरूपं च कृपया तत्परं पुनः ॥ १ ॥
तत्रैवोपासकः साक्षाद्वायुं प्रार्थयते स्वयम् ।
सूत्रात्मानं परं दिव्यममृतं शिवमव्ययम् ॥ २ ॥
प्राणो गच्छतु मे शीघ्रं लयं गच्छतु निश्चलम् ।
शाश्वतं शिवमव्यक्तं ब्रह्मैवाहं सनातनम् ॥ ३ ॥
अथेदानीं शरीरं मे भस्मीभवतु वै ध्रुवम् ।
अमृतात्मस्वरूपस्य ब्रह्मीभूतस्य केवलम् ॥ ४ ॥
क्रतो स्मर निर्बीजाय कृतं कर्म शुभाशुभम् ।
द्विरावृत्तिरादरार्था क्रतो संकल्प हे स्मर ॥ ५ ॥
कृतमुपासनं कर्म फलं दातुं च शाश्वतम् ।
सत्यं तत्परमं ब्रह्म नित्यमव्ययमेत्ययम् ।
इति पञ्चदशो मन्त्रः समाप्तः स्वार्थसाधकः ॥ ६ ॥

॥ इति पञ्चदशो मन्त्रो व्याख्यातः ॥

उपासकेन गन्तव्यं केन मार्गेण सांप्रतम् ।
इति प्रदर्शनार्थं तु षोडशोऽयं प्रवर्तते ॥ १ ॥
मन्त्रो मार्गं दर्शयितुं ब्रह्मलोकगतिं प्रति ।
अग्ने प्रकाशरूपोऽसि शोभनेन पथा नय ॥ २ ॥
प्रापयास्मान्महाभाग ब्रह्मलोकमनामयम् ।
विश्वानि देव सर्वाणि ज्ञानानि वयुनानि च ॥ ३ ॥
विद्वाञ्ज्ञानानामसि सर्वज्ञ प्रसीद वरदो भव ।
वियोजय जुहुराणं कौटिल्यं पातकं मम ॥ ४ ॥
अन्तकाले चरीकर्तुमशक्तास्ते परेश्वर ।
नमउक्तिं विधेम त्वं प्रसीद परमेश्वर ॥ ५ ॥
षोडशोऽपि च मन्त्रोऽयं सङ्क्षेपेण समापितः ।
निष्कलं ब्रह्म परमं तदेवाहं सदोस्मिति ॥ ६ ॥

॥ इति षोडशो मन्त्रो व्याख्यातः ॥

द्वारं विना कथं गन्तुं शक्यते ब्रह्म तत्परम् ।
सत्यलोकस्य चात्मानं सूत्रभूतं सनातनम् ॥ १ ॥

---

१ (ग.) ॰सनक॰ ।

तत्प्राप्तिसाधनद्वारं मन्त्रः सप्तदशः स्वयम् ।
प्रवर्तते प्रार्थयितुमादित्यं सर्वरूपकम् ॥ २ ॥
हिरण्मयेन पात्रेण सत्यस्य ब्रह्मणो मुखम् ।
तीक्ष्णेन ज्योतिषा व्याप्तं गन्तुं नैव तु शक्यते ॥ ३ ॥
रश्मिजालं निराकृत्य द्वारं मे देहि भास्कर ।
सत्यलोकस्य सत्याख्यं ब्रह्म गन्तुं च मे प्रभो ॥ ४ ॥
भृत्यवत्त्वां नैव याचे स्वरूपोऽहं तवाच्युत ।
अहं ब्रह्मैव परमं भवान्ब्रह्मैव केवलम् ॥ ५ ॥
आवयोरेकता नित्यं सत्यमेतद्ब्रवीम्यहम् ।
पूर्णत्वात्पुरुषश्चायं योऽसावादित्यमण्डले ॥ ६ ॥
देहेन्द्रियधियां साक्षी सोऽसावहमिति स्वयम् ।
ब्रह्म वै परमं शुद्धं ब्रह्मैवाहं सदद्वयम् ॥ ७ ॥
संपूर्णो निखिलस्यास्य कार्यकारणवस्तुनः ।
पुरुषोऽयं भवेदात्मा पूर्णत्वाद्योऽद्वयात्मकः ॥ ८ ॥
इति वाक्यं यतः शास्ति सत्यं ब्रह्मैव केवलम् ।
ब्रह्म सत्यं परं ज्ञात्वा मुच्यते जन्मबन्धनात् ॥ ९ ॥
इति सप्तदशो मन्त्रः समासेन निरूपितः ।
सत्यस्य परमं सत्यं ब्रह्म सत्यं च पातु माम् ॥ १० ॥
ईशावास्यरहस्यं तु ब्रह्मानन्दविनिर्मितम् ।
ब्रह्मानन्दमयं ज्ञात्वा मुच्यते सर्वबन्धनात् ॥ ११ ॥
ब्रह्मैव सत्यं परमं विशुद्धं सर्वान्तरस्थं सदसद्विहीनम् ।
निरञ्जनं निष्कलमद्वितीयं तदेव चाहं सततं विमुक्तः ॥ १२ ।

॥ इति सप्तदशो मन्त्रो व्याख्यातः ॥

इशावास्यरहस्यं च शुक्रतीर्थोत्तमे शुभे ।
रामानन्दसरस्वत्या लिखितं स्वात्मलब्धये ॥

इति श्रीब्रह्मानन्दसरस्वतीकृतमीशावास्यरहस्यं समाप्तम् ॥

# ॥ अथ शङ्करानन्दकृता ईशावास्यदीपिका ॥

ॐ ईशावास्यादयो मन्त्रा विनियुक्ता न कर्मणि ।
प्रमाणाभावतस्तेषां कुर्वे व्याख्यामकर्मगाम् ॥ १ ॥

ईशा ईष्टे इतीट् ईश्वर आनन्दात्मा तेन वास्यमाच्छादनीयं निवासयोग्यं वा इदं त्रिविधप्रत्ययगम्यं सर्वं निखिलम् । सर्वशब्दार्थमाह यत्किञ्च यत्किञ्चिद्भूतभौतिकं जगत्यां ब्रह्माण्डकटाहमध्ये जगच्चेतनाचेतनात्मकमीश्वर एवेदमिति बुद्धिः कर्तव्येत्यर्थः । तद्बुद्ध्युत्पादे साधनमाह । तेन जगता त्यक्तेन तद्बुद्ध्या गृहीतेन भुञ्जीथा ईश्वरतत्त्वसाक्षात्कारलक्षणं भोजनं कुर्याः । जगद्बुद्धेरनुत्पादे सर्वसङ्कल्पपरित्यागलक्षणमुपायमाह । मा गृधः माभिलाषं कार्षीः । अभिलाषो हि विषयघटितः विषयाश्चानेके तेषामन्यतमपरित्यागे उपायो माभूदित्येतदर्थमाह । कस्यस्विल्लौकिकद्वयस्यापि तत्र हेतुः धनमभिलाषस्य विषयो यः कश्चन धर्मोऽपि धनरूपः । धनं च हिरण्यादिकं सर्वक्लेशबीजं प्रसिद्धम् ॥ १ ॥

यस्त्वमुमुक्षुर्धनाभिलाषी नास्य त्यागेऽधिकार इति तं प्रति सकरुणा मातेव श्रुतिराह । कुर्वन्नेवेति । स्पष्टम् । इहास्मिन्कर्माधिकारे लोके कर्माणि नित्यान्यग्निहोत्रादीन्यन्यानि च जिजीविषेज्जीवितुमिच्छेच्छतं समाः । धने वैराग्याभावे यावदायुः शतसंवत्सरं न्यूनमधिकं वा । कर्मणां करणे कारणमाह । एवं शतसंवत्सरं यथोक्तकर्मानुष्ठानवति त्वयि अधिकारिणि वर्तमाने धनविषयेऽपि वैराग्यं भविष्यतीति शेषः । ननु यथा मुमुक्षोः कर्मपरित्यागेनैव पुरुषार्थसिद्धिस्तथान्यस्यापि स्यादित्यत आह । नान्यथेतोऽस्ति । इतः स्ववर्णाश्रमोचितयथोक्तानुष्ठानादन्यप्रकारेण मुमुक्षोरिव पुरुषार्थो नास्ति । नानुतिष्ठामि विपरीतेनानुतिष्ठामीत्यध्यासेन प्रसभमुपचीयमानदुरितत्वात्तदनुष्ठानं च तत्र भवतीत्याह । न कर्म विपरीतानुष्ठानरूपं लिप्यते न संबध्यते । कस्मिन्नरे यथोक्तकर्मानुष्ठानवति त्रैवर्णिकेऽधिकारिणि त्वयि । सूत्रभूतावेतौ मन्त्रौ । शिष्टमेतयोरेव व्याख्यानम् ॥२॥

मा गृध इत्यादेर्व्याख्यानमनेन मन्त्रेण धनाभिलाषवतां कष्टसंसारप्राप्तिरुच्यते । असुर्या नाम असुरसंबन्धिनः प्रसिद्धास्ते धनाभिलाषवतामात्मज्ञानशून्यानां ये श्वसूकरादिदेहरूपास्ते लोकाः कर्मफलरूपा देहविशेषा अन्धेन

---

१ (ग.) °मणाम् ।

तमसा क्लेशचतुष्टयानुविद्धेन पञ्चमेनान्धतामिस्रेणाहंममाभिनिवेशरूपेणावृताः संवृताः । तानुक्तांल्लोकांस्ते धनाभिलाषेणेश्वरज्ञानशून्याः प्रेत्येदमधिकारिशरीरं परित्यज्याभिगच्छन्ति सर्वतः प्राप्नुवन्ति । तच्छब्दार्थमाह । ये के चात्महनः आत्मानमीशं सर्वतः परिपूर्णं चिदानन्दं परेण धनरूपेण घ्नन्ति तिरस्कुर्वन्ति ये त आत्महन इदं सर्वमहमेवेति ज्ञानशून्या इत्यर्थः । जनाः संसारचक्रे पुनः पुनः प्रादुर्भाववन्तः ॥ ३ ॥

ईट् शब्दार्थमाह । अनेजत् । कम्पनमकुर्वदनेन वायुप्राणौ निराकृतौ । एकं देहादिभेदेन भेदशून्यमिदमित्थं चेत्स्यान्मनसा प्राप्यमित्यत आह । मनसो जवीयः मनसोऽपि वेगवत्तरम् । मनसा साक्षादनाप्यानामपि रूपादीनां चक्षुरादिभिराप्यत्वदर्शनादिदमपि तथास्त्वित्यत आह । नैनदिति । नैनदीश्वरस्वरूपं देवाश्चक्षुरादयः आप्नुवन्नधिगतवन्तः मनसा इन्द्रियैश्चानाप्यत्वेन । परिच्छेदशङ्कां मामां वारयति । पूर्वं प्रथममर्शद्गतवत्सर्वतो गतमित्यर्थः सर्वतोगतत्वे हेतुः । तदीश्वरस्वरूपं धावतो गतिं कुर्वतः अन्यान्कालवाय्वादीनत्येत्यतीत्य गच्छति । तर्ह्यप्येव किञ्चिदतिवेगवदित्यत आह तिष्ठद्गतिमकुर्वत् । इदानीमसाधारणलक्षणमाह तस्मिन्सर्वगत एकस्मिन्मनसेन्द्रियैश्चाप्राप्ये सर्वाधिके गतिशून्ये निश्चले अपः कर्माणि अध्यात्माद्याश्रयाणि शरीरारम्भादिकारणानि मातरिश्वा मातरि आकाशेऽव्याकृते श्वसिति सत्तां प्राप्नोति सूत्रात्मा स जीवसंज्ञो यः स मातरिश्वा प्रथमं कार्यं ज्ञानक्रियाशक्तिमित्यर्थः। दधाति विधारयति सूत्रात्मजनकत्वेन जगत्कारणं भवतीत्यर्थः ॥ ४ ॥

एवं मर्तामर्तविलक्षणमीशशब्दार्थमुक्त्वा प्रथमपादार्थमाह । तदीशस्वरूपमेजति मूर्तरूपेण कम्पते तदीश्वरस्वरूपं नैजति नैजत्याकाशादिरूपेण तदीशस्वरूपं दूरे एकस्य मूर्तस्यापेक्षया मूर्तान्तरेण रूपेण तदु ईश्वरस्वरूपमेव अन्तिके सर्वस्यापि समीपे । तदीश्वरस्वरूपमन्तर्मध्येऽस्य जगतः सर्वस्य निखिलस्य तदु सर्वस्यास्य व्याख्यातं बाह्यतः बहिरपि ॥ ५ ॥

तृतीयपादार्थमाह । यस्तु । तु शब्दो जगद्दृष्टिनिवारणार्थः । यो विरक्तो मुमुक्षुः सर्वाणि भूतानि स्पष्टम् । आत्मन्येव अस्मिन्नीशस्वरूपे आनन्दात्मनि स्वयंज्योतिष्येव । आत्मेश्वरयोर्भेदनिवारणार्थ एवकारः अनुपश्यति ईशा वास्यमित्यादिश्रवणानन्तरं मय्येवाध्यस्तानि सर्वाणि भूतानीमानीति साक्षात्करोति ।

१ ( क. ) °सर्वोयः । २( ग. ) °क्रिय°।

भूतान्यध्यस्तानि निरात्मकान्यात्मनोऽत्यन्तभिन्नानीति शङ्कां वारयति । सर्वभूतेषु चात्मानमात्मानमपि सर्वेषु भूतेषु वस्तुतस्त्वहमेवैतेषु भूतेष्ववस्थितो न मत्तोऽन्यान्येतानि भूतानीत्यर्थः । चकारोऽनुपश्यतीति क्रियासमुच्चयार्थः । तद्दर्शनफलमाह । तत आनन्दात्मा चिदेकरसोऽहमस्मि सर्वाभिन्न इति विज्ञानानन्तरं न विजुगुप्सते । किमपि न निन्दति स्तुतिनिन्दाशून्यो भवतीत्यर्थः ॥ ६ ॥

अत्रोपपत्तिमाह । यस्मिन्नीश्वरस्वरूपे आनन्दात्मनि सर्वाणि भूतानि । स्पष्टम् । आत्मैवाभूत्स्वं स्वं रूपं परित्यज्य कल्पितमकल्पितमानन्दात्मस्वरूपमेवाभूत् । भूतानामानन्दात्मभवने कारणमाह । विजानत ईशात्मकमिदमहमस्मीति विज्ञानवतः तत्र ईशात्मविज्ञातृस्वरूपे देशकालवस्तुपरिच्छेदशून्ये । क आक्षेपे । द्वैतभावो मोह आत्मावरणरूपकः क आक्षेपे पूर्ववत् । शोको विक्षेपरूपो दुःखवृक्षस्य बीजस्वरूपः सोऽपि कः आवरणविक्षेपयोरभावे स्तुतिनिन्दादिकं दूरापास्तमित्यर्थः । विजानत इति शब्दार्थमाह । एकत्वमनुपश्यतः । स्पष्टम् । ईश्वरस्वरूपमिदं सर्वमहमस्मीति विजानतः ॥ ७ ॥

आवरणविक्षेपयोरभाव उक्तः सोऽयमनुपपन्न ईश्वरस्याप्यात्मत्वाज्जीववच्छरीरादिसंबन्धः स्यादित्याशङ्क्य दृष्टान्ते साध्यवैकल्यं साध्यसमत्वं चाह । स ईश्वरस्वरूपाभिन्न आत्मा पर्यगा परितः समन्तादधिगतवान् । शुक्रं दीप्तिमद्दीप्तस्वरूपमहमस्मीति शुक्रविशेषणानि । अकायं कायः सूक्ष्मदेहो न विद्यते यस्य तदकायं तत्र हेतुरव्रणं व्रणश्छिद्रं भेद इत्यर्थः । न विद्यते व्रणो यस्य तदव्रणम् । स्थूले सति सूक्ष्मस्यापि संभाव्यत्वमित्यत आह । अस्नाविरं स्नावानि शिरा न विद्यन्ते यस्य तदस्नाविरं स्थूलशरीररहितमित्यर्थः । स्थूलशरीरराहित्ये हेतुः शुद्धं पुण्यपापादिरहितं पुण्यपापादिराहित्ये हेतुः अपापविद्धं पापं दुःखहेतुरविद्या न तेन विद्धमपापविद्धं यस्मादेतादृशं शुक्रमहमस्मीति स जीवः पर्यगात्तस्मात्सोऽप्येवंविशेषणः न तद्दृष्टान्तेनेश्वरस्य संसारित्वमित्यर्थः । अनेजदादिरूपं यदुक्तमीशस्वरूपं तदेवायं जीवोऽधिगन्ता पुंल्लिङ्गेनोक्तः अतस्तल्लिङ्गमुररीकृत्याह । कविः क्रान्तदर्श्यहं ब्रह्मात्मातिसमस्तार्थद्योऽस्मीति ज्ञानवानित्यर्थः । मनीषी सर्वस्य हृदि सत्त्वेन मनसो नियन्तृत्वात्तदीयाभिप्रायोऽस्यास्तीति मनीषी । परिभूः परितः समन्ताद्भवति विविधरूपैरविद्यावशादिति परिभूरविद्यां वा परिभावयतीति परिभूः स्वयंभूः कारणान्तरनिरपेक्षः स्वयमेव भवतीति स्वयंभूरविद्यादशायां याथातथ्यतः साध्यसाधनादिप्रतिनियतस्वरूपेणार्थांश्चेतनाचेतनात्मकविविधपदार्थान्व्यदधाद्विविधं कल्पितवान् । ज्योतिष्टोमेनैव स्व

र्गो न कृष्यादिनेत्यादिना शाश्वतीभ्यः समाभ्यः संवत्सराभिधाभ्यः अस्मिन्न-स्मिन्काल इदमिदं भविष्यतीत्यादिनेत्यर्थः ॥ ८ ॥

इदानीं यस्तूक्तमात्मतत्त्वं न जानाति न च संन्यासेऽधिकारी संसारे च नात्यन्तं प्रीतिमांस्तमुररीकृत्य द्वितीयं मन्त्रं चार्थाद्याकर्तुमाह । अन्धं तमः । अहं ममाभिमानरूपं प्रविशन्ति प्रकर्षेणाधिगच्छन्ति । के ये धनाभिलाषिणः प्रसिद्धाः द्वितीये मन्त्रेऽधिकारिणः अविद्यां कर्मविधिनिष्पाद्यं ज्योतिष्टोमादि उपासते तदेकनिष्ठाः सन्तो विद्यामनुतिष्ठन्ति । ननु तर्हि त्याज्यं कर्म उपास्याश्च देवता अथवाहंब्रह्मास्मीति वक्तव्यमित्यत आह । ततस्तस्मादुक्ताद्भूय इवाधिकमिव ते देवतोपासका मुख्यतो ब्रह्मवादिनो वानुत्पन्नसाक्षात्काराः कर्मत्यागिनस्तमः अहंममाभिमानरूपं प्रविशन्तीत्यनुषङ्गः । य उ ये तु विद्यायां देवताज्ञाने केवले आत्मज्ञाने वा रतास्तदेकनिष्ठाः ॥ ९ ॥

ननूभयोर्निन्दायामुभयमप्यफलमित्यत आह । अन्यदेव । कर्मणः फलात्पितृयानलक्षणात्पृथगेव देवयानलक्षणमात्मप्राप्तिलक्षणं वा । अन्यच्छब्देन सफलत्वमेवशब्देनाङ्गाङ्गिभावोनिषेध आहुः कथयन्ति । विद्यया देवताज्ञानेनात्मज्ञानेन वा अन्यद्विद्याफलात्पृथग्भूतम् । अत्र एवकाराभावादात्मज्ञानोत्पादकत्वमपि कर्मणामवगम्यते । आहुः कथयन्ति अविद्यया द्वितीयमन्त्रोक्तेन कर्मणा इति अस्ति विद्याकर्मणोः फलम् । नचात्राङ्गाङ्गिभावोऽपि शङ्कनीयः । अन्यदन्यच्च तदित्यनेन प्रकारेण शुश्रुम श्रुतवन्तः । मन्त्रद्रष्टुरिदं वाक्यम् । धीराणां पूर्वोत्तरतन्त्रन्यायकुशलानां वेदविदाम् । तानाह । ये गुरवो नः अस्मभ्यमेतद्ब्रह्म कर्मसहितं विचचक्षिरे व्याख्यातवन्तः ॥ १० ॥

एवं पक्षद्वयं च[1] वेधन्वादिना सफलं चाभिधायेदानीं देवताज्ञानस्य शाब्दस्य वा ब्रह्मज्ञानस्य कर्मणा सह समुच्चयमाह । विद्यां च देवताज्ञानं कोमलं ब्रह्मज्ञानं वा । अविद्यां च द्वितीयमन्त्रोक्तानि कर्माणि । चकारावुपायोपेयभावेन समुच्चयार्थौ । यः संजातवैराग्यः कर्म परित्यक्तुमशक्तोऽन्तरालावस्थस्तत्कर्म ज्ञानं च वेद जानाति । उभयमुक्तमुपायोपेयभावेन सह कर्मोपायं ब्रह्मज्ञानमुपेयमिति मिलितम् । एवमुपायोपेयज्ञानवतः फलमाह । अविद्यया द्वितीयमन्त्रोक्तेन कर्मज्ञानेन संयोगपृथक्त्वन्यायेन मृत्युमात्मज्ञानोत्पादप्रतिबन्धकं स्वाभाविकं कर्म ज्ञानं च दुःखकारणं तीर्त्वात्मज्ञानोत्पादेनातिक्रम्य विद्ययाहंब्रह्मास्मीति साक्षात्कारेणामृतं ब्रह्मात्मत्वमश्नुते व्याप्नोति स एव भवतीत्यर्थः । यदा

---

1 ( क. ) पक्षं द्वयं च द्विविधं विदित्वा स° ।

तु ज्ञानकर्मणोरेव समुच्चयो नतु तज्ज्ञानयोस्तदोपायोपेयशब्दौ विहायात्मज्ञानशब्दस्थले च देवताज्ञानमिति शब्दं पठित्वा । आभूतसंप्लवं स्थानममृतत्वं हि भाष्यत इति न्यायेनामृतं ब्रह्मलोकमिति व्याकुर्यात् ॥ ११ ॥

इदानीं व्याकृताव्याकृतयोरुपासनस्य समुच्चयार्थमाह । अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते । ततो भूय इव ते तमो य उ संभूत्यां रताः । अन्यदेवाहुः० अश्नुते । संभूतिं । संभूतिः सम्यग्भवनमुत्पत्तिर्यस्य तत्कार्यं संभूतिः । तद्व्यतिरिक्तामव्याकृतरूपामसंभूतिं कारणं संभूत्यां कार्ये व्याकृते संभवाद्व्याकृतोपासनादसंभवादव्याकृतोपासनात्संभूतिमव्याकृतं विनाशेन विनाशवतः कार्यस्योपासनेन संभूत्या सम्यग्भवति यस्मात्कार्यं तत्कारणमव्याकृतं संभूतिस्तदुपासनेन शेषं कर्म देवताज्ञानसमुच्चयवन्मन्त्रत्रयेऽपि व्याख्येयम् ॥ १२ ॥ १३ ॥ १४ ॥

कार्यकारणात्मादित्यमण्डलस्थः पुरुषः समुच्चयद्वयेनापि संप्राप्योऽतस्तत्प्रार्थनामन्त्राः । हिरण्मयेन । सुवर्णविकारेणेव ज्योतिर्मण्डलेन पात्रेण शरावसदृशेन घटस्येव सत्यस्य बाधरहितस्यापिहितमाच्छादितं मुखं प्रतीकं प्रधानभूतं तद्धिरण्मयं पात्रं त्वं कार्यकारणात्मा । पूषन् हे पुष्टिकारिन्नपावृण्वपसारय । अपसारणे कारणमाह सत्यधर्माय अवितथभावाय भवते दृष्टये दर्शनार्थं तव दर्शनार्थमित्यर्थः ॥ १५ ॥

इदानीं तत्संबोधनानि कार्यान्तरार्थं पूषन् हे पूषन्नेकर्षे एकश्चासावृषिश्चैकर्षिस्तत्संबोधनमेकर्षे एकाकित्वेन गन्तः । यम हे नियन्तः । सूर्य हे सुष्ठुगमन प्राजापत्य हे प्रजापतेरपत्यभूत । इदानीं कार्यमाह व्यूह उपसंहर रश्मीन्किरणान्समूह सम्यक्स्वात्ममात्रं कुरु तेजश्चन्द्रमण्डलम् । तत्रापि प्रयोजनमाह । यत्प्रसिद्धं ते तव रूपं स्वयंज्योतिःस्वभावं कल्याणतममतिशयेन कल्याणमानन्दात्मरूपं तदुक्तं ते तव पुनस्ते शब्द उपचारनिवारणार्थः । पश्यामि साक्षात्करोमि द्रष्टृदृश्यप्रयुक्तं भेदं वारयति । यः प्रसिद्ध असावादित्यमण्डलस्थः परोक्षोऽसौ शास्त्रदृष्ट्या प्रत्यक्षः पुरुषः परिपूर्णः स उक्तो यः प्रसिद्धः स एवाहमस्मत्प्रत्ययालम्बनः अस्मि भवामि ॥ १६ ॥

एते मन्त्रा हिरण्मयेनेत्यारभ्य पठिताः समुच्चयानुष्ठायिनासकृन्नित्यं पठनीयाः। अन्तकाले तु सर्वार्थानुसन्धानपुरःसरमात्मानमादित्यरूपं ध्यात्वा वायुः प्राणरूपोऽनिलं बाह्यवायुं यात्वितिशेषः । अमृतमानन्दात्मरूपं सोऽहमस्मीति पूर्वेण संबन्धः । अथ वायुनिर्गमनानन्तरमिदं प्रत्यक्षं भस्मान्तम् । भस्म अन्ते

पस्मात्तद्भस्मान्तं शरीरं स्थूलं पार्थिवं पृथिवीं यात्विति शेषः । ॐ ॐकाराभिधेय ईशाभिन्न आत्मन्नादित्य क्रतो संकल्पात्मन् । स्मर मां त्वदुपासकं स्मर कृतं मयानुष्ठितं ज्ञानं कर्म च स्मर । स्पष्टम् । क्रतो आदित्याभिन्नसङ्कल्पात्मन् । हे जीव आत्मानं स्मर स्पष्टम् । आत्मना कृतं स्मर ॥ १७ ॥

उपास्यां देवतां संप्रार्थ्य कर्मसाधनभूतां देवतां प्रार्थयते । अग्ने हे अग्ने नय प्रापय सुपथा सम्यङ्मार्गेण राये सुवर्णार्थं कर्मफलभूतायेत्यर्थः । अस्मान्समुच्चयानुष्ठातॄन् विश्वानि सर्वाणि देव हे देव वयुनानि ज्ञानानि विद्वाञ्ज्ञान्युयोधि वियोजयास्मदुपासकेभ्यः जुहुराणं कुटिलमेनः पापं भूयिष्ठामतिशयेनाधिकां ते तुभ्यं नमउक्तिं नमस्कारोक्तिं विधेम विधास्यामः सर्वदा कुर्म इत्यर्थः ॥ १८ ॥

इति श्रीशङ्करानन्दकृतेशावास्यदीपिका संपूर्णा ॥

---

# अथ रामचन्द्रपण्डितकृता ईशावास्यरहस्यविवृतिः ।

ॐ सत्यं ज्ञानमनन्तमीशमखिलस्यान्तर्बहिश्च स्थितं
यद्दूरे निकटे च यच्च सकलं यत्स्वप्रभं तद्विदः ।
अक्षागोचरमक्षचालकमहो येनेदमाच्छादितं
स्वात्माभिन्नमुपासते विजयते रामाभिधं तन्महः ॥ १ ॥
संसारबीजान्धतमिस्रनाशमर्वात्मताबोधजितारिषट्कम् ।
आनन्ददं सर्वसुहृत्तमं तं सिद्धेश्वरं सद्गुरुवर्यमीडे ॥ २ ॥
श्रीमच्छङ्करभाष्यकृद्गुरुवरश्रीपादयुग्मं सदा
ध्यात्वा हृत्कमले यथास्वमति तत्सिद्धान्तसूक्तीस्तथा ।
टीका नैकविधा विचार्य कुरुते रामोऽथ माध्यन्दिन-
स्थेशाख्योपनिषद्रहस्यविवृतिं श्रीसिद्धसूनुः कृती ॥ ३ ॥

इह खलु सर्वेषां वेदानामद्वैते ब्रह्मणि पर्यवसानमिति राद्धान्तस्तच्च ब्रह्म यथोक्ताधिकारिणे कथनीयम् । क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः। तेषामेवैतां ब्रह्मविद्यां वदेतेति मुण्डकोपनिषद्युक्तत्वात् । प्रशान्तचित्ताय जितेन्द्रियाय प्रहीणदोषाय यथोक्तकारिणे । गुणान्वितायानुगताय नित्यं प्रदेयमेतत्सततं मुमुक्षवे । इति वचनाच्च । स चाधिकारश्चित्तशुद्धिं विना नोत्पद्यते । चित्तशुद्धिश्च स्ववर्णाश्रमोचितकर्माचरणेनेति प्रथमं कर्मकाण्डमेकोनचत्वारिंशदध्यायैः प्रतिपादितम् । अथेदानीं चित्तशुद्ध्यादियथोक्तगुणवन्तमधिकारिणमुपदेष्टुं ज्ञानकाण्डमेतेन चरमेणाध्यायेनारभ्यते । सेयमीशावास्योपनिषद्ब्रह्मविद्यापराणां सहेतोः संसारस्यात्यन्तोच्छेदाद्ब्रह्मविद्योपनिषच्छब्दवाच्या । उपनीयेममात्मानं ब्रह्मापास्तद्वयं पुनः । निहन्त्यविद्यां तज्जं च तस्मादुपनिषन्मतेतिवचनाच्च । अन्तर्भावितण्यर्थस्य विशरणार्थस्य सद्धातोः क्विपि रूपम् । उप नितरां सादयति संसारहेतुभूतामविद्यां नाशयति । गत्यर्थस्य वा ब्रह्म प्रापयतीति । तदर्थप्रतिपादकग्रन्थोऽप्युपचारादुपनिषत्केवलस्य वा सदेरुप आत्मनः समीपे निषीदति प्रतिपादकत्वेनेत्यात्मयाथात्म्यप्रतिपादक इति । एषां च मन्त्राणां कर्मसु न विनियोगः । आत्मयाथात्म्यप्रतिपादकत्वात् । तच्च कर्मणा विरुध्यते । न हि वक्ष्यमाणलक्षणविशिष्ट आत्मा संस्कार्यः कर्ता भोक्ता वा । यो हि यथोक्ताधिकारवान्नहं ममेदमिष्टसाधनं दृष्टं ब्रह्मवर्चसाद्यदृष्टं स्वर्गादि च फलमाप्नुयामिति

मन्यते स कर्मण्यधिक्रियते । न हि स्वभावशुद्ध एकोऽशरीरी आकाशव-न्निर्लेपोऽहमिति शास्त्रत आपातज्ञानवानपि कर्मणि प्रवृत्तो दृश्यते । किमुतापरोक्षज्ञानवानत एषां मन्त्राणामैकात्म्यतात्पर्यकत्वम् । ईशावा-स्यमित्युपक्रम्य सोऽसावहमित्युपसंहारः । अनेजत्तदेजतीत्यभ्यासः । नै-नदेवा आप्नुवन्नित्यपूर्वता । तत्र को मोह इति फलम् । असुर्या नाम त इति भेददृष्टीनां कर्मकारिणां निन्दयैकात्म्यदर्शनस्तुतिरथवा स पर्यगादित्या-दिना ऐकात्म्यदर्शिन ऐश्वर्यवर्णनं सदर्थवादः । तस्मिन्नपो मातरिश्वा द-धातीत्युपपत्तिश्चेति षण्णां तात्पर्यलिङ्गानां दर्शनात् । तस्मादेते मन्त्रा भेदं निवर्तयन्तः संसारोच्छित्तिसाधनमात्मैकत्वविज्ञानमुत्पादयन्ति । अत्र दुःख-हेतुस्वाज्ञाननिवर्तनेच्छुरधिकारी । आत्मनो याथात्म्यमभिधेयं विषयः । याथा-त्म्यस्य तद्वाचकशब्दानां च प्रतिपाद्यप्रतिपादकभावः संबन्धः । स्वगताज्ञान-निवृत्त्या सत्स्वरूपानन्दाविर्भावः प्रयोजनमित्यनुबन्धचतुष्टयम् । अथ म-न्त्रान्सङ्क्षेपतो व्याख्यास्यामः । ईशा वास्यमिति । ईष्ट इतीट् ईश ऐश्वर्ये क्विप् । तृतीयान्तमीशेति । ईश्वरेण इदं प्रत्यक्षं सर्वं भूतजातं वास्यं वासयो-ग्यमधिष्ठानेनाच्छादनीयं वा निवासार्थकाद्वसेर्बाहुल्कादधिकरणे ण्यत् । आच्छादनार्थस्य वा वसे रूपं कृत्यानां कर्तरि वेति षष्ठी विकल्पात्पक्षे तृ-तीया यच्छब्दो भिन्नक्रमः चस्त्वर्थे यथोक्तानुभवसाधनमाह । किंतु य-ज्जगत्यामित्युपलक्षणं ब्रह्माण्डे जगत्स्थावरजङ्गमात्मकं तेन भूतजातेन त्यक्तेन न ममेति त्यक्तस्वीयत्वसंबन्धेन संन्यासेन यत आच्छादनीयमतो यत्किंच यावज्जगत्यां जगत्तेन त्यक्तेन नामरूपत्यागेन तद्बुद्ध्या गृही-तेनेति वा भुञ्जीथाः पूर्वोक्तमात्मानमनुभवेः । वा यदृच्छाप्राप्तभोगाननुभवेः । स्वात्मानं जननमरणादिदुःखात्पालयेथा वा । स्वसुखमनुभवेरिति वा । एतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्तीतिश्रुतेस्त्यागेनैके अमृतत्वमान-शुः परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्तीतिश्रुतेश्च सं-न्यस्य श्रवणं कुर्यादित्युक्तेश्च । यदा मनसि वैराग्यं जायते सर्ववस्तुषु । तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् । इत्युक्तत्वादधिकारं विना संन्यासे कृते प्रत्यवायापत्तिरित्यभिप्रायेणाह । मा गृधः माभिकाङ्क्षीः स्विदित्यनर्थकोऽ-प्यर्थको वा । कस्यापि स्वस्य परस्य वा धनं भोग्यविषयजातम् । ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती-ति त्यक्तैषणस्यैव संन्यासेऽधिकारात् । यद्वा स्विदिति वितर्के । लोके कस्येदं धनं न कस्यापि न हि लोके नियतस्वामिकं किंचिदपि विषयजातं

दृश्यते । प्रश्ने वा । अधिष्ठानेनाध्यस्तस्य स्वस्वामिभावायोगात्कस्येदं धनमित्यर्थः । अतो माभिकाङ्क्षीः । केवलेच्छयैव विषयाणामवश्यप्राप्त्यभावान्ममेदमिति रक्षितानां च स्थैर्याभावाद्विनाशे दुःखप्राप्तेश्च विषयेच्छात्यागपूर्वकसंन्यासिना ब्रह्मणः सर्वान्तरस्थत्वं ज्ञेयमिति भावः । अथवा स्वात्मना विभुना अधिष्ठानेन ज्ञातेन रज्ज्वादिना अध्यस्तसर्पादिभासवदध्यस्तजगद्भासे आच्छादिते दूरीकृते सति स्वातिरिक्तस्य विषयस्याभावादिच्छानुत्पत्तेः स्वात्मनैव स्वसुखमनुभवनीयमिति तात्पर्यम् । आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ इतिश्रुतेः । वासिष्ठे समाध्युत्थितस्य कचस्य । किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् । आत्मना पूरितं सर्वं महाकल्पाम्बुना यथेति वाक्याच्च ॥ १ ॥ अत्रायं सङ्ग्राहकः श्लोकः ।

छाद्यं मयेशेन समस्तमेतज्ज्ञात्वेति संन्यस्य सुखं हि भोग्यम् ।
धनस्य गृद्धिं न कुरु त्वमन्यत्स्वतोऽस्ति किं कस्य धनं त्रिलोक्याम् ॥१॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
संपूर्णः प्रथमो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

त्यक्तैषणस्य संन्यासेऽधिकार इति श्रुत्वा ईषणात्यागसाधनं प्रष्टुकामस्य श्रोतुः प्रश्नात्पूर्वमेव सर्वज्ञा श्रुतिश्चित्तशुद्धिरीषणात्यागोपाय इत्यभिप्रायेण चित्तशुद्ध्यर्थं त्वया तावत्कर्माणि कर्तव्यानीत्युपदिशति । अथवा आत्मतत्त्वमुपक्रम्य स्वानुभवप्रदर्शनेन श्रोतारमभिमुखीकृत्य प्रष्टुमिच्छन्तं तमुपदेष्टुकामा श्रुतिः शुद्धचित्तस्यैव श्रवणेऽधिकारादधिकारसिद्धये पूर्वं तत्साधनमुपदिशति । कुर्वन्निति । एव शब्दो भिन्नक्रमः इह नृलोके कर्माण्येव केवलानि नतु फलेच्छां कुर्वन् । कर्मण्येवाधिकारस्ते मा फलेषु कदाचनेति भगवतोक्तत्वात् । फलेच्छैव बन्धनकर्त्रीति भावः । त्वं जिजीविषेज्जिजीविषेः पुरुषव्यत्ययश्छान्दसः भवाञ्जिजीविषेदिति वा शतं समा इत्युपलक्षणं सर्वस्य पुरुषायुषस्य यावदायुरित्यर्थः । अनेन मनुष्यस्यैव कर्माद्यधिकार इति सूचितम् । जीवनेच्छोक्त्या संन्यासाधिकाराभावः न जीविते मरणे वा गृधिं कुर्यादरण्यमियादिति श्रीभगवत्पादैरिच्छारहितस्यैव संन्यासेऽधिकारस्योक्तत्वादरण्यं स्त्रीजनासंकीर्णमाश्रमं संन्यासमित्यर्थः । ननु यदि फलेच्छाया अभावस्तदेष्टसाधनताज्ञानं विना प्रवृत्त्यनुपपत्त्या कर्मणि प्रवृत्तिरेव न स्यादिति चेत्सत्यं भगवद्वचनोऽहं तस्मादसक्तः सततं कार्यं कर्म समाचरेति गीतायामुक्तत्वाच्चदाज्ञोल्लङ्घने प्रत्यवायोत्पत्त्या मर्मानिष्टं स्यादतोऽवश्यं मया कर्माणि कार्या-

ण्यानीत्येवं निश्चयेन नित्यनैमित्तिकादिकाम्यकर्मसु प्रवृत्तेः सूपपन्नत्वात्। ननु कर्मणा बन्धः स्यादिति चेन्न। असक्तो ह्याचरन्कर्म परमाप्नोति पूरुष इति भगवतोक्तत्वान्निष्कामकर्मणा मुक्तिरेवेत्यभिप्रायेणाह। एवं निष्कामकर्माणि कुर्वतस्त्वयि तव विभक्तिव्यत्ययश्छान्दसः वृक्षे शाखेतिवदधिकरणत्वविवक्षया वा सप्तमी। नरे नृदेहधारिणि कर्म न लिप्यते। कर्मफललेपो न स्यात्। किंतु चित्तशुद्धिद्वारा अधिकारसंपत्त्या ज्ञानसिद्ध्या मुक्तिरेव स्यादितिभावः। अनेन मनुष्यस्यैव कर्मफलसंबन्ध इति बोधितम्। अधिकारसंपादकचित्तशुद्धेः कर्मातिरिक्तसाधनासिद्धत्वं दर्शयति। इतः निष्कामकर्माचरणादन्यथा प्रकारान्तरं तव मुमुक्षोर्नास्ति येन त्वं शुद्धचित्तः सन्नधिकारी भविष्यसीत्यर्थः। आदौ स्ववर्णाश्रमवर्णिताः क्रियाः कृत्वा समासादितशुद्धमानस इति श्रीरामगीतायामुक्तत्वात्। स्ववर्णाश्रमधर्मेण तपसा हरितोषणात्। साधनं प्रभवेत्पुंसां वैराग्यादिचतुष्टयमिति भगवत्पादोक्तेश्च। यावदिच्छा तावत्कर्मस्वधिकार इति तात्पर्यम्। तावत्कर्माणि कुर्वीत न निर्विद्येत यावतेति भागवतात् ॥ २ ॥ अत्रायं सङ्ग्राहकः श्लोकः।

निष्कामकर्माणि तु यावदायुस्त्वमिच्छ कर्तुं खलु यन्मुमुक्षुः।
एवं तव स्यान्नफले न लेपो न चित्तशुद्धावितरः प्रकारः ॥ १ ॥

ईशावास्यस्य विवृतौ कृतायां रामशर्मणा।
मन्त्रो द्वितीयः संपूर्णः प्रीयतां तेन राघवः ॥ २ ॥

साधकस्य निष्कामकर्मस्वधिकार इत्युक्तमर्थं काम्यकर्मपराणां बलवदनिष्टफलकथनव्याजेन काम्यकर्मनिन्दया प्रबलयति। असुर्या इति। असुर्या असुषु प्राणेषु रमन्त इत्यसुराः प्राणपोषका ज्ञानहीनाः केवलप्राणपोषिणो देवा अप्यसुरा एव। अन्येष्वपि दृश्यत इत्यत्रापिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात्। रमधातोरपि डः। तेषामिमे असुर्याः। तद्धिता इति बहुवचनस्यानुक्तसङ्ग्रहार्थत्वादिदमर्थे। यन्नाम प्रसिद्धाः। ते यच्छब्दस्थाने तच्छब्दः ये लोका लोक्यतेऽनुभूयते कर्मफलं येषु ते लोकाः जन्मानि स्थानानि वा तिर्यगादीनि नरकादीनि च अन्धेन तमसा विचारशून्यत्वात्स्वाभाविकेनाज्ञानेनान्धतामिस्रेण वा आवृताः आच्छादितज्ञाना निरिन्द्रियप्रचारा वा तान्पूर्वोक्तोभयविधंध्वन्यतरान्स्वकर्मानुसारेण तत्र उत्पद्य ते जना नराः प्रेत्यापि मरणं प्राप्य पुनरपि गच्छन्ति प्राप्नुवन्ति। तच्छब्दोक्तान्निर्दिशति। ये के च। अनेन जातिगुणादि निरपेक्षत्वं सूच्यते। आत्महनः यथा गुरूणामपकारी गुरुघातीत्युच्यते। तथातिपूज्यस्य सर्वप्रकाशकस्याप्यात्मनः

देह एवाहं नात्मा कश्चनास्तीत्यवज्ञाकारिण आत्मघातिनस्ते । अनेन देहान्तरप्राप्तिरपि नरदेहकृतसञ्चितकर्मबीजनिबन्धनेति सूचयति । प्लवाह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥ १ ॥ नाकस्य पृष्ठे सुकृतेऽनुभूत्वेमं लोकं हीनतरं वाविशन्तीति च मुण्डकोपनिषद्युक्तत्वात् । तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १ ॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २ ॥ इति भगवद्वाक्याच्च । प्राणपोषणार्थं नानाविधकाम्यकर्मपराणां पुनः पुनः संसरणेन मुक्तिर्नास्तीति तात्पर्यम् ॥ ३ ॥ अत्रायं सङ्ग्राहकः श्लोकः ।

स्वात्मानभिज्ञा निजघातिनस्ते प्रमीय मर्त्या असुपोषिभोग्यान् ।
विचारशून्यानतिदुःखयुक्तान्प्रयान्ति देहान्खरनारकादीन् ॥ १ ॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
मन्त्रस्तृतीयः संपूर्णः प्रीयतां तेन राघवः ॥ २ ॥

कीदृशः स आत्मा यस्याज्ञानेन जनाः संसरन्तीत्याकाङ्क्षायामाह । अथवा येनेश्वरेण सकलमाच्छादितं तस्य स्वरूपमाह यद्वा । अनुभवसाधनं प्रदर्श्य उपक्रान्तमात्मस्वरूपमुपसंहरति । अथवा अन्वयव्यतिरेकाभ्यां निष्कामकर्मणः श्रवणाधिकारसाधनत्वं प्रदर्श्य श्रोतव्यमात्मतत्त्वमुपदिशति । अनेजदिति । न एजति चलति तदनेजत्स्वावस्थाप्रच्युतिश्चलनं तद्वर्जितम् । अनेन बाल्यादीनां जाग्रदादीनां चाभावः । बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा स्वात्मानं प्रकटीकरोतीति भगवत्पादैरुक्तत्वात् । एकमद्वितीयम् एकमेवाद्वितीयं ब्रह्मेति श्रुतेः । अथवा एकं सर्वदा एकरूपं वृद्ध्यपक्षयविपरिणामशून्यं मनसः जवीयः सङ्कल्पलक्षणादतिचञ्चलान्मनसोऽपि जवीयः वेगवत्तरम् । अपाणिपादो जवनो ग्रहीतेतिश्रुतेः । देहस्थस्यापि मनसः क्षणाद्ब्रह्मलोकगमने व्यापकत्वात्तत्र पूर्वंगतमिवास्ति । परंतु अचिन्त्यत्वान्मनसा प्राप्तुमशक्यं न तु चक्षुरादिविषयवन्मनसा साक्षादनाप्यं यतः एनदात्मस्वरूपं देवाः द्योतनात्मकानि चक्षुरादीन्द्रियाणि नाप्नुवन्न प्राप्तवन्तः अव्यपदेश्यत्वादिन्द्रियागोचरमित्यर्थः । अथवा मनोव्यापारपूर्वकत्वादिन्द्रियप्रवृत्तेः यन्मनस अगोचरं तदिन्द्रियाणां सुतरामगोचरम् । यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धीत्यादिना मनःप्राणेन्द्रियाप्राप्यत्वस्य केनोपनिषद्युक्तत्वात् । पूर्वमनादि जन्मरहितमर्शत् । रिशहिंसायामित्यस्य शत्रन्तस्य रूपं न रिशदविनाशि धातोरि-

कारलोपश्छान्दसः । तदादिमध्यान्तविहीनमेकमिति श्रुतेः । तद्ब्रह्म तिष्ठद्व्यापकत्वेन सर्वत्र स्थितिमत्सद्धावतः द्रुतं गच्छतोन्यान्कालवाय्वादीनत्येत्यतिक्रम्य गच्छतीव तेषां गन्त्या अप्राप्यमित्यर्थः । आसीनो दूरं व्रजति शयानो याति सर्वत इतिश्रुतेः । मातरिश्वा देहान्तर्गतो वायुः तस्मिन्देहान्तर्विद्यमाने सति अपः आप्यन्ते प्राणादिसंज्ञा याभिस्ता आपः आप्नोतेर्ह्रस्वश्चेति करणे क्विप् ताः क्रियाः प्राणनादिचेष्टाः दधाति धारयति । अथवा समिद्धयज्ञुषि वातेधा इति सर्वकर्मणां वायुस्थत्वोक्तेः अपः श्रद्धा वा आप इति श्रुतेः श्रद्धाजन्यत्वादापः कर्माणि स्वस्थानि तानि वायुस्तत्र ब्रह्मणि दधाति स्थापयति कर्मणां परमं निधानमित्यर्थः । अथवा तत्रान्तर्यामिणि सति वायुः सूत्रात्मा तपनवारिदादीनां कर्माणि तपनवर्षणादीनि । वायुना हि गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति श्रुतेः । क्रियाशक्तिमत्त्वाद्दधाति विभज्य धारयति । अन्तर्यामितया तस्यैव सर्वेशत्वादन्तर्यामिब्राह्मणे सर्वान्तर्यामित्वेन यः पृथिव्यां तिष्ठन्नित्यादिना तस्यैव सर्वनियामकत्वोक्तेः भीषास्माद्वातः पवत इत्यादितैत्तिरीयश्रुतेश्च स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्चेति स सेतुर्विधरण एषां लोकानामसंभेदायेति शारीरब्राह्मणे उक्तत्वाच्च अचिन्त्यमव्यपदेश्यं षड्भावविकाररहितं सर्वैकरूपं सर्वान्तर्यामि सर्वचालकं ब्रह्मेत्यर्थः ॥ ४ ॥ अत्रायं सङ्ग्राहकः श्लोकः ।

अकम्पमेकं मनसस्तरस्वि न देवता आपुरनाशि पूर्वम् ।
तिष्ठत्तदत्येत्यपि धावतोऽन्यान्वायुर्हि कर्माणि दधाति तत्र ॥ १ ॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
मन्त्रश्चतुर्थः संपूर्णः प्रीयतां तेन राघवः ॥ २ ॥

उक्तमर्थमन्योऽपि मन्त्रो वदति । अथवा आत्मतत्त्वस्य अतीतमन्त्रोक्तदुष्प्रापत्वान्तर्यामित्वव्यापकत्वानुवादेन तस्यैव सर्वात्मकत्वं सुखप्राप्यत्वं च श्रुतिरुपपादयति नात्र पुनरुक्तिः न मन्त्राणां जामितादोष इति भगवत्पादैरुक्तत्वात् । जामिता आलस्यं रहस्यं सकृदुक्तं चित्ते नायातीत्यनलसा श्रुतिः सकरुणा मातेव पुनः पुनरुपदिशति । तदेजतीति । तत्प्रकृतमात्मतत्त्वमेजति चलति जङ्गमं तन्नैजति न चलति स्थावरम् । पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमितिश्रुतेः । तदात्मतत्त्वं दूरे विप्रकृष्टे तद्वु उ एवार्थे यद्दूरस्थं तदेवान्तिके समीपे समीपस्थमपि तदेव दूरस्थमन्तिकस्थं ब्रह्मैव सर्वगत्वात् । अथवा सर्वगत्वाद्दूरस्थमन्तिकस्थं च ब्रह्मैव । अथवा अज्ञानिनां वर्षकोटिभिरप्यप्राप्यत्वा-

दूर इव स्थितम्। आत्मज्ञानिनां तु समीप एव आत्मत्वेन हृत्स्थत्वात्सुप्रापं तद्ब्रह्म अस्य प्रत्यक्षस्य सर्वस्य भूतजातस्यान्तरभ्यन्तरेऽन्तर्यामित्वेनास्ति। तदु तदेव सर्वस्यास्य बाह्यतः बाह्यप्रदेशे उत्तमपुरुषत्वेन सार्वविभक्तिकस्तसिः। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इतिश्रुतेः। बहिरन्तश्च भूतानामचरं चरमेव च। सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तदिति। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति च गीतावाक्याच्च ॥ ५ ॥ अत्रायं सङ्ग्राहकः श्लोकः।

ब्रह्मैव तत्स्थावरजङ्गमात्मस्वाज्ञानिनां दूर इवाप्रकाशम्।
तज्ज्ञानिनां भाति सदा समीपे विश्वस्य चान्तश्च बहिस्थितं तत् ॥१॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा।
संपूर्णः पञ्चमो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

उक्तात्मज्ञानस्य फलमाह। यस्त्विति। यस्तु तुशब्दो वैलक्षण्यद्योतकः यः पुनर्लोकविलक्षणदृष्टिः सर्वाणि भूतान्यव्यक्तादिस्थावरान्तान्यात्मन्नात्मनि सुपां सुलुगिति ङेर्लुक् अधिष्ठानरूपे एव अनु गुरूपदेशानन्तरं पश्यति अवलोकयति च परं सर्वभूतेषु तेषु आत्मानमनु कारणात्मनानुगतं पश्यत्यनुभवति। तत ऐकात्म्यज्ञानात्स पुरुषः न विचिकित्सति संशयं न प्राप्नोति। संशयः उभयकोटिकं ज्ञानं द्वैतं पश्यतो भवति नत्वैकात्म्यज्ञस्येति भावः। यदैतमनुपश्यत्यात्मानं देवमञ्जसा। ईशानं भूतभव्यस्य न तदा विचिकित्सतीति बृहदारण्यकश्रुतेः। सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। संपश्यन्ब्रह्म परमं याति नान्येन हेतुनेति कैवल्यश्रुतेश्च। अस्या एव श्रुतेरुत्तरार्धं गीतायाम्। ईक्षते योगयुक्तात्मा सर्वत्र समदर्शन इति। छिद्यन्ते सर्वसंशयाः तस्मिन्दृष्टे परावरे इति मुण्डकश्रुतेश्च ॥ ६ ॥ अत्रायं सङ्ग्राहकः श्लोकः।

यः पश्यतीत्थं सकलानि भूतान्यात्मन्यथात्मानमपीह विद्वान्।
सर्वेषु भूतेषु स तत्त्ववेत्ता निःसंशयः स्यात्सकलैरनिन्द्यः ॥ १ ॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा।
मन्त्रः षष्ठोऽपि संपूर्णः प्रीयतां तेन राघवः ॥ २ ॥

अधुना आत्मज्ञस्य स्थितिमाह। यस्मिन्निति। यस्मिन्काले विजानत आत्मानं साक्षात्कुर्वतः सर्वाणि भूतानि ब्रह्मादिस्थावरान्तानि न मद्व्यतिरिक्तं किञ्चिदस्त्यहमेव सर्वरूप इत्यात्मैवाभूत्संवृत्तः। तत्र तस्मिन्काले एकत्वम् ऐकात्म्यं अनु अनुस्यूतं पश्यतः अनुभवतः मोहः

आवरणरूपः कः किन्निमित्तकः शोकश्च विक्षेपरूपः कः किन्निमित्तकः आत्मज्ञानेन अविद्याया निरस्तत्वात्स्वरूपं जानतः समूलाविद्योच्छेदादावरणविक्षेपयोरभावेन कामाद्यनुदयाज्जीवन्मुक्तिस्थित्या तूष्णींभूत आस्ते इत्यर्थः । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिना तस्य निष्क्रियत्वाभिधानात् । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते इति भगवद्वाक्याच्च ॥७॥

अत्रायं सङ्ग्राहकः श्लोकः ।

सर्वाणि भूतानि मदात्मकानीत्येवं विदोऽभूत्सकलं यदात्मा ।
तदेकतां पश्यत आत्मरूपं मोहश्च शोकश्च भवेत्कथंस्वित् ॥ १ ॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
संपूर्णः सप्तमो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

आत्मज्ञानस्थितिमुक्त्वा पुनः आत्मस्वरूपं लोकोत्तरैश्वर्यप्रदर्शनेनोपसंहर्तुं वर्णयति । स पर्यगादिति । अत्र स इत्युत्तरार्धे च कविरित्यादिशब्दैः पुल्लिङ्गत्वेन निर्देशात् शुक्रमित्यादीनि विशेषणानि पुल्लिङ्गत्वेन विपरिणम्यानि अथवा स इति शब्दो भिन्नक्रम उत्तरार्धेन संबद्ध्यते । यत्तदोर्नित्यसंबन्धात् यद्ब्रह्म पर्यगात्परितः सर्वतो भावे सप्तमी सर्वतो जगद्व्याप्य आसीत् । शुक्रं शुद्धं दीप्तिमत्स्वप्रकाशम् । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतेः । अकायं सूक्ष्मदेहरहितमव्रणं व्रणः क्षतं तद्रहितमस्नाविरं स्नाविराः शिराः न सन्ति यस्य तदिन्द्रियत्वादव्रणमस्नाविरमिति विशेषणद्वयेन स्थूलशरीरनिरासः अशरीरं शरीरेष्वनवस्थेष्ववस्थितमितिश्रुतेः । शुद्धं मायासंबन्धरहितं विरजः पर आकाशादितिश्रुतेः तमसः परमुच्यत इति गीतावाक्याच्च । अपापविद्धं पुण्यमपि पुनरावृत्तिहेतुत्वात्पापमेव तेनोभयात्मकेनाविद्धमसंबद्धं स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानितिश्रुतेः। नादत्ते कस्यचित्पापं न चैव सुकृतं विभुरिति भगवद्वाक्याच्च । स एतादृशं ब्रह्मैव स्वशक्तिमादायेश्वरो भूत्वा कविरतीतानागतज्ञः । वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानीति गीतायामुक्तत्वात् । मनीषी मनीषा जगत्सर्जनेच्छा तद्वान् । सोऽकामयत बहु स्यां प्रजायेयेतिश्रुतेः । अथवा मनोनियन्ता मनसो ये मनो विदुरितिश्रुतेः । परिभूः परिः उपर्यर्थकः परि सर्वेषामुपरि श्रेष्ठत्वेन भवत्यस्तीति परिभूः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिरितिश्रुतेः । स्वयंभूः स्वयमेव भवति न तु कारणान्तरेणेत्यर्थः । अथवा येषामुपरि यस्योपरि तत्सर्वं स्वयमेव भवतीति सर्वरूपः । याथातथ्यतः यथातथाभावः याथातथ्यं तेनेति याथातथ्यतः साध्यसाधनादिमतिनियतस्वरूपेण अर्थान्

तनाचेतनरूपपदार्थान्व्यदधाद्विभज्य दत्तवान् । शाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्यः यो वै स संवत्सरः प्रजापतिः षोडशकल इतिश्रुतेः अचिन्त्यशक्तिमद्ब्रह्मेति भावः । अत्रार्थे श्लोकयोजना । यद्व्यापकं शुद्धमपापविद्धं देहद्वयातीतमतिप्रकाशम् । कविः स धीमान्प्रवरः स्वयंभूः प्रजापतिभ्यो व्यदधाद्यथार्थान् ॥ १ ॥ अथवा यथोक्तात्मज्ञस्य उक्तानुवादपूर्वकमैश्वर्यमाह । स शब्द उत्तरार्धेनैव संबध्यते यः शुक्रमित्यादि यथोक्तविशेषणविशिष्टं ब्रह्म पर्यगात्सर्वभावेन ज्ञातवान् । गत्यर्थानां बुद्ध्यर्थत्वात्स ब्रह्मज्ञः कविः क्रान्तदर्शी । मनीषी द्वैतासंबन्धेन प्रशस्तबुद्धिमान्परितः सर्वमपि स्वयमेव भवतीति परिभूः सकलात्मकः । स्वयंभूः ब्रह्मरूपः यथास्वरूपं तेन तेन रूपेणार्थान्पदार्थान्भोग्यविषयान् । शाश्वतीभ्यः समाभ्यस्तादर्थ्ये चतुर्थी अनन्तवर्षोपभोगाय व्यदधात्स्वयमेव कृतवान् । यस्यानुवित्तः प्रतिबुद्ध आत्मास्मिन्संदेहे गहने प्रविष्टः । स विश्वकृत्स हि सर्वस्य कर्तेतिश्रुतेः ब्रह्मविद्ब्रह्मैव भवतीति भावः ॥ ८ ॥ अत्रायं सङ्ग्राहकः श्लोकः

यो ज्ञातवान् शुद्धमपापविद्धं देहद्वयातीतमतिप्रकाशम् ।
कविः स धीमान् सकलः स्वयंभूर्व्यधाद्यथास्वं बहुकालमर्थान् ॥ १ ॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
संपूर्णश्चाष्टमो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

उपक्रान्तमात्मतत्त्वमुपसंहृत्य यस्तूक्ततत्त्वानभिज्ञः ईषणात्यागाभावेन संन्यासे च नाधिकारी संसारे च नात्यन्तं सक्तस्तं प्रति चित्तैकाग्र्यार्थमुपासनासमुच्चयं कथयिष्यन्प्रत्येकमुपासनां फलकथनव्याजेन निन्दति । अथवा उक्तात्मज्ञानस्याखिलश्रेष्ठत्वं तद्व्यतिरिक्तानां संसरणहेतुत्वप्रदर्शनेन द्रढयति । अन्धं तम इति । ये नरा असंभूतिं सम्यग्भवनं भूतिः उत्पत्तिः यस्य कार्यस्य तद्भिन्नां कारणरूपामव्याकृताख्यां प्रकृतिमुपासते चिन्तयन्ति ते अन्धं तमः अदर्शनात्मिकां प्रकृतिं प्रविशन्ति प्रकर्षेण विशन्ति पौराणिकोक्तं प्रकृतिलयं प्राप्नुवन्ति । तं यथा यथोपासते तदेव भवतीति श्रुतेः । य उ । ये तु संभूत्यां प्रकृतिकार्ये हिरण्यगर्भाख्ये रता आसक्तास्तदुपासका इत्यर्थः । ते ततः प्रकृतिलयाद्भूय इवाधिकमिव स्वरूपाज्ञानेन संसरणहेतुत्वात्तमः अणिमादिसिद्धिसमुदायं प्रविशन्ति प्राप्नुवन्ति ॥ ९ ॥ अत्रायं सङ्ग्राहकः श्लोकः ।

अव्याकृतं हेतुमुपासते ये संप्राप्नुवन्ति प्रकृतौ लयं ते ।
प्रजापतिं कार्यमुपासते ये ते प्राप्नुवन्ति ह्यणिमादिसिद्धीः ॥ १ ॥

ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
संपूर्णो नवमो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

व्याकृताव्याकृतोपासनयोर्भिन्नफलत्वे श्रुतिरार्यवचः प्रमाणयति । अन्यदेवेति । संभवात्संभूतिरूपकार्यप्रजापत्युपासनादन्यदेव भिन्नमेवाणिमादिसिद्धिरूपं फलं तत्त्वज्ञाः आहुः वदन्ति तथा असंभवादसंभूतिरूपकारणाव्याकृताख्यप्रकृत्युपासनादन्यत्प्रकृतिलयाख्यं फलमाहुः कथयन्ति उपास्योपासनयोरभेदविवक्षया संभवादसंभवादित्युक्तं ये ज्ञानिनः नः अस्मभ्यं भाष्यमते अन्वर्थसंज्ञा विज्ञानाभावात्संप्रदानत्वम् अस्मान्वा । अकथितं चेति व्यापारद्वयार्थत्वाद्वा द्विकर्मकत्वं तदुपासनाद्वयतत्त्वं विचचक्षिरे व्याख्यातवन्तस्तेषां धीराणां वाक्यमितिशेषः । अथवा प्रसिद्धत्वाद्वाक्यमिति कर्मणः अप्रयोगः आख्यातोपयोग इत्यपादानत्वस्याविवक्षया शेषे षष्ठी धीरेभ्य इत्यर्थः । इति पूर्वार्द्धोक्तप्रकारेण वयं शुश्रुम । श्रुतवन्तः ॥ १० ॥ अत्रायं सङ्ग्राहकः श्लोकः ।

अन्यत्फलं कार्यमुपासतां स्यादुपासतां कारणमन्यदेव ।
एतस्य तत्त्वं विवृता य ऊचुस्तेषां पुरा वाक्यमिति श्रुतं नः ॥ १ ॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
संपूर्णो दशमो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

यत एवमत उभयोः समुच्चयो युक्त इत्याह । संभूतिमिति । यः पुमान्संभूतिं च अवर्णलोपः पृषोदरादित्वात् । असंभूतिं प्रकृतिमथवा सम्यक् भवत्यस्याः कार्यमिति संभूतिः कारणं पूर्वापरसंदर्भानुसारेण वक्तुरभिप्रायस्याभिधानियामकत्वात्प्रकृतिः तां च परं विनाशं च । च इत्यर्थे । विनाशोऽस्यास्तीति विनाशं कार्यम् अर्शआद्यच् । तदुभयं कार्यकारणोपासनाद्वयं सह समुच्चितं फलदमिति वेद जानाति सः विनाशेन हिरण्यगर्भाख्यकार्योपासनेन । मृत्युमनैश्वर्यादिदुःखजातं तीर्त्वातिक्रम्यासंभूत्या । अथवा पूर्वोक्तप्रकारेण संभूत्या अव्याकृताख्यकारणोपासनेन । यथास्वापेक्षया अधिकजीवनेन देवा अमरास्तथा आपेक्षिकममृतं प्रकृतिलयमश्नुते प्राप्नोति ॥ ११ ॥ अत्रायं सङ्ग्राहकः श्लोकः ।

उपासने कार्यनिदानयोस्ते समाश्रिते वेद परस्परं यः ।
तत्राद्यया प्राप्य स ईश्वरत्वं द्वितीयया याति लयं प्रकृत्याम् ॥ १ ॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
पूर्ण एकादशो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

अधुना कर्मणा उपासनां समुच्चिचीषन्प्रत्येकमुभयं फलं प्रदर्श्य निन्दति ।

अथवा व्याकृताऽव्याकृतोपासनयोः फलं प्रदर्श्य कर्मणां देवतान्तरोपासनानां च फलं दर्शयति । अन्धं तम इति । ये नरा अविद्यां विद्या ज्ञानं तद्भिन्ना अविद्या तां कर्म केवलमुपासते तत्पराः सन्तोऽनुतिष्ठन्ति ते अन्धं तमः जन्ममरणरूपं प्रविशन्ति प्राप्नुवन्ति य उ ये तु अशुद्धचित्ता अपि कर्म न कुर्वन्ति । किंतु केवलायां विद्यायां देवतोपासनायां रता आसक्तास्ते कर्माधिकारे सत्यपि कर्मत्यागेन प्रत्यवायरूपदोषयुक्ताः सन्तस्ततः कर्मानुष्ठातृभ्यः भूय इवाधिकमिव तमः संसरणलक्षणं प्रविशन्ति प्राप्नुवन्त्युपासनाफलं नाश्नुवते । किंतु संसरन्तीतिभावः ॥ १२ ॥ अत्रायं सङ्ग्राहकः श्लोकः ।

उपासते केवलकर्मजालं ये संसरन्तीह पुनः पुनस्ते ।
तेभ्योऽधिकं यान्ति गतागतं ते उपासते केवलदैवतानि ॥ १ ॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
संपूर्णो द्वादशो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

उक्तार्थे श्रुतिर्विद्वद्वचः प्रमाणयति । अन्यदेवेति । विद्यायाः देवतोपासनायाः फलमन्यदेव । विद्यया देवलोक इतिश्रुतेः देवलोकप्राप्तिलक्षणं प्राज्ञा आहुः । तथा अविद्यायाः कर्मण अन्यत्कर्मणा पितृलोक इति वचनात्पितृलोकप्राप्तिलक्षणमाहुः दूरमेते विपरीते विषूची अविद्या या च विद्येति श्रुतेश्च । एवं प्रकारेण उभयतत्त्वव्याख्यातृभ्यः पूर्वमस्माभिः श्रुतमस्तीति तात्पर्यं पदव्याख्या तु व्याकृताव्याकृतोपासनावन्मन्त्रे कृता ॥ १३ ॥ अत्रायं सङ्ग्राहकः श्लोकः ।

बुधाः फलं कर्मण आहुरन्यत्स्याद्देवतोपासितफलं तथान्यत् ।
ये तस्य तत्त्वं गुरवो न ऊचुस्तेभ्यः पुरास्माभिरिति श्रुतं हि ॥ १ ॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
पूर्णस्त्रयोदशो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

उभयोः समुच्चये फलमाह विद्यां चेति । विद्यां च देवतोपासनामविद्यां च कर्म तदुभयं सह समुच्चितं फलदातृ इति यः पुमान्वेद सोऽविद्यया कर्मणा मृत्युं स्वाभाविकमज्ञानं विस्मरणलक्षणं तीर्त्वा दूरीकृत्य विद्यया देवतोपासनेनामृतं देवतात्मभावमश्नुते प्राप्नोति तद्ध्यमृतमुच्यते यद्देवतात्मगमनमिति श्रुतेः । अत्रार्थे श्लोक योजना । यो देवतोपास्तिमथापि कर्म एकेन कार्यं पुरुषेण वेद । स्वकर्मणा मृत्युमतीत्य विद्वान्स विद्ययाप्नोति हि देवतात्वम् ॥१॥ अथवा कर्मणामुपासनानां च फलं प्रदर्श्य आत्मज्ञानेनैव कृतकृत्यतेति श्रुतिरुपपादयति । वक्तृतात्पर्यस्याभिधानियामकत्वात् । विद्यामात्मज्ञानं चपरमविद्यां च

कर्म इति उभयं पाठक्रमादर्थक्रमो बलीयानिति कर्म आत्मज्ञानं च पूर्वापराधिकारभेदेन सह एकपुरुषकर्तव्यत्वेन समुच्चितं यो वेद सोऽविद्यया कर्मणा उपासनापि मानसं कर्मैव मृत्युं स्वरूपविस्मरणहेतुं चित्तमलमनैकाग्र्यं तीर्त्वा अतिक्रम्य विद्यया आत्मज्ञानेन अमृतं मोक्षमश्नुते । तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतेः ॥ १४ ॥ अत्रायं सङ्ग्राहकः श्लोकः ।

कर्मात्मविज्ञानमपि क्रमेण संपाद्यमेकेन नरेण वेद ।
यः कर्मणा चित्तविशुद्धिमाप्य स विद्ययाप्नोत्यमृतं हि विद्वान् ॥ १ ॥

ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
पूर्णश्चतुर्दशो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

प्रथमव्याख्यायामुक्तोपासनावान्योगी देवतामन्ते प्रार्थयते । वायुरनिलमिति । द्वितीयव्याख्यायां तु आत्मज्ञस्य आप्तकामत्वेन देहान्ते अन्यत्र गमनं नास्ति आप्तकामो भवति । न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येतीति श्रुतेः । न च प्रार्थ्यं देवतान्तरं य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीति श्रुतेस्तस्य सर्वात्मकत्वादसंकल्पत्वाच्च । तमक्रतुः पश्यति वीतशोक इत्युक्तत्वात । अत आत्मज्ञवत्तान्यस्यात्रैव कृतकृत्यतेति निदर्शयितुं सिंहावलोकनन्यायेन पूर्वोक्तव्याकृताव्याकृतोपासनावान्देवतान्तरोपासनावांश्च लोकान्तरगमनयोग्यः योगी देवतामन्ते प्रार्थयतेति श्रुतिरुपादर्शति । वायुरिति । मम वायुः शरीरस्थः प्राणः प्राणोपलक्षितं लिङ्गशरीरम् उत्क्रान्तं सदमृतं मृत्युना अनाप्तं तानि मृत्युः श्रमो भूत्वोपयेमे इति प्रक्रम्य अथेममेव नाप्नोद्योऽयं मध्यमः प्राण इतिश्रुतेः । अनिलं सूत्रात्मानं प्राप्नोत्विति शेषः । यदा वै पुरुषोऽस्माल्लोकात्प्रैतीत्यादिना वायोरेव परलोकप्रापकत्वोक्तेः । अथेदं स्थूलं शरीरं भस्मान्तं भस्मैव अन्तः परिणामो यस्य तादृशं पृथिव्यंशत्वादत्रैव तिष्ठत्विति तात्पर्यम् । ओमिति ब्रह्मनाम । अवति प्राप्नोति सर्वान्पदार्थानथवा अवति रक्षति सर्वं भूतजातम् । अथवा अवति दीप्यत इति स्वयं प्रकाशं ब्रह्म । ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इति गीतावाक्यात् । तद्रूप क्रतो क्रतुर्यज्ञः । तद्धेतुत्वात्सङ्कल्पोऽपि क्रतुः । यथा क्रतुर्भवति तत्कर्म कुरुते इतिश्रुतेः । हे सङ्कल्प स्मर । यन्ममेष्टं तत्स्मर । यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावित इति भगवद्वाक्यात् क्लिबे कल्पते प्राप्तुं योग्यो भवतीति क्लिप् क्लिप् इमागमश्छान्दसः तस्मै क्लिबे जशादेशोऽयस्मयादित्वेन पदत्वात् । मया प्राप्तुं

योग्याय लोकाय क्रियार्थोपपदस्येति कर्मणि चतुर्थी तं दातुं स्मर स्मरणविषयं कुरु कृतं यन्मया बाल्यप्रभृति अनुष्ठितं तत्स्मर स्मरेत्यस्य त्रिरावृत्तिः संभ्रमेण प्रवृत्तत्वात् ॥ १५ ॥ अत्रायं सङ्ग्राहकः श्लोकः ।

सूत्रं मरुद्यातु वपुर्ममेदं भस्मान्तमुर्वीं प्रणवात्मकस्त्वम् ।
संकल्प यत्कर्म कृतं मयेष्टं प्राप्यं च लोकं मम संस्मराद्य ॥ १ ॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
पूर्णः पञ्चदशो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

अथ कर्मकृत्सर्वाश्रमेषु परिचरितमग्निं प्रार्थयते । अग्नेनयेति । हे देव दीव्यति दीप्यत इति देवः द्योतनात्मक अग्ने अस्मांस्त्वदुपासकान्सुपथा गतागतरहितेन मार्गेण राये भोग्याय फलाय मुक्तिरूपाय तादर्थ्ये चतुर्थी तदर्थं नय प्रापय । यतः भवान्विश्वानि सर्वाणि वयुनानि ज्ञानानि कर्माणि वा विद्वाञ्जानन् । किंच जुहुराणं हृर्छेः मनो लुक् छन्दोपश्चेति सिद्धं कौटिल्यं वञ्चनात्मकं व्यवहारार्थमाचरितमेनः पापमस्मदस्मत्तः युयोधि अमिश्रितं कुरु नाशयेत्यर्थः । अमिश्रणार्थकाद्युधातोरादादिकादपि बहुलं छन्दसीतिश्लुः अङ्तिश्चेति हेर्धिः वा छन्दसीत्यपित्त्वविकल्पान्ङित्त्वाभावेन गुणः । निष्पापत्वे मुक्तियोग्यत्वं स्यादिति भावः यतः अधुना वयं नमस्कारमपि कर्तुमशक्ताः शरीरापाटवात्किमुतान्यपरिचर्यामतस्ते तव भूयिष्ठां बहुतरां नमउक्तिं नमस्कारवचनं विधेम उत्तमपुरुषे आशीर्लिङो बहुवचनं छन्दस्युभयथेति सार्वधातुकत्वम् अङ् आल्लोपः क्रियाम । नमस्कारेण वै खल्वपीति वचनान्नमोऽस्तु नमोऽस्त्विति ब्रूमः एतावतैव त्वं प्रसन्नो भवेति तात्पर्यम् ॥ १६ ॥ अत्रायं सङ्ग्राहकः श्लोकः ।

ज्ञानानि सर्वाणि विदंस्त्वमग्ने संप्रापयास्मान्सुपथा विमुक्तिम् ।
कौटिल्यमेनः कुरु नः पृथक्त्वां कुर्मो नमोऽन्ते बहुधा स्ववाचा ॥१॥
ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
संपूर्णः षोडशो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

अथ पुनरादित्यान्तर्यामिपुरुषोपासनाभेदेन वर्णयन्नैकात्म्यमुपसंहरति । हिरण्मयेनेति । हिरण्मयेन हिरण्यस्य विकारः हिरण्मयं तदिव प्रकाशात्मकं तेन पात्रेण पिबन्ति रश्मयः रसान्यत्र स्थिताः तेन बिम्बेन सत्यस्य । सत्यस्य सत्यमिति श्रुतेः ब्रह्मणः मुखं मुख्यमिव मुखं प्रधानं रूपमपिहितमाच्छादितं सर्वजनैरज्ञातमस्ति । तथापि यः प्रसिद्ध असौ प्राकृतजनानां परोक्ष आदित्ये सूर्यमण्डले स्वयंप्रकाशः सकलशक्त्याधारभूतः पुरुषः स वा अयं पुरुषः सर्वासु पूर्षु पुरिशय इतिश्रुतेः । अन्तर्याम्यस्ति स पुनरसावित्यनेनावधारणं स एव ।

अथवा एतच्छब्दार्थे अदःशब्दः । एषः सर्वसमीपतरः अहमिति प्रत्यक्षतः स्वानुभवं श्रुतिरधिकारिणे प्रदर्शयति स यश्चायं पुरुषे यश्चासावादित्ये स एक इतिश्रुतेः ॐ ॐकारवाच्यं खं आकाशमिव व्यापकं ब्रह्म अहमस्मीति भावः । एवमेव त्वमपि ब्रह्मरूपोऽसीति तात्पर्यम् ॥१७॥ अत्रायं सङ्ग्राहकः श्लोकः ।

तेजोमयेनापिहितं स्वरूपं सत्यस्य बिम्बेन सदा परं तु ।
भानावसौ यः पुरुषोऽस्मि सोऽहं ज्ञेयं विभु ब्रह्म सदोंस्वरूपम् ॥ १ ॥

ईशावास्यस्य विवृतौ कृतायां रामशर्मणा ।
पूर्णः सप्तदशो मन्त्रः प्रीयतां तेन राघवः ॥ २ ॥

माध्यंदिनेशोपनिषद्रहस्यप्रकाशकं श्लोकमहमेतम् ।
कृत्वार्पितं श्रीगुरुपादपद्मे पठन्यजस्रं स विमुक्तिमीयात् ॥ १ ॥

ईशाख्योपनिषद्रहस्यविवृतिं श्रीरामशर्माकृत
श्रीकृष्णात्रिकुलोद्भवः कविवरः श्रीसिद्धराजात्मजः ।
शाके खेटगुणाचलावनि १७३९ मिते धामीश्वरेऽब्दे मधौ
सेयं श्रीगुरुवीरपादकमले भक्त्यार्पिता श्रीमति ॥ २ ॥

इति श्रीमद्विद्वन्मुकुटालङ्कारहीरश्रीराजयोगिवरिष्ठश्रीसिद्धेश्वरसूरिसूनुना श्रीरामचन्द्रपण्डितेन विरचिता श्रीमाध्यंदिनीयेशावास्योपनिषद्रहस्यविवृतिः समाप्तिमगमत् ॥

॥ ॐ तत्सत् ॥

# ईशावास्यभाष्यम् आनन्दभट्टोपाध्यायकृतम् ।

ॐ दर्शपूर्णमासाद्यश्वमेधान्तं कर्मकाण्डं समाप्तमथेदानीं ज्ञानकाण्डं प्रस्तूयते । ईशावास्यमिति । ईशावास्यमित्यादीनां मन्त्राणामपि यथा कथञ्चन कर्मसु विनियोगः किं न स्यादिति केनचित्पृष्टे ऋचा पुरुषं ब्रह्माणं दक्षिणतः पौरुषेण नारायणेनाभिष्टौति । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्यनेन षोडशर्चेनेत्यादि । तत ईशावास्यमित्यादिमन्त्राणां कर्मसु प्रमाणतोऽविनियोगात् । यागकल्पनायां तु विशेषं परिहृत्यैव यागकल्पना सा भवति नेतरेति श्रीभगवाञ्छङ्कराचार्यो विरोधादेवाविनियोगस्तेषां मन्त्राणां कर्मणीति प्रतिपादयति । ईशा वास्यमित्यादयो मन्त्राः कर्मस्वविनियुक्तास्तेषामकर्मशेषस्यात्मनो याथात्म्यप्रकाशकत्वादिति । तमेवं सविस्तरं प्रतिपादयति । याथात्म्यमात्मनः शुद्धत्वापापविद्धत्वाशरीरत्वादि वक्ष्यमाणं कर्मणा विरुद्ध्यत इत्यतो युक्तस्तेषां कर्मस्वविनियोगः । न चैवंलक्षणत्वं याथात्म्यमुत्पाद्यं संस्कार्यं कर्तृत्वं भोक्तृत्वं येन कर्मशेषता स्यात् । सर्वासामुपनिषदामात्मयाथात्म्यनिरूपणेनैवोपयोगाद्गीतानां मोक्षधर्माणां चैतत्परत्वात् । तस्मादात्मनोऽपृथक्त्वाकर्तृत्वादि शुक्लत्वादि नोपादाय तस्य लोकबुद्धिसिद्धानि कर्माणि विहितानि । यो हि दृष्टेन कर्मफलेन ब्रह्मवर्चसा वाऽदृष्टेन स्वर्गादिना वाऽनुमीयते । तत्र च द्विजातिरहं लक्षणाद्यधिकारधर्मवानित्यात्मानंमन्यते । सोऽधिक्रियते कर्मस्वित्यधिकारविदो वदन्ति । तस्मादेते मन्त्रा ह्यात्मनो याथात्म्यप्रकाशनेनात्मविषयाः । स्वात्मविकाराज्ञानं निवर्तयन्तः शोकमोहादिसंसारविच्छित्तिसाधनमात्मैकत्वादिविज्ञानमुत्पादयन्ति । एवमुक्तविषयसंबन्धप्रयोजनान्मन्त्रान्सङ्क्षेपतो व्याख्यास्यामः । अस्य कृत्स्नस्याध्यायस्य दध्यङ्ङाथर्वण ऋषिः । आत्मा देवता प्रतिमन्त्रं च ईशावास्यं कुर्वन्नेव असुर्यानामेति तिस्रोऽनुष्टुभ आत्मदैवत्या दध्यङ्ङाथर्वण ऋषिः । अत्र च कश्चन पुत्रं शिष्यं वा गर्भाधानादिभिः संस्कारैः संस्कृतशरीरमधीतवेदमुत्पादितपुत्रमिह जन्मनि जन्मान्तरे वा यथाशक्त्यनुष्ठितयज्ञादिना क्षपितकल्मषः । नित्यानित्यवस्तुविवेकवन्तं दैववशात्कथञ्चिदिहामुत्रार्थफलभोगविरागयुक्तं शमदमादिसंपन्नं मुमुक्षुं शिक्षयति । स्वपमाचार्यस्वरूपा सती श्रुतिराह । ईशावास्यमिति । ईश ऐश्वर्येऽस्य क्विबन्तं तृतीयान्तं रूपमीशेति ईष्ट इतीद् तेनेशा ईशित्रा ईशा तेन परमेश्वरेण पर-

आत्मना सर्वजन्तूनामात्मभूतेन स्वेनात्मना ईशा वास्यं वसनिवासे वास्यं निवसनीयं किमितीदं प्रत्यक्षादिभिः प्रतीयमानं साक्षिदृश्यं चेदमात्मव्यतिरिक्तं सर्वमिदमीशा वास्यं सर्वेषु स्वकार्येषु स्वकारणभूते निवास्यम् । जगति पृथिव्यां जगत्यां जगत्युपलक्षिते जगति किञ्चेति चकारो भिन्नक्रमः । जगति व्यक्तं च लोकप्रसिद्धं वस्तुजातं तत्सर्वमीशा वास्यं निवास्यं स्वेनात्मना निवास्यम् । किञ्च वस आच्छादने अहमेवेदं सर्वमिति परमसत्यरूपेणेशा परमात्मना अनृतमिदं सर्वं वास्यं छादनीयमाच्छादनीयं कार्यस्य कारणसत्ताप्रकाशव्यतिरेकेणारोपितस्याधिष्ठानप्रकाशव्यतिरेकेण पृथक्सत्ताप्रकाशनाभावादेवेदं सर्वं जगदीशा वास्यम् । यतः प्रत्यगात्मनः सच्चिदानन्दलक्षणपुरुषार्थरूपं स्वत एव सिद्धम् । तेन स्वस्मिन्नारोपितस्याहमिदं ममेदमित्येवमनात्मकस्य सर्वस्यानर्थभूतस्य जगतस्त्यक्तेन त्यागेन सर्वाधिष्ठानभूतस्वस्वरूपयाथात्म्यानुभवसामर्थ्यसिद्धेन त्यक्तेन त्यागेनात्मानं भुञ्जीथाः । भुजोऽनवन इत्यस्य रूपम् । पालनेऽपि छन्दस्यात्मनेपदं भवत्यत आत्मानं भुञ्जीथाः पालयेथाः कृतं कृत्यं प्राप्तं प्रापणीयं । आत्मलाभान्न परं विद्यत इतिश्रुतेः । एवंत्यक्तैषणस्त्वं मा गृधः कस्यस्विद्धनं । गृधु अभिकाङ्क्षायाम् । कस्यस्वित्परस्य धनं मा गृधः । अभिकाङ्क्षां मा कार्षीर्धनविषयाभिकाङ्क्षां मा कार्षीरित्यर्थः । स्विदिति निपातो वितर्कवचनः । अस्य संपूर्णकामत्वादेवान्यार्थविषयाकाङ्क्षा किन्नु कर्त्तव्या न कर्त्तव्येत्यर्थः । विचार्यमाणे तथाविधस्यार्थस्याभावादेव अथवा मा गृधः कस्यचिद्धनमिति आक्षेपार्थः न कस्यचिद्धनमस्ति यद्गृध्येत । आत्मैव सर्वमितीश्वरभावनया सर्वं द्वैतमात्रं त्यक्तमत आत्मन एवेदमात्मन एव तु सर्वं परस्य कस्यचित्संबन्धित्वेन प्रतीयमानस्य स्वयं संबन्धित्वमापादयितुमभिकाङ्क्षां मा कार्षीः स्वव्यतिरेकेणातो मिथ्याविषयं ग्रहं मा कार्षीरित्यर्थः । एवमात्मविदः पुत्राद्येषणात्रयसंन्यासेनात्मज्ञाननिष्ठतयात्मा रक्षितव्य इत्येष वेदार्थः । अथैतस्यार्थस्य ग्रहणस्य तु साधनत्वेनेदमुपदिशति ॥ १ ॥

कुर्वन्नेवेहेति । इह कर्मभूमौ शतं समाः शतं वर्षाणि जिजीविषेद्यदि भवाञ्जीवितुमिच्छंस्तर्हि कर्माण्यग्निहोत्रादीनि कुर्वन्नेव भवाञ्जिजीविषेच्छतं समा इति जीवतः पुरुषस्य जीवितं परमायुरनघ कुर्वन्कर्माणीत्यवधीयते । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे नराभिमानिनि त्वयि । एवं जीवति सति कर्म न लिप्यते कर्मणा न लिप्यत इत्यर्थः । नान्यथेतोऽस्ति । इत अस्माद्यथोक्तप्रकाराद्न्यथा प्रकारान्तरं नास्ति । एको ज्ञानमार्गः द्वितीयः कर्ममार्गः एवं प्र-

कारद्वयादन्यत्प्रकारान्तरं नास्तीत्यर्थः । देवताभक्तिरपि उभयात्मिका एव । अतो न विरोधः । एवं चेदशुभं कर्म न लिप्यते केचिदेवं योजयन्ति । इह लोके कर्माणि यज्ञेन दानेनेत्यादिना मुक्तिसाधनत्वेन विहितानि कर्माणि कुर्वन्नेव शतं समाः संवत्सराणि जिजीविषेदिति व्यत्ययः । एवमिह एवं त्वयि वर्तमाने सति तव मुक्तिरस्त्विति शेषः। नान्यथेतोऽस्ति । इतः प्रकारादन्यथा मुक्तिर्नास्तीत्येतदुक्तं भवति । यथा स्वर्गप्राप्तेर्नानाभृताः विशेषाः तथा मुक्तेर्न मार्गभेदोऽस्ति अपि तु एक एव मार्गः ज्ञानलक्षणः कर्म लिप्यते नास्ति येन प्रकारान्तरेण विद्यमानेन कर्म लिप्यते तथा प्रकारान्तरं नास्तीत्यर्थः। अतः शास्त्रविहितान्यग्निहोत्रादीनि कर्माणि कुर्वन्नेव जिजीविषेदिति । कथं पुनरिदमवगम्यते आद्येन मन्त्रेण ससंन्यासज्ञाननिष्ठोक्ता द्वितीयेन तदशक्तस्य कर्मनिष्ठेति ज्ञानकर्मणोर्विशेषोपरोधं पर्वतसर्षपवदेवोक्तं न स्मरसि किमित्याद्युक्तम् । यो जिजीविषेत्स कर्म कुर्वन्नेवेति । ईशा वास्यमिद ँ सर्वं यत्किञ्च जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनमिति । तेन जीविते मरणे वा गृधिं मा कुर्वित्यरण्यमियादिति पदमतो न पुनरियादिति व्यासशासनादुभयोः फलभेदं च वक्ष्यति । इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः । क्रियापथश्चैव पुरस्तात्संन्यासपथश्च तयोर्न्यास एवात्यरेचयदिति तैत्तिरीयके । द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च सुभाषित इत्यादि पुत्राय विचार्य निश्चितमुक्तं श्रीवेदव्यासेन वेदाचार्येण । श्रीभगवता । लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ । ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनामिति । विभागं चानयोर्दर्शयिष्यामः । अथेदानीमविद्वन्निन्दाऽऽरभ्यते विद्वत्प्रशंसार्थम् ॥ २ ॥

असुर्या नाम त इति । परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुराः असुषु रमन्त इति । तेषां संभृताः लोकाः असुर्या नामशब्दः प्रसिद्धवचनस्ते लोकाः कर्मफलानि जन्मानि येषु लोक्यन्ते दृश्यन्ते भुज्यन्त इति । अन्धेनादर्शनात्मकेन तमसा अज्ञानलक्षणेनान्धकारेणावृता आच्छादितास्तान्स्थावरान्तान्लो॰ ते प्रेत्य मृत्वेमं देहं परित्यज्याभिगच्छन्ति । यथाकर्म यथाश्रुतम् । तेतान्गच्छन्ति । ते क इति तानाह । ये के चात्महनो जना इति । आत्मानं घ्नन्तीत्यात्महननमात्मभेददर्शनं तत्कुर्वन्ति ते के अविद्वांसः स्वस्वरूपाविदः तद्विपर्ययेण विद्वांसो मुच्यन्ते न त्वात्महनः । तर्हि तत्कीदृशमात्मतत्त्वमिति तदाह ॥ ३ ॥

अनेजदेकमिति । आत्मदेवत्या त्रिष्टुप् । अतिवेगवान्वायुः प्रसिद्धस्तस्मा

हि वेगवत्तरं मनस्ततोऽप्यतिवेगवत्तरमात्मतत्त्वं कथं विरुद्धमिदमुच्यते निश्चलं जवीय इति । नैष दोषः निरुपाध्युपाधिमत्त्वोपपत्तेः । तत्र निरुपाधिस्वरूपेणोच्यते । अनेजदेकमिति । सोपाधिस्वरूपेणोच्यते । मनसो जवीय इति । मनसो जवनान्तःकरणस्य सङ्कल्पादिलक्षणस्योपाधेरनुवर्तमानात्तत्र प्रवृत्तिश्च व्यर्थं पुरतः पुरतश्चात्मतत्त्वं प्रकाशत इति ज्योतिर्ब्राह्मणे प्रसिद्धम् । इहैव दुःस्थस्य मनसो ब्रह्मलोकादिदूरसङ्कल्पनं नानागमनं क्षणमात्रादित्यतो मनसो जविष्ठत्वं लोके प्रसिद्धम् । तस्मिन्मनसि ब्रह्मलोकाद्विदूरं गच्छति प्रथमं प्राप्त इवात्मचैतन्याभासो गृह्यते । अतो मनसो जवीय इत्याह । किञ्च नैनद्देवा आप्नुवन्निति । एतदात्मतत्त्वं देवाः द्योतनसाधनत्वात्सर्वथापि तदात्मतत्त्वं चक्षुरादीन्द्रियाणि देवाः नाप्नुवन्न प्राप्नुवन्न विषयीकुर्वन्निति । प्रकाशविपर्यीकर्तुं वा श्रम एव ततस्तेभ्यो मनो जवीयः । मनोव्यवहारः व्यवहितत्वात् । नाभासमात्रमप्यात्मनो नैव देवतानां विषयो भवति यत्स्यान्मनसोऽपि पूर्वमर्षत्पूर्वमेव गतं व्योमवद्व्यापित्वात् । सर्वथापि तदात्मतत्त्वं सर्वसंसारधर्मवर्जितं स्वेन नीरूपेणाविक्रियं सदुपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीवाऽविवेकिनां मूढानामेकमनेकमिव प्रतिदेहं प्रत्याचक्षते स्वत इत्येतदाह । तद्धावत इति । तद्यत्प्रसिद्धमात्मतत्त्वं तद्धावतः दूरं गच्छतोऽन्यान्मनोवागिन्द्रियप्रभृतीनात्मविलक्षणानत्येत्यतीत्य गच्छतीव । इवार्थं स्वयमेव दर्शयति । तिष्ठदिति । तिष्ठत्स्वयं सदित्यर्थः । तस्मिन्नात्मतत्त्वे सति चैतन्यस्वभावे मातरिश्वा मातरि अन्तरिक्षे श्वयत इति मातरिश्वा सर्वप्राणभृत्क्रियात्मकः । यदा सर्वाणि कार्यकारणजातानि यस्मिन्नोतानि प्रोतानि यत्सूत्रसंज्ञकं सर्वस्य जगतो विधारयितृ स मातरिश्वा । अपः अप इति कर्मनाम अपः कर्माणि प्राणिनां चेष्टालक्षणान्यग्न्यादित्यपर्जन्यादीनां ज्वलनदहनप्रकाशवर्षादिलक्षणानि यज्ञदानहोमादीनि दधाति स्थापयति विभजतीत्यर्थः । समष्टिर्व्याष्टिरूपो ह्यसौ वायुः धास्यतीति वा । भीषास्माद्वातः पवत इत्यादिश्रुतिभ्यः । सर्वा हि कार्यकरणादिविक्रिया नित्यचैतन्यात्मस्वरूपं सर्वस्यादिभूते सत्येव भवन्तीत्यर्थः । न मन्त्राणां जामितास्तीति पूर्वोक्तोऽर्थः । कश्चिद्विशेषं दर्शयन्नाह ॥ ४ ॥

तदेजति । यस्तु सर्वाणि भूतानि यस्मिन्सर्वाणि भूतानीति आत्मदेवस्यास्तित्वोऽनुष्टुभः । तदेजति । तद्यत्प्रकृतमात्मतत्त्वं तदेजति उपाधित एजति चलति । तन्नैजति । तदेवतत्त्वात्मतत्त्वमतो नैजति नैव चलति । अचलमेव सचलतीव भवतीत्यर्थः । तद्दूरे । वर्षकोटिशतैरप्यविदुषामप्राप्यत्वा-

तद्दूर एव । तत् उ एव अन्तिके अतिसमीपे विदुषामात्मत्वात्तदन्तिक एव । अत्यन्तसमीप एव न केवलं दूरे अन्तिके तदन्तः अस्य सर्वस्य जगत अन्तरात्मैव । एष त आत्मा सर्वान्तर इति श्रुतेः । अस्य सर्वस्य जगतो नामरूपक्रियात्मकस्य तदेव सर्वस्य बाह्यतः व्यापित्वादाकाशवन्निरतिशयसूक्ष्मत्वादतो ज्ञानघन एवेति शासनान्निरन्तरम् ॥ ५ ॥

यस्तु शोधिततत्त्वंपदार्थो मुमुक्षुः सर्वाणि भूतान्यव्यक्तानि स्थावरान्तानि चेतनाचेतनान्यात्मानं त्वामनु अन्वेति सदा पश्यति आत्मव्यतिरिक्तानि न प्रपश्यति । अपि तु आत्मन्यात्मत्वेन पश्यतीत्यर्थः । सर्वभूतेषु चात्मानं तेषु सर्वेषु भूतेषु चात्मानमनुपश्यति तेषामपि भूतानामात्मानमात्मतत्त्वं न पश्यति यथास्य कार्यकरणसङ्घातरूपमात्मानं सर्वप्रत्ययसाक्षिभूतं सत्यं केवलं । निर्गुणोऽनेनैव स्वरूपेणाव्यक्तानां स्थावरान्तानामहमेवात्मेति सर्वभूतेषु चात्मानं यस्तु पश्यति । ततस्तस्माद्दर्शनान्न विजुगुप्सते जुगुप्सां घृणां न करोति गुप् रक्षणे देहादिकं गोप्तुं न गच्छतीति वा । ज्ञानप्राप्तस्यैवानुवादोऽयम् । सर्वा हि घृणात्मनोऽन्यद्दुष्टव्यं पश्यतो भवति । आत्मानमेव त्वनन्तेषु विशुद्धं निरन्तरं पश्यतो न प्राणादिर्निमित्तमस्तीति । प्राप्तमेव ततो न विजुगुप्सत इतीममेवार्थमन्योऽपि मन्त्र आह । सर्वासां श्रुतीनामत्रैव तात्पर्यमिति प्रदर्शयितुम् ॥ ६ ॥

यस्मिन्सर्वाणि भूतानीति । यस्मिन्यथोक्त आत्मनि सर्वाणि भूतानि तान्येव भूतानि परमार्थदर्शनादात्मैवाभूदात्मैव संवृत्तः । परमार्थतो विजानत एवमात्मतत्त्वं विजानत एतत्तस्मिन्काले तस्मिन्नवस्थाविशेषे तत्र चात्मनि को मोहः । मुह वैचित्त्ये को मोहः कः शोकः कः संसार एकत्वमनुपश्यतः शोकमोहौ कामबीजमजानतो भवति न त्वात्मैकत्वं विशुद्धं गगनोपमं पश्यतः को मोहः कः शोक इति । शोकमोहयोरविद्याकार्ययोः संसारमसंसारमित्यज्ञानयोगाक्षेपेण सम्प्रदर्शनात्सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति । योऽयमतीतेन मन्त्रेणोक्त आत्मा किंलक्षण इत्यपेक्षायामयं मन्त्रः प्रवर्तते ॥ ७ ॥

स पर्यगादिति । आत्मदेवत्या जगती । स यथोक्त आत्मा पर्यगात्परितः समन्तादगात्परितो गच्छति सर्वमवगच्छति व्याप्नोति च । आकाशवद्व्यापी शुक्रं शुचदीप्तौ शुचिमद्दीप्तिमदित्यर्थः अकायमशरीरं लिङ्गशरीरवर्जितमव्रणमहतम् । अस्नाविरं स्नावाः शिरा न विद्यन्ते यस्य तदस्नाविरं कविः क्रान्तदर्शी नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतेः । मनीषी मनस ईशिता सर्वज्ञ ईश्वर

इत्यर्थः । परिभूः सर्वेषामुपरि भवतीति परिभूः । स्वयमेव भवतीति स्वयंभूः । एषामुपरि भवति यश्चोपरि भवति स स्वयमेव सर्वो भवतीति स्वयंभूः स नि त्यमुक्त ईश्वरः । याथातथ्यतः यथातथा भावो याथातथ्यं यथाश्रुतकर्मफलसाधनतोऽर्थान्कर्तव्यपदार्थान्व्यदधादकरोद्विहितवान्यथानुरूपं व्यभादित्यर्थः । शाश्वतीभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्य इत्यर्थः । अत्राद्येन मन्त्रेण सर्वेषणापरित्यागाज्ज्ञाननिष्ठोक्ता । प्रथमो वेदार्थः । ईशा वास्यमित्यादिना मागृधः कस्यस्विद्धनमिति । अज्ञानिनां जिजीविषूणां ज्ञाननिष्ठासम्भवे सति कुर्वन्नेव कर्माणि जिजीविषेज्जिजीविषेरिति कर्मनिष्ठा । द्वितीयो वेदार्थः अनयोश्चिरन्तनयोर्मन्त्रः प्रदर्शितः । सोऽकामयत जाया मे स्यादिति तस्याज्ञानिनः कर्माणि मन एवस्यात्मा वाग्जायेत्यादिवचनात् । अज्ञत्वं कामित्वं च निश्चितमवगम्यते । तथाच आत्मस्वरूपावस्थानं जायाद्येषणासंन्यासेनात्मविदां कर्मनिष्ठाप्रातिकूल्येनात्मस्वरूपनिष्ठैव दर्शनात् । किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इत्यादिना यज्ज्ञाननिष्ठा संन्यासिनस्ते असुर्या नाम त इत्यादिना । अविद्वन्निन्दाद्वारेणात्मनः स पर्यगादिति वदतः मन्त्रैरुपदिष्टः यत्र तत्राधिकृता न कामिनइति यथा च श्वेताश्वतराणां मन्त्रोपनिषदि । अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टमित्यादि विभज्योक्तम् । ये तु कर्मनिष्ठाः कर्म कुर्वन्त एव जिजीविषवस्तेभ्य इदमुच्यते । अन्धन्तम इत्यादिना । कथं पुनरिदमवगम्यते साध्यसाधनभेदोपमर्शनं । यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः । यदात्मैकत्वविज्ञानं तन्न केनचिदपि कर्मणा ज्ञानान्तरेण वा स मूढः समुच्चिचीषति । भवतु समुच्चिचीषया अविद्वन्निन्दा । तत्र च यस्य येन समुच्चयः संभवति न्यायतः शास्त्रतो वा तदिहोच्यते । दैवं वित्तं देवतादिज्ञानं कर्म संबन्धित्वेनोपन्यस्तेन परमात्मविज्ञानं विद्यया देवलोक इति पृथक्फलाश्रयणात्ततो ज्ञानकर्मणोरिहैकैकानुष्ठाननिन्दा समुच्चिचीषया निन्दापरैकैकस्य पृथक्फलाश्रयणाद्विद्यया तदारोहन्ति विद्यया देवलोकः । तत्र दक्षिणायन्ति कर्मणा पितृलोक इति । न हि शास्त्रविहितं किञ्चिदकर्तव्यतामियात् ॥ ८ ॥

अन्धं तमः प्रविशन्ति । षडनुष्टुभः आत्मदेवत्याः अन्धं तमोऽदर्शनात्मकं तमः प्रविशन्ति के ये अविद्यामविद्या कर्मेत्यर्थः । अविद्यामग्निहोत्रादिलक्षणामेव केवलामुपासते । तत्पराः सन्तोऽनुष्ठन्तीत्यभिप्रायः । ततो भूय इव ते तमः । ततस्तस्मादन्धात्मकात्तमसो भूय एव बहुतरमेव तमः प्रविशन्ति ते

क इति । य उ विद्यायां रताः ये तु कर्म हित्वा य उ एव विद्यायामेव रताः ज्ञान एव रताः ततो बहुतरमेव तमः प्रविशन्ति । अनन्दा नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधा जना इति श्रुतेः । अत्रावान्तरफलभेदं विद्याकर्मणोः समुच्चये कारणमाह । अन्यथा फलवदफलवतोः सन्निहितयोरङ्गाङ्गितैव स्यादिति ॥ ९ ॥

अन्यदेवाहुरिति । अन्यत्पृथगेव विद्यया क्रियते फलमित्याहुः । अन्यदेवाहुरविद्यया कर्मणा अन्यदेव फलं क्रियत इत्याहुर्वेदाः कर्मणा पितृलोको विद्यया देवलोक इत्यादयः । इत्येवं शुश्रुम श्रुतवन्तो वयं धीराणां धीमतां वचनं शुश्रुमः । य आचार्या नोऽस्मभ्यं तत्कर्म च ज्ञानं च विचचक्षिरे व्याख्यातवन्तस्तेषामयमागमः पारम्पर्यागत इत्यर्थः ॥ १० ॥

यत एवं विद्यां चाविद्यां चेति देवताज्ञानं कर्म चेत्यर्थः । यस्तद्वेद तदुभयं ज्ञानं कर्म च सह एकेन रूपेणानुष्ठेयं यो वेद तस्यैव समुच्चयकारिण एकपुरुषार्थसंबन्धक्रमेण किं स्यादित्युच्यते । अविद्यया मृत्युं तीर्त्वेति । अविद्यया कर्मणाग्निहोत्रादिना मृत्युं स्वाभाविकं रागतः क्रियमाणं कर्म ज्ञानं च मृत्युशब्दवाच्यं तदुभयं तीर्त्वातिक्रम्य विद्यया वेदान्तज्ञानेनामृतं देवतात्मभावमश्नुते व्याप्नोति । तद्वदत्रामृतमश्नुते यद्देवतात्मगमनम् । अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते ॥ ११ ॥

अन्धं तमइति । अन्धं तमः प्रविशन्ति के ये असंभूतिं संभवनं संभूतिः सा यस्य कार्यस्य संभूतिः तस्या अन्या असंभूतिः । प्रकृतिः प्राक्रियते कार्यं यया प्रकृतिः कारणमव्याकृताख्यां तामसंभूतिमव्याकृताख्यां प्रकृतिकारणमविद्यां कामकर्मबीजभूतामदर्शनात्मिकामुपासते । ते तदनुरूपमेव फलं तमोऽदर्शनात्मकं प्रविशन्ति । ततस्तस्मादपि भूयः बहुतरमिव तमः प्रविशन्ति । के ये उ एव संभूत्यां रताः संभूत्यां कार्यब्रह्मणि हिरण्य गर्भाख्य एव रतास्ते ततो भूय इव तमः प्रविशन्ति । अथाधुनोपासनयोः समुच्चयकरणायावयवफलभेदमाह ॥ १२ ॥

अन्यदेवाहुरिति । अन्यदेव पृथगेवाहुः फलं संभवात्संभूतेः कार्यब्रह्मोपासनादणिमाद्यैश्वर्यलक्षणं फलमाहुर्वेदाः । तथा अन्यदाहुरसंभवादसंभूतेरव्याकृतादव्याकृतोपासनादन्यदेव फलमाहुः । अन्धं तमः प्रविशन्तीति शुश्रुम । श्रुतवन्तो वयं धीराः ये नस्तद्विचचक्षिरे । ये आचार्याः धीराणां वचनं विचचक्षिरे । व्याकृताव्याकृतोपासनाफलवचनं व्याख्यातवन्त इत्यर्थः । यत एवमतः समुच्चयः संभूत्योर्युक्त एवैकपुरुषार्थत्वादित्याह ॥ १३ ॥

संभूतिं च विनाशं च यस्तद्वेदोभय॑ सह । विनाशेन मृत्युर्नाशो-धर्मो यस्य स तेन विनाशधर्मणा हिरण्यगर्भोपासनेनैश्वर्यप्राप्तिद्वारा अनैश्वर्य-धर्मकामादिदोषजातं च मृत्युं तीर्त्वा संभूत्या । अत्राकारलोपश्छान्दसः । असंभूत्या असंभूत्युपासनया अव्याकृतोपासनेनामृतं प्रकृतिलयलक्षणं कार-णत्वप्राप्तिलक्षणममृतमश्नुत इति ततश्च पुनः संसारो भवतीति एवमपरं विद्या-कर्मसमुच्चये फलमभिहितं । तत्र को मोहः कः शोक एकत्वमनुपश्यत इति । स्वतन्त्रस्य सर्वकर्मसंन्यासपूर्वस्य सम्यक् ज्ञातस्य फलमभिहितमेवं द्विः-प्रकारः प्रवृत्तिनिवृत्तिलक्षणो वेदार्थोऽनेन प्रकाशितः । प्रवृत्तिलक्षणस्य वेदार्थ-स्य विधिप्रतिषेधलक्षणस्य कृत्स्नस्य प्रकाशने प्रवर्ग्यान्तं ब्राह्मणमुपयुक्तम् । निवृत्तिलक्षणस्य प्रकाशने विद्यामुपासत इति । तत ऊर्ध्वं बृहदारण्यकं तत्रापि प्राणादिविषयोपासनं न परं किञ्चिदन्यान्निर्गुणब्रह्मपरमिति विभज्य दर्शनीयम् । कार्यं सगुणब्रह्मोपासनावाक्यजातं चान्धं तमः प्रविशन्ति येऽ-विद्यामुपासत इत्यादिषण्मन्त्रप्रकाशितार्थस्य प्रकाशने उपयुक्तं इतरत्सर्वं निर्गुणतत्त्वैकनिष्ठमिति । विद्यां चाविद्यां च यस्तद्वेदोभय॑ सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत इति यदुक्तं तत्र केन मार्गेणामृतत्वमश्नुत इत्य-र्चिरादिमार्गेणेत्युच्यते । एवं यथोक्तोपासनं कुर्वन्नुपासकः स्वदेहस्यान्तकाले प्राप्ते आत्मनोऽमृतत्वप्राप्तिद्वारभूतमादित्यं याचते ॥ १४ ॥

हिरण्मयेन पात्रेणेति । आदित्यदेवत्या अनुष्टुप् हे पूषन् हे सूर्य अ-स्मत्पोषक हिरण्मयेन ज्योतिर्मयेन पात्रेण आधारभूतेन सत्यस्य आदि-त्यमण्डलस्थस्य ब्रह्मणोऽपिहितं मुखं द्वारमपिहितं । हिरण्मयेन पात्रेण द्वारस्यापिधानं कृतं । अतस्तत्त्वं पूषन्नपावृणु पूषन्तत्पिधानं त्वमपावृण्व-पगमय । सत्यधर्माय सत्यस्य तवोपासनादहमपि सत्यधर्मा जातः । सत्यं धर्मो यस्य स सत्यधर्मा तस्मै सत्यधर्माय मह्यं तदपावृणु । यद्वा व्यत्ययः । सत्यधर्माय सत्यधर्मस्य तद्दृष्टये ॥ १५ ॥

पूषन्नेकर्ष इति । सूर्यदेवत्या त्रिष्टुप् पोषणात्पूषा रविस्तत्संबोधनं हे एकर्षे त्वया सर्वस्य संयमनाद्यमः हेयम सूर्य सुष्ठु ईरणात्सूर्यः तत्संबोधनं प्रजा-पतेरपत्यम्प्राजापत्यः तत्संबोधनं हे प्राजापत्य एवं संस्तूय प्रार्थयते । व्यूह रश्मीनिति रश्मीन्व्यूह विगमय समूह तेजस्तेजस्तापकं यज्ज्योतिः तज्ज्यो-तिस्तत्समूहमेकीकुरु । यत्ते रूपं कल्याणतमं तत्ते पश्यामि । ते तव य-त्कल्याणतमं मङ्गलतमं रूपं । तत्ते तव प्रसादात्तद्रूपमहं पश्यामि । किञ्च योऽसावसौ पुरुषः सोऽहमस्मि । योऽसौ मण्डलस्थः व्याकृतावयवो यः पुरुषः

पुरुषा आहुः । पूर्णत्वाद्वा पुरुषः सोऽहमस्मीत्यादित्यमेकीकृत्य पश्यामीति । एवं ब्रह्मोपासकस्य योगिनः शरीरपातोत्तरकालं शरीरं यद्भवति तदाह ॥१६॥

वायुरनिलमिति । लिङ्गोक्तदेवत्यं यजुः वायुः प्राणोऽनिलं सूर्यात्ममृतमधिदैवतं स्वप्रकृतिं हिरण्यगर्भाख्यं प्राणं प्रतिपद्यते । अथानन्तरमिदं प्रतीयमानं शरीरमग्नौ हुतं भस्मान्तं भवति । कृतप्रयोजनत्वात् । इदानीं योगिनो बलभूतं प्रभूतं सर्ववेदसारं सर्ववेदमयमक्षरं कथ्यते । ओमिति अवतेराप्नोतेर्वा । ओमिति परमाक्षरस्य योगिनो बलभूतस्य परस्य ब्रह्मणः प्रणवाख्यस्य स्थूलादिगुणयुक्तस्य ब्रह्मा ऋषिश्छन्दो गायत्रं परमात्मा देवता । शब्दब्रह्मारम्भे विनियोगः । अपि च यागहोमादिषु शान्तिपौष्टिककर्मसु चान्येष्वपि काम्यनैमित्तिकादिष्वपि सर्वेष्वस्योङ्कारस्य विनियोगः । ओमिति परब्रह्मणो नामनिर्देशः । ओंतद्ब्रह्मेत्यादिश्रुतेः । ब्रह्मविष्णुशिवपरब्रह्मात्मकः अकारोकारमकारार्धमात्रात्मकोऽयमोङ्कारएवान्त्यकाले उत्तारक इति दर्शयति । आत्मरूपश्च ओंकारः ततस्तेन तत्त्वमिदानीं कृतं स्मारयति । कृतं स्मर इति । लिङ्गोक्तदेवत्यं यजुः । क्रतो क्रतुः सङ्कल्पः अनेन सङ्कल्पविषयो योगिभिर्लक्ष्यते । हेक्रतो हेश्रीभगवन्नग्ने स्मर कृतं ब्रह्मचर्ये मया कृतं तत्स्मर न विस्मर्तव्यं । हेक्रतो गार्हस्थ्ये मया यत्कृतं तच्च स्मर । पुनश्च यत्साधुकृतं तत्सर्वं कृतं स्मर कृतं स्मरेति । आदरार्थं पुनर्वचनम् । अथवा क्रतुशब्देन यज्ञः संबोध्यते हेक्रतो हेयज्ञ । यज्ञशब्दोपलक्षितो यज्ञाध्यक्षो यज्ञहविर्भागभुक् श्रीभगवान्विष्णुः संबोध्यते श्रीभगवन्विष्णो कृतं स्मर मया कृतं त्वया कारितं स्मर कृतं स्मर कृतं स्मर कृतं स्मरेति । मार्गं याचति ॥ १७ ॥

अग्ने नयेति । आग्नेयी त्रिष्टुप् । हेश्रीभगवन्नग्ने हेसर्वज्ञ नय सुपथा दक्षिणमार्गनिवृत्त्यर्थं सुशब्दः शोभनेन मार्गेण देवयानेनास्मान्नय प्रापय । राये धनाय कर्मज्ञानफलोपभोगाय वा । अस्मान्यथोक्तज्ञानकर्मकारिणः नयेति संबन्धः । हेदेव विश्वानि सर्वाणि कर्माणि वयुनानि कर्माणि प्रज्ञानानि तदनुष्ठितानि च विद्वान् ज्ञातवांस्त्वं सुपथा नयेति संबन्धः । किंच । युयोध्यस्मज्जुहुराणमेनः । अस्मदस्मत्तः सकाशाज्जुहुराणं कुटिलं कुटिलवञ्चनात्मकमेनः तत्कृतं च एनः पापं युयोधि योधय पृथक्कुरु । तत्ते विशुद्धाःसन्त इष्टं फलं प्राप्नुयाम इत्यभिप्रायः । किन्तु वयमिदानीं किमपि कर्तुं न शक्नुमः । अपि तु भूयिष्ठां बहुतरां नम उक्तिं नमस्कारवचनं ते तुभ्यं विधेम कुर्मः । केवलनमस्कारवचनेन परिचरेमेत्यर्थः ॥ १८ ॥

वन्देऽहं मङ्गलात्मानं भास्वन्तं वेदविग्रहं ।
याज्ञवल्क्यं मुनिश्रेष्ठं कृष्णं हरिहरं प्रभुम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीवासुदेवपुरीपूज्यपादपरमकारुण्यासादितश्रीकृष्णभक्तिसाम्राज्यस्य श्रीमज्जातवेदभट्टोपाध्यायस्य सूनुना चतुर्वेदिश्रीमदानन्दभट्टोपाध्यायेन विरचिते काण्ववेदमन्त्रभाष्यसङ्ग्रहे चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ ॐ तत्सत् ॥



# अथ अनन्ताचार्यकृतम् ईशावास्यभाष्यम् ॥

सर्ववेदैकसंवेद्यं हरिं देवशिखामणिम् ।
देशतः कालतश्चैव गुणतोऽनन्तमाश्रये ॥ १ ॥
चत्वारिंशे त्विहाध्याये परमात्मनिरूपणम् ।
क्रियते शोकमोहादिवर्जितैः परलक्षणैः ॥ २ ॥

ईशा वास्यमित्यस्याध्यायस्य कर्मसु विनियोगो नास्ति । किंतु शुद्धत्वैकत्वापापविद्धत्वाशरीरत्वसर्वगतत्वाद्यात्मयाथात्म्यप्रतिपादकत्वम् । तस्माद्विहितकर्मणा शुद्धान्तःकरणस्याधिकारिण आत्मस्वरूपप्रकाशनेन शोकमोहादिसाधनमज्ञानं निवर्त्य स्वरूपं दर्शयतीत्यभिधेयसंबन्धप्रयोजनवानिति व्याख्यायते । ईशा वास्यमात्मदेवत्योऽनुष्टुप्छन्दस्कोऽध्यायो दध्यङ्ङाथर्वण ऋषिः । दृष्टः गर्भाधानादिसंस्कारसंस्कृतमधीतवेदं जनितसुतं यथाशक्तिकृतयज्ञं निष्पापं निस्पृहं यमनियमोपेतं मुमुक्षुमुपसन्नं शिष्यं पुत्रं वा ऋषिरुपदिशन्नाह । ईशेति । ईश ऐश्वर्ये क्विबन्तः इष्ट इतीट् । सर्वस्येशिता परमेश्वरः । स हि सर्वजन्तूनामात्मत्वात्सर्वमीष्टे । तेनात्मना ईशा परमेश्वरेणेदं सर्वं प्रत्यक्षप्रमाणसिद्धं विश्वं वास्यं । वस आच्छादने ऋहलोर्ण्यदिति ण्यत्प्रत्ययः णित्वात्स्वरितः । आच्छादनीयं सर्वं तेन व्याप्तमित्यर्थः । स एवाधस्तात्स एवोपरिष्टात् । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इत्यादिश्रुतेः । इयद्वा इदं सर्वं ईशा परब्रह्मणा वास्यं वसनवासि वासितं उत्पादितं स्थापितं नियमितं च । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति । यमयत्येष त आत्मान्तर्याम्यमृत इत्यादिश्रुतेः । न केवलं प्रत्यक्षगम्यमीशा वास्यं अपि तु सावरणं ब्रह्माण्डमित्याह । यदिति । यत्किञ्चिच्छ्रुतिप्रमाणसिद्धं जगत्यां जगत् । स्थावरजङ्गमात्मकं शेषं विश्वमीशेनोत्पादितं स्थापितं नियमितं चेत्यर्थः । अतः कारणात्तेनेशा त्यक्तेन विसृष्टेन दत्तेन स्वादृष्टानुसारिणा विषयेण भुञ्जीथाः भोगाननुभवेः । इतोऽधिकं मा गृधः गृधुरभिकाङ्क्षायां माकाङ्क्षीः । इतो ममाधिकं भवत्विति धियं त्यजेत्यर्थः । परमात्माधीनत्वेन त्वदिच्छाया व्याहतत्वादिति भावः । एवं सद्धनं कस्यस्विन्स्विदिति निपातो वितर्के न कस्यापीत्यर्थः । स एष सर्वस्य वशी सर्वस्येशानः सर्वमिदं प्रशास्ति यदिदं किञ्चेत्यादिश्रुतेर्मुख्यदाता परमेश्वरो न स्वामिसंबन्धालिङ्गितमन्यत्प्राणिजातमिति वैराग्येण भवितव्यमिति तात्पर्यं ॥ १ ॥

इदानीं चित्तशुद्ध्यर्थं विहितमवश्यमनुष्ठेयमित्याह । कुर्वन्नेवेति । कर्माण्यग्निहोत्रादीनि निष्कामानि मुक्तिहेतुकानि कुर्वन्नेवेहलोके शतं समाः शतवर्षपर्यन्तं जिजीविषेत् । पुरुषव्यत्ययः प्रकरणात् । त्वं जिजीविषेः जीवितुमिच्छेः । भवाञ्जिजीविषेदितिवा । पुरुषायुषस्य शतवर्षमितत्वाच्छतग्रहणं कालाध्वनोरत्यन्तसंयोग इति द्वितीया । यावच्छक्ति कर्तव्यं न कदापि त्याज्यमिति । कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूर्माते सङ्गोस्त्वकर्मणीति । ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा मनीषिणः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसेति भगवद्वचनात् । त्वयीति विभक्तिव्यत्ययः तव एवं कर्म कुर्वतो जिजीविषतो मुक्तिरस्तीति शेषः । इतः प्रकारादन्यथा प्रकारान्तरेण मुक्तिर्नास्तीत्ययमभिप्रायः । स्वर्गादिप्राप्तौ यथा नानोपायाः सन्ति न तथा मुक्तावित्यर्थः । ब्रह्मार्पणबुद्ध्या कृतकर्मणा शुद्धान्तःकरणस्यैव मुक्तिरिति भावः । ननु कर्मणोऽवश्यं फलेन भाव्यं कथं मुक्तिरित्याह । नकर्मेति । मुक्त्यर्थं क्रियमाणं कर्म नरे मनुष्ये त्वयि न लिप्यते न बध्यते । स्वोचितेनासङ्कल्पितफलेन कर्मणा भगवन्तमाराधयन्तं नरमपि त्वां न प्रागुत्तरकर्म बाधत इत्यर्थः । मुक्तिकारणान्तःकरणशुद्ध्यापादकत्वेनोपक्षीणशक्तित्वात् । उक्तं हि । द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तौ च विभाषित इति ॥ २ ॥

अथ काम्यपरान्निन्दति । असुर्याइति । ये के च ये केचिज्जना आत्महनः आत्मानं घ्नन्ति संसारे संबन्धयन्तीत्यात्महनः अविद्वांसः काम्यकर्मपरा आत्महन्तारः ते प्रेत्य मृत्वा तान्लोकानभिगच्छन्ति । अभिराभिमुख्ये ते के ये लोका असुर्याः असुराणा मिमे असुर्याः असुषु प्राणेष्वेव रमन्त इत्यसुराः प्राणपोषणमात्रपरा अज्ञानिनः केवलविषयासक्तास्तैः प्राप्या असुर्याः कीदृशाः अन्धेन तमसा अज्ञानात्मकेन तमसा आवृताः आच्छादिताः अज्ञानाधिक्यकारिणः अनात्मज्ञाः पुनः पुनर्जायन्ते म्रियन्ते चेत्यर्थः । उक्तं हि भगवता श्रीगीतायां । कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः । जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयमिति । अनेकचित्तविभ्रान्ता मोहजालसमावृताः । प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचाविति । तस्माद्यथायोगं वर्णाश्रमविहितकर्मणा भगवन्तमाराधयंस्तत्प्रसादेन निवृत्तस्वान्तःकलुषो जातवैराग्य आत्मवित्मुक्तो भवतीति प्रघट्टकार्थः । ब्रह्मविदाप्नोति परं तमेवंविद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते । एवं त्वयि नान्यथेतोऽस्तीत्यादिश्रुतिभिर्ब्रह्मज्ञानमेव मोक्षसाधनमित्युक्तं । तद्ब्रह्म किंविधमित्यत आह ॥ ३ ॥

अनेजदिति । त्रिष्टुप्छन्दस्केयमृक् तद्ब्रह्म । अनेजत् । एजृ कम्पने न एजतीत्यनेजत् । अकम्पमानोऽभयमचलदिति केचित्तथात्वेन मनसो जवीय इत्युत्तरविरोधः अजरोऽमृतोऽभयो ब्रह्मेतिश्रुतेश्च । एकं समाधिकरहितं । न तत्समश्चाभ्यधिकश्च दृश्यते इति श्वेताश्वतरोक्तेः । यद्वा सर्वभूतेषु विज्ञानघनरूपेणैकं एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मेति श्रुतेः । मनसो जवीयः मनो हि वेगवत्प्रसिद्धं ततोऽपि जवीयः वेगवत्तरं जवोस्यास्तीति जववदत्यन्तं जववदिति जवीयः ईयसुनि कृते विन्मतोर्लुगिति मतुपो लुक् देहस्थस्य मनसो दूरस्थब्रह्मलोकादिसङ्कल्पनं क्षणमात्राद्भवतीति मनसो वेगवत्तरत्वं तस्याप्यगम्यत्वाद्ब्रह्म मनसो जवीय इत्युपपद्यते किंच देवा ब्रह्माद्या अपि एनद्ब्रह्म न आप्नुवन्कात्स्न्येनाजानन् । देवा द्योतमानाश्चक्षुरादयोऽप्येनन्नाप्नुवन्न गोचरीकुर्वन्तीति केचित् । तत्तु मनोगम्यत्वादेवापीहस्थितं । पूर्वं सर्वजगत्कारणं । यतोवा इमानि भूतानि जायन्त इति श्रुतेः । अर्षत् ऋषगतौ अर्षतीत्यर्षत् ज्ञानस्वरूपं सत्यं ज्ञानमनन्तं ब्रह्मेतिश्रुतेः । किंच लोकविलक्षणं लक्षणान्तरमाह । तिष्ठदिति । तिष्ठतीतितिष्ठत्स्वस्थाने स्थितमपि सर्वगतत्वाद्धावतः द्रुतं गच्छतोऽन्यान्मनआदीनत्येत्यतिक्रम्य तिष्ठति अचिन्त्यशक्तिकमित्यर्थः । किंच मातरिश्वा मातरि अन्तरिक्षे श्वयति वर्धत इति मातरिश्वा वायुः टुओश्विगतिवृद्ध्योरितिधातुः । तस्मिन्ब्रह्मणि अपः कर्माणि दधाति धारयति । अप इति कर्मनाम कार्यकारणजातानि यस्मिन्नेतानि प्रोतानि यश्च सूत्रसंज्ञः सर्वस्य जगतो विधारयिता सर्वप्राणभृच्चेष्टकः सोऽपि वायुः प्राणिनां चेष्टालक्षणानि कर्माणि तस्मिन्ब्रह्मणि स्वाधिष्ठाने सति दधाति सर्वचेष्टको वायुः तस्यापि चेतयितृ ब्रह्मेत्यर्थः । भीषास्माद्वातः पवत इत्यादिश्रुतेः । यद्वा मातरिश्वा वायुः अपः कर्माणि आप्यन्ते प्राप्यन्ते सुखदुःखानि याभिस्ता अपः कर्माणि । आप्नोतेर्ह्रस्वश्चेति क्विप् धातोर्ह्रस्वश्च । तानि कर्माणि यज्ञहोमादीनि यस्मिन्दधाति स्थापयति । सर्वप्राणिकर्माणि समर्पयतीत्यर्थः । देवा गातुविदो गातुं वित्त्वा गातुमीतमनसस्पत इमं नो देवदेवेषु यज्ञ ः स्वाहा वाचि स्वाहा वातेधा इति समिष्टयजुर्मन्त्रे वायुस्थत्वोक्तेः सर्वकर्माणि तावद्वायौ स्थाप्यन्ते समष्टिव्यष्टिरूपोऽसौ वायुरपि तानि सर्वाणि तस्मिन्दधाति अतो यागहोमादीनां कर्मणां परमास्पदत्वं ब्रह्मलक्षणमित्यर्थः ॥ ४ ॥

रहस्यं सकृदुक्तं न चित्तमारोहतीति पूर्वं मन्त्रोक्तमपि पुनर्वदति। तदिति ।अनुष्टुप् तत्प्रकृतमात्मतत्त्वं एजति चलति तदेव न एजति च । स्वतो नैव बिभेति । अमपमेव सन्मूढदृष्ट्या बिभेति च यद्वा एजतिरन्तर्भावितण्यर्थः । तदेजयति ।

दुष्टान्तदेव नैजयति सदाचारानिति शेषः । परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युग इति स्मृतेः । किंच तद्दूरे दूरदेशेऽस्ति तदु तदेव अन्तिके समीपेऽप्यस्ति सर्वगतत्वात् । यद्वा तद्दूरे अविदुषामब्दकोट्याप्यप्राप्यत्वाद्दूर इवेत्यर्थः । तद्वन्तिके विदुषां हृद्यवभासमानत्वादन्तिक इव न केवलं दूरेऽन्तिकेऽस्ति । किंतु अस्य सर्वस्य नामरूपक्रियात्मकस्य जगतोऽन्तरभ्यन्तरं तदेवास्ति । अस्य सर्वस्य बाह्यतो बहिरपि तदु तदेवास्ति आकाशवद्व्यापकत्वात् । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति श्रुतेः । यद्वास्य मन्त्रस्यार्थान्तरं । पूर्वं कारणरूपमुक्तमिदानीं कार्यरूपमुद्दिशति । तदिति । तदात्मतत्त्वमेजति सर्वजन्तुरूपेण स्थितं सच्चलति तदेव नैजति । स्थावररूपावस्थं न चलति तद्दूरे आदित्यनक्षत्ररूपेणास्थितत्वात् । तदु अन्तिके धरादिरूपेण स्थितत्वात् । अस्य सर्वस्य प्राणिजातस्य अन्तर्मध्येऽन्तर्यामिरूपेण स्थितं तदेव यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयतीति श्रुतेः । अस्य सर्वस्य जगतो बाह्यतः तदु तदेव कालरूपेण विद्यमानत्वात् । अन्तर्बहिः पुरुषः कालरूप इति स्मृतेः । चेतनाचेतनरूपमनन्तं ब्रह्मैवेत्यर्थः एवमुपासितुरर्चिरादिमार्गेण गमनं नास्ति । इहैव ब्रह्मप्राप्तिः । न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते । ब्रह्मैव सन्ब्रह्माप्येतीत्यादिश्रुतेः । तद्वन्तिक इत्यत्र उकारोऽप्लुतोऽस्पर्शादिति प्रातिशाख्येन सन्धिः ॥ ५ ॥

अथोपासनाप्रकारमाह । यस्त्विति । अनुष्टुप् यः पुनरधिकारी सर्वाणि भूतान्यव्यक्तादिस्थावरान्तानि चेतनाचेतनान्यात्मन् सप्तम्या लुक् आत्मन्येवानुपश्यति । ब्रह्मण्येव सर्वाणि भूतानि स्थितानीति जानाति । आत्मानं च सर्वभूतेषु अनुपश्यति । ततस्तस्माद्दर्शनान्न विजुगुप्सते । जुगुप्सां नाप्नोति मुक्तो भवतीत्यर्थः । उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणं । गुप्धातोर्गुप्तिज्किद्भ्यः सन्निति स्वार्थे सन्प्रत्ययः । यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यतीति भगवद्वचनसमानार्थको मन्त्रोऽयम् ॥ ६ ॥

इममेवार्थं द्वितीयोमन्त्रो वदतीत्याह। यस्मिन्निति। अनुष्टुप् यस्मिन्नवस्थाविशेषे विजानतः सर्वाणि भूतानि आत्मनि सन्ति । आत्मा च सर्वभूतेष्वस्तीति विशेषेण ज्ञानवतः पुरुषस्य सर्वस्य खल्विदं ब्रह्मेत्यादिवाक्यार्थविचारेण सर्वाणि भूतान्यात्मैवाभूत् । भवन्ति सर्वभूतेष्ववस्थित आत्मैक एवेति ज्ञानं भवति । सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः । सर्वथा वर्तमानोऽपि स योगी मयि

वर्तत इति भगवदुक्तेः । तत्रावस्थाविशेष एकत्वं आत्मैकत्वं अनुपश्यतस्तस्य को मोहः कः शोकश्च अविद्याकार्ययोः शोकमोहयोः सर्वथाऽसंभवात्सकारणकस्य संसारस्यात्यन्तमुच्छेद इति भावः । भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर इति श्रुते ॥ ७ ॥

एवंभूतात्मज्ञानिनः फलमाह । स इति । जगती योऽधिकारी पूर्वोक्तप्रकारेणात्मानं पश्यति स ईदृशमात्मानं पर्यगात्प्राप्नोति छन्दसि लुङ्लङ् लिट इतिसूत्राद्वर्तमाने लुङ् कीदृशं शुक्रं शुक्लं शुद्धं रलयोरभेदात् विज्ञानानन्दस्वभावं । अकायं न विद्यते भोगार्थं कायः शरीरं यस्य सः । तं अकायत्वादेव अव्रणं अच्छिद्रं पूर्णमित्यर्थः । अस्नाविरं न विद्यन्ते स्नावाः शिरा यस्य सोऽस्नाविरस्तं । अकायमित्यनेन लिङ्गशरीरनिषेधः । अस्नाविरमिति स्नावोपलक्षितधातुमयस्थूलशरीरनिषेधइत्यपुनरुक्तिः । अत्रैवहेतुगर्भविशेषणमाह शुद्धमनुपहतं सत्त्वरजस्तमोभिः एतदेवस्पष्टयति अपापविद्धं न पापैर्विद्धं क्लेशकर्मविपाकाशयैरस्पृष्टं ईदृशमात्मानं ज्ञानी पर्यगादित्यन्वयः । कायादिरहितोऽपि परमात्मा जगत्सर्जनादिकरोत्यचिन्त्यशक्तित्वादित्याह कविरिति । ज्ञानी यं पर्येति स आत्मा शाश्वतीभ्यः समाभ्यः शाश्वतीषु समासु विभक्तिव्यत्ययः । याथातथ्यतः यथातथाभावो याथातथ्यं याथार्थ्यं तेन यथार्थस्वरूपानर्थान्पदार्थान्व्यदधाद्विदधाति कीदृशः सः कविः क्रान्तदर्शी सर्वज्ञः मनीषी मेधावी ज्ञानस्वरूपः परिभूः परिभवति सर्वं वशीकरोतीति परिभूः । स्वयंभूः स्वयमेवान्यदनपेक्ष्य भवतीति स्वयंभूः । स्वतन्त्रः । कविरित्युत्तरार्धमुपासितुः फलकथनपरमिति केचिद्व्याचक्षते । तत्प्रक्रमभङ्गादुपेक्ष्यं इदानीं पूर्वोक्तप्रकारेणानात्मविदः कर्मनिष्ठाः सन्तः कर्मकुर्वन्त एव ये जिजीविषन्ति तान्प्रत्युच्यते ॥ ८ ॥

अन्धंतमइति । षडनुष्टुभः । विद्याविद्ययोः समुच्चिचीषया प्रत्येकं निन्दोच्यते । ये जनाः अविद्या विद्याया अन्या अविद्या कर्म तां केवलामुपासते कुर्वन्ति स्वर्गार्थानि कर्माणि केवलमनुतिष्ठन्तीत्यर्थः । अविद्येत्यत्र तदन्यार्थे नञ् अब्राह्मण इतिवत् । ते प्राणिनः अन्धमदर्शनात्मकं तमोऽज्ञानं प्रविशन्ति संसारपरम्परामनुभवन्तीत्यर्थः । ततस्तस्मादन्धात्मकात्तमसः संसाराद्भूय इव इव एवार्थः । बहुतरमेव तमस्ते प्रविशन्ति ते के ये उ ये पुनः विद्यायां आत्मज्ञाने देवताज्ञाने एव रताः कर्म हित्वा विहितकर्माननुष्ठानेन प्रत्यवाये सत्यन्तःकरणशुद्ध्यभावेन ज्ञानानुदयादिति भावः । अन्ये अमुं मन्त्रमन्यथा व्याकुर्वन्ति यथा । आत्मयाथार्थ्यज्ञानस्यैवान्यथाज्ञाननिन्दया आवश्यकत्वोपपादनाधान्यथाज्ञानस्योत्क्रमसूर्यलोकसाधनत्वमनूद्यान्यथाज्ञानानिन्दनस्य ततोऽप्यधि-

कानर्थसाधनत्वमन्येन मन्त्रेणोच्यते । न तु केवलकर्मनिन्दनं तदभावेविद्याया अध्यवसायत्वाभावात् केवलकर्मणामप्रसक्तेः । कुर्वन्नेवेह कर्माणि जिजीविषेदित्येवकरणं कर्मान्यन्तायोगव्यवच्छेदार्थेन केवलकर्मकरणविधानाभावाच्च । अत्रैवं योजना । केऽविद्यामन्यथाज्ञानमुपासते ते अन्धं तमो नाम नरकं प्रविशन्ति । असन्नेव स भवति । असद्ब्रह्मेति वेद चेदिति श्रुतेः । अथ ये जनाः विद्यायामु आत्मयाथार्थ्यज्ञाने एव रताः न त्वन्धंतमःसाधनान्यथाज्ञाननिन्दने ते ततः अन्यथाज्ञानं प्राप्य तमसः सकाशाद्भूयइव बहुतरमेवान्धं तमः प्रविशन्तीति ॥ ९ ॥

ज्ञानकेवलकर्मणोः फलभेदमाह । अन्यदेवेति । विद्यया आत्मज्ञानेनान्यदेव फलममृतरूपमाहुः ब्रह्मवादिनः । अविद्यया केवलकर्मणा साध्यमन्यदेव फलं पितृलोकादिरूपमाहुर्विद्वांसः । कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानां श्रेष्ठस्तस्माद्विद्यां प्रशंसन्तीत्यादिश्रुतेः । कथमेतदवगतमित्यत आह । इतीति । इत्येवं शुश्रुम श्रुतवन्तो वयं धीराणां धीमतां वचनं । ये आचार्याः नोऽस्मभ्यं तत्कर्म च ज्ञानं च स्वरूपफलतो विचचक्षिरे व्याख्यातवन्तस्तेषामयमागमः पारम्पर्यागत इति भावः । द्वितीयपक्षे तु विद्ययाऽऽत्मयाथार्थ्यज्ञानेनान्यदेव मोक्षकदेशलक्षणं फलं साध्यमाहुर्वृद्धाः अविद्यया अन्यथाज्ञाननिन्दया अन्यदेव मोक्षैकदेशफलरूपं फलमाहुरिति धीराणां वचनं शुश्रुम ये धीराः नोऽस्मान्प्रति तन्मोक्षसाधनं विचचक्षिरे । व्याचचक्षिरे तस्मादुपपन्नः समुच्चयइति ॥ १० ॥

समुच्चयमाह । विद्यामिति । विद्यात्मज्ञानं अविद्या कर्म अन्यथाज्ञाननिन्दनं वा यद्वयं परस्परसमुच्चयार्थं तदुभयं सह ये पुरुषार्थहेतुत्वेन यो वेद एकेनैव पुरुषेणानुष्ठेयमिति जानाति । सः अविद्यया ईश्वरार्पणबुद्ध्याकृतामहोत्रकर्मणा मृत्युं मारकं अन्तःकरणमलं तीर्त्वा अन्तःशुद्ध्या कृतकृत्यो भूत्वा विद्ययात्मज्ञानेनामृतं भावप्रधानो निर्देशः । अमृतत्वं मोक्षमश्नुते प्राप्नोति उक्तं हि श्रीगीतायां भगवता । यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते । एकं साङ्ख्यं च योगं च यः पश्यति स पश्यतीति । साङ्ख्ययोगशब्दौ ज्ञानकर्मपरौ ॥ ११ ॥

उक्तमेवमुत्तरमन्त्रत्रयेण समर्थ्यते । अन्धं तम इति । ये अविद्यामुपासते तेऽन्धं तमः प्रविशन्तीत्युक्तं । तत्राविद्यास्वरूपमुच्यतेऽसंभूतिमिति ये प्राणिनः असंभूतिं नास्ति संभूतिर्जगत उत्पत्त्यादिर्यस्मात्सोऽसंभूतिस्तं संभूतेरुपलक्षणत्वात् । परमेश्वरो न जगदुत्पत्त्यादिकर्ता अपि तु स्वभावत एवोत्पद्यतेऽवतिष्ठते नश्यतीत्यात्मानमुपासते । तेन्धं तमः प्रविशन्तीत्यर्थः । यतो वा इमानि

भूतानि जायन्ते येन जातानि जीवन्तीत्यादिश्रुतेः। यत्प्रयन्त्यभिसंविशन्तीत्यादिश्रुतिविरुद्धत्वात् । असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरं । अपरस्परसंभूतं किमन्यत्कामहेतुकं । एतां दृष्टिमवष्टभ्य नष्टात्मानोल्पबुद्धयः । प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमिति भगवदुक्तेश्च । अन्यत्पूर्ववत् । यद्वा यमनियमादिसंबन्धवान्विज्ञानात्मा कश्चिन्नास्ति । जलबुद्बुदवज्जीवाः । मदशक्तिवद्विज्ञानमित्यादिदुर्वादिनो बौद्धा अनेन निन्द्यन्ते । ये नरा असंभूतिं न संभूतिरसंभूतिस्तां मृतस्य पुनः संभवो नास्ति । अतः शरीरान्ते अस्माकं मुक्तिरेवेति ये उपासते सिद्धान्तयन्ति तेऽन्धं तमः प्रविशन्ति तथा । ये उ ये च संभूत्यामेव रताः संभवन्त्यस्या इति संभूतिः परदेवता तत्रैवासक्ताः कर्मपराङ्मुखाः स्वबुद्धिमालिन्यमजानाना आत्मज्ञानमात्रएव रताः आत्मैवास्ति नान्यत्कर्मान्यदिति। कर्मकाण्डज्ञानकाण्डयोः संबन्धो नास्तीत्यभिप्रायवन्त इत्यर्थः । ते नरास्ततोन्धात्तमसो भूय इव इवशब्दो निपातो बह्वर्थः बहुतरं तमो विशन्ति । यद्वा व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते तेन यथासंभवनं संभूतिः कार्यस्योत्पत्तिः तस्या अन्या असंभूतिः प्रकृतिः कारणमव्याकृताख्यं तां असंभूतिं अव्याकृताख्यं प्रकृतिकारणम् । अविद्याकामकर्मबीजभूतामदर्शनात्मिकां ये उपासते । ते तदनुरूपमेवान्धं तमः प्रविशन्ति संसारमेव प्राप्नुवन्ति । ये तु संभूत्यां कार्यब्रह्मणि हिरण्यगर्भादावेव रतास्ते ततस्तस्मादपि भूयो बहुतरमेव तमः प्रविशन्ति ॥ १२ ॥

अथोभयोरुपासनयोः समुच्चयकारणमवयवतः फलभेदमाह अन्यदेवेति । संभवात्संभूतेः कार्यब्रह्मोपासनादन्यदेव पृथगेवाणिमाद्यैश्वर्यलक्षणं फलमाहुः कथयन्ति धीराः । तथा असंभवादसंभूतेरव्याकृतोपासनादन्यदेव फलमुक्तमन्धं तमः प्रविशन्तीत्याहुः । क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामिति भगवदुक्तेः इत्येवंविधं धीराणां धीमतां वचः शुश्रुम ।वयं श्रुतवन्तः ये धीराः नोऽस्माकं तत्पूर्वं संभूत्यसंभूत्युपासनफलं विचचक्षिरे व्याख्यातवन्तः ॥ १३ ॥

उक्तं सर्वमुपसंहरति । संभूतिं चेति । संभूतिं सकलजगत्संभवैकहेतुं परब्रह्मविनाशं विनाशोस्यास्तीति विनाशं । अर्शआदिभ्योऽजित्यच्प्रत्ययः । विनाशधर्मकं शरीरादिसंसारतदुभयं शरीरिशरीररूपं द्वयं यो योगी सह एकीभूतं वेद जानाति । नित्यानित्यं वस्तु विवेचयतीत्यर्थः । देहभिन्नोऽहं देहीवासं कर्मनिमित्तमिति ज्ञात्वा शरीरेण ज्ञानोत्पत्तिकराणि निष्कामकर्माणि कृत्वेश्वरेऽर्पयतीतिभावः । स ज्ञानी विनाशेन विनाशवता शरीरेण सात्त्विककर्मानुष्ठान-

द्वारा मृत्युं तीर्त्वान्तःकरणशुद्धिं संपाद्य संभूत्या आत्मज्ञानेनामृतत्वमश्नुते । मुक्तिं प्राप्नोति । यद्वा अस्या अर्थान्तरम् । यथा संभूत्यसंभूत्युपासनयोरेकपुरुषार्थत्वात्समुच्चय एव युक्त इत्याह । संभूतिं चेति । अत्र विनाशं विनाशेनेतिशब्दद्वये ऽवर्णलोपो द्रष्टव्यः पृषोदरादित्वात्साधुः अन्यदाहुरसंभवादिति प्रकरणात् । संभूतिं विनाशं च व्याकृताव्याकृतोपासनद्वयं यः सह वेद उभयमुपास्तेत्यर्थः । स योगी अविनाशेनाव्याकृतोपासनेन मृत्युमनैश्वर्यमधर्मकामादिदोषजातं च तीर्त्वातिक्रम्य संभूत्या हिरण्यगर्भोपासनेनामृतं प्रकृतिलक्षणमश्नुते प्राप्नोति । यद्वा संभूत्या संभवतीति संभूतिर्हिरण्यगर्भादिदेवता तया संभूत्या संभूत्युपासनया मृत्युमन्तःकरणमलादिरूपं तीर्त्वातिक्रम्याविनाशेन विनाश उपलक्षणं उत्पत्तिविनाशादिदोषरहितेन परात्मना तज्ज्ञानेनामृतं मोक्षमश्नुते । इति भिन्नक्रमेण पदयोर्व्याख्यानम् ॥ १४ ॥

एवं साधाधिकारं शिष्यं प्रति परमात्मस्वरूपं निरूप्य तत्साक्षात्कारो मोक्षसाधनमित्यतीतग्रन्थेनोक्तं । स चेश्वरसाक्षात्कारो न श्रवणादिमात्रेण भवति । नापि मोक्षः साक्षात्कारमात्रेण किंतु भगवदनुग्रहादेव । नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेनायमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामितिश्रुतेः । अतोऽनुष्ठितश्रवणमननादिकेनापि साक्षात्कारार्थं प्राप्तसाक्षात्कारेणापि च मोक्षार्थं । यथा भगवत्प्रार्थनं कार्यं तत्प्रकारप्रदर्शनार्था हिरण्मयेन पात्रेणेत्याद्युत्तरमन्त्राः । तत्रादित्यरूपोपासनमाह । हिरण्मयेन पात्रेणेति । अष्टुनुप् हिरण्मयमिव हिरण्मयं ज्योतिर्मयं यत्पात्रं पिबन्ति यत्र स्थिता रश्मयो यत्र स्थितानिति पात्रं सूर्यमण्डलं तेन तेजोमयेन मण्डलेन सत्यस्य आदित्यमण्डलस्थस्य अविनाशिनः पुरुषोत्तमस्य श्रीभगवतः मुखं मुखमिति सर्वविग्रहोपलक्षणं । लीलाविग्रहस्वरूपं अपिहितमाच्छादितं वर्तते यत्तन्मुखं हेपूषन् पुष्णातीति पूषा तत्संबोधनं हेभक्तपोषक परमात्मन् त्वं अपावृणु अपावृतमनाच्छादितं कुरु किमर्थं सत्यधर्माय दृष्टये । सत्यं सत्यज्ञानानन्दात्मकं स्वरूपं धारयति हृदये चिन्तयतीति सत्यधर्मा तस्मै चतुर्थी षष्ठ्यर्थे सत्यधर्मस्य मदादिभक्तजनस्य दृष्टये दर्शनाय साक्षात्काराय दृशिर् प्रेक्षणे ऽस्माद्भावे क्तिन्प्रत्ययः। व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशांषः इति शस्य षत्वं ष्टुनाष्टुरिति ष्टुत्वं इत्यृषिप्रार्थनम् ॥ १५ ॥

एतदेव स्पष्टीकृत्य ऋषिर्याचते । पूर्षन्निति । उष्णिक् यजुरन्ता उष्णिक् त्रिपदाऽन्त्यो द्वादशक इति वचनात् । हेपूषन् हेएकर्षे । एकश्चासावृषिश्चैकर्षिः । ऋष ज्ञाने हेमुख्यज्ञान हेयम यमयति सर्वमिति यमः योन्तरोयमयतीति श्रु-

तेः । हेसूर्य । सूरिभिर्ज्ञेयत्वात्स सूर्यः सूरिशब्दात्तद्धितो यत् । यस्येति चेति इकारलोपः । हेप्राजापत्य । प्रजानां पतिः प्रजापतिः हिरण्यगर्भस्तस्य वेदोपदेष्टृत्वेन प्रिय यो ब्रह्माणं विदधाति पूर्वं तस्मै वेदांश्च प्रहिणोति सर्वानिति श्वेताश्वश्रुतेः । मदीयान् रश्मीन्प्रकाशयन्व्यूह तेजःसमूहं च स्वरूपं बात्यं च मदीयं ज्ञानं विस्तारयेत्यर्थः । तथा यत्ते रूपं कल्याणतमं परममङ्गलं मङ्गलानां च मङ्गलमितिस्मृतेः अस्ति । तत्ते तव प्रसादादहं पश्यामि । यद्वा हेपूषन्नेकऋर्षे यम सूर्य प्राजापत्य प्रजापतेर्धर्मस्य अपत्य नरनारायणात्मन् रश्मीन्मच्चक्षुष उपघातकान्स्वान्रश्मीन्व्यूह विगमय । तेज आत्मीयं ज्योतिःसमूहमुपसंहर मद्दर्शनयोग्यं कुरु अन्यत्समानं । केन प्रकारेण पश्यसीत्यत आह य इति यः असौ पुरुषः पूर्षु शेतेऽसौ पुरुषः असौ मण्डलान्तस्थो यः पुरुषः असौ तदितरप्रतीकस्थितश्च पुरुषः सोऽहमस्मि भवामि सूर्यमण्डलादिप्रतीकस्थो मद्धृद्यन्तस्थो ज्योतीरूपश्च एकएवेति प्रकारेण ते रूपं पश्यामीत्यर्थः । एतादृशैक्यज्ञानस्यैव मोक्षसाधनत्त्वादितिभावः । अत्रासौ च शाकटायन इति प्रातिशाख्ये न यवयोः पदान्तयोः स्वरमध्ये लोप इति प्राप्तलोपप्रतिषेधादसावसाविति द्रष्टव्यं ॥ १६ ॥

इदानीं मरिष्यतो मम वायुः अध्यात्मपरिच्छेदं हित्वाधिदैवतात्मानमनिलं प्रविशत्विति प्रार्थयते वायुरनिलमिति । वायुरनिलं यजुषी ॐमितिपरमाक्षरस्य योगिनामालम्बनभूतस्य परस्य ब्रह्मणः प्रणवाख्यस्यास्थूलादिगुणयुक्तस्य ब्रह्मा ऋषिः छन्दो गायत्रं परमात्मा देवता शुद्धब्रह्मारम्भविरामे च यागहोमादिषु शान्तिपौष्टिककर्मसु चान्येषु विनियोगोऽस्य क्रतो त्रिभिर्यज्ञान्योगी स्मारयतीत्यनुक्रमणी हेपरमात्मन्मरिष्यतो मम वायुः प्राणः वायुग्रहणं सप्तदशलिङ्गोपलक्षणार्थं । तथा च सप्तदशात्मकलिङ्गरूपः प्राणोऽध्यात्मपरिच्छेदं हित्वाऽधिदैवतरूपं सर्वात्ममभृतं सूत्रात्मानं अनिलं मुख्यप्राणं प्रतिपद्यतामिति वाक्यशेषः । वायुर्वै गौतम तत्सूत्रेण वायुना हि गौतम तत्सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीतिश्रुतेः । ज्ञानकर्मसंस्कृतं लिङ्गमुत्क्रमयत्वित्यर्थः । अथ अन्तरमिदं स्थूलशरीरमग्नौ हुतं सद्भस्मान्तं भस्मैवान्तो यस्य तद्भस्मान्तं भस्मावसानं भूयात् कृतप्रयोजनत्वात् । ॐ प्रतीकात्मकत्वात्सत्यात्मकमग्न्याख्यं ब्रह्माभेदेनोच्यते ॐ हेक्रतो सङ्कल्पात्मक स्मर यन्मम स्मर्तव्यं तस्यायं कालः समुपस्थितोऽतः स्मर यस्त्वं ब्रह्मचर्ये गार्हस्थ्ये च मया परिचारितः तत्स्मर । तथा कृतं यन्मया बाल्यप्रभृत्यद्य यावदनुष्ठितं कर्म तच्च स्मर क्रतो स्मर । कृतं

स्मरेति पुनर्वचनमादरार्थं । यद्वा प्रत्यक्षत एव देहस्य भस्मान्तत्वदर्शनाद्देहनाशे च तदन्तर्गतस्य ब्रह्मणो जीवन्मरणाद्यवश्यम्भावादित्याशङ्कायामिदमुच्यते । अत्रायमर्थः यद्यपीदं शरीरं भस्मान्तं दृश्यते । तथापि तदन्तर्वर्तिनः परमेश्वरस्य न मरणादिदोषप्रसङ्गः । कुतः व्यत्ययात् अनिलं अनिलः वायुर्यदाऽमृतममृतः अथ तदा ब्रह्म अमृतमिति किं वक्तव्यं तदमृतत्वस्य कैमुत्यसिद्धत्वादिति । ननु संसारिणो वायोः कथममृतत्वं संभवति यदुपचारेण तर्हि भस्मस्यापि तथाविधममृतत्वं स्यादित्यादिशङ्क्य वायोर्देहनाशेऽपि तत्कार्यविज्ञानतिरोभावाभावोऽस्त्येव । वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति । म्लोचन्ति ह्यन्या देवता न वायुः । सैषानस्तमिता देवता यद्वायुरिति बृहदारण्यकश्रुतेः । अथ प्रणवप्रतीकं प्रार्थयते । ॐ मिति । ॐ ओतत्वादिगुणयुक्त हे क्रतो ज्ञानरूप मां स्मर । मया कृतं ध्यानादिकं च स्मर । अभ्यासस्तात्पर्यार्थः । अभ्यासेनार्थविशेषं मन्यत इति यास्कोक्तेः परमात्मकर्तृकं स्मरणं भक्तानुग्रहोन्मुखं त्वमेव । अवतीत्योम् अव रक्षणे इत्यस्माद्धातोरन्येभ्योऽपि दृश्यन्त इति मनिन् । ततोऽवतेष्टिलोपश्चेति पञ्चमीनिर्देशादवतेः परस्य मनष्टिलोपे कृते ज्वरत्वरस्रिव्यविमवामुपधायाश्चेति धातोरकारवकारयोः ऊठ् तयोः सवर्णदीर्घे सति सार्वधातुकेतिगुणे रूपसिद्धिः धातोरन्तस्यादुदात्तत्वं त्रिमात्रत्वं प्रातिशाख्यात् ॥ १७ ॥

साक्षात्कारप्रार्थनानन्तरं अग्निप्रतीकं भगवन्तं मोक्षं प्रार्थयते । अग्ने नयेति । अगस्त्यदृष्टाग्नेयदेवत्या अन्ते यज्ञान्यांगी स्मारयतीति कात्यायनस्मरणात् । हे देव क्रीडादिगुणविशिष्ट हे अग्ने अग्निप्रतीक भगवन् अस्मान्सुपथा शोभनेन मार्गेण देवयानलक्षणेन नय गमय सुपथेति विशेषणं दक्षिणायनमार्गनिवृत्त्यर्थं । यतो गतागतलक्षणेन दक्षिणायनमार्गेण निर्विण्णा वयं यतोऽग्ने त्वां याचामहे । पुनर्गमनागमनवर्जितेन शोभनमार्गेणास्मान्कर्मफलविशिष्टान्नय सुपथेत्यत्र ऋक्पूरब्धूः पथामानक्ष इति टच्प्रत्ययेन अनित्यत्वात्समासान्तविधेः । वृद्धिरादैच् इतिवत् । किमर्थं राये धनाय मुक्तिलक्षणाय कीदृशस्त्वं । विश्वानि सर्वाणि वयुनानि कर्माणि प्रज्ञानानि वा विद्वाञ्जानन् किंच जुहुराणं हुर्छाकौटिल्ये । शानच् जुहोत्यादित्वेन द्वित्वादौ सति रूपं । कुटिलं प्रतिबन्धकं वञ्चनात्मकं एनः पापं अस्मत्तो अस्मत्तः सकाशाद्युयोधि । पृथक्कुरु वियोजय नाशयेत्यर्थः । युमिश्रणामिश्रणयोः अदादित्वात् छब्लोपद्वित्वे छान्दसं हेर्धित्वं । ततो विशुद्धाय ते तुभ्यं । अनुदात्तत्वाद्युष्मदादेशः । भूयिष्ठां बहुतरां नमउक्तिं नमस्कारवचनं विधेम कुर्याम । ईदृशाभीष्टसाधकस्य तव प्रतिकरणं नमस्कार

परम्परैव नत्वन्यत्प्रत्युपकरणमस्तीति भावः । यद्वा हेदेवाग्ने अस्मान्सुपथा पुनरावृत्तिवर्जितेनार्चिरादिमार्गेण राये मोक्षाख्यवित्ताय नय मुक्तिदो भव । कुतः हेदेव आसंसारं । अस्मदनुष्ठितानि विश्वानि पूर्णानि मोक्षाय पूर्वाप्तानि वयुनानि सत्कर्माणि । वयुनमितिकर्मनामेति निघण्टूक्तेः । यद्वा वयुनानि श्रवणमनननिदिध्यासनरूपाणि । ज्ञानानि भवान्वेद नत्वदत्तया वयुनयेति भागवते वयुनशब्दस्य ज्ञानार्थकत्वात् । ननु प्रारब्धकर्मभिर्बद्धस्य तव कथं मोक्ष इत्यत आह अस्मान् जुहुराणं अल्पान्कुर्वत् । संसारे परिवर्तयदित्यर्थः । ह्वरचलनइतिधातुः । छान्दसत्वेन ह्रादिः ईदृशं एनः पापं अनिष्टं कर्मेत्यर्थः तदस्मदस्मत्तः युयोधि वियोजय वयं च मे तुभ्यं भूयिष्ठां नमउक्तिं विधेम । नच प्रकारान्तरेण प्रतिकर्तुं शक्नुम इत्यर्थः ॥ १८ ॥ इतिचत्वारिंशे एक एवानुवाकः ॥

इति श्रीमन्नागदेवभट्टात्मजेन प्रथमशाखिना श्रीमदनन्ताचार्येण विद्वज्जनकृपापात्रभूतेन विरचितायां वेदार्थदीपिकायां काण्वशाखीयसंहिताभाष्ये चत्वारिंशोऽध्यायः ॥

॥ ॐ तत्सत् ॥

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६

# केनोपनिषत्सटीकशांकरपदभाष्य-वाक्यभाष्योपेता ।

रत्नागिरिग्रामनिवासिभिर्वेदशास्त्रज्ञैर्महामहोपाध्यायैः आगाशे इत्युपाह्वैर्बालशास्त्रिभिः संशोधिता ।

तथा च

शंकरानन्दकृता केनोपनिषद्दीपिका ।

नारायणविरचिता केनोपनिषद्दीपिका ।

इदं पुस्तकद्वितयमानन्दाश्रमस्थपण्डितैः संशोधितम् ।

एतानि

हरी नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

द्वितीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८१७

खिस्ताब्दाः १८९५



* मूल्यमेको रूपकः ।

### केनोपनिषद आदर्शपुस्तकानि शुद्धीकरणार्थं येषां मिलितानि तेषां नामानि पुस्तकानां संज्ञाश्च प्रदर्श्यन्ते ।

---

(क.) इतिसंज्ञिता—केनोपनिषत्सटीकपदभाष्योपेता 'बिब्लिओथिका इण्डिका' इति ग्रन्थावल्यां मुद्रिता पुण्यपत्तननिवासिनां कैलासवासिनां वे. शा. सं. देवोपाह्वबालशास्त्रिणाम् ।

(ख.) इतिसंज्ञिता—केनोपनिषत्सटीकपदभाष्योपेता काश्यां शिलामुद्रिता रा. रा. महादेव चिमणाजी आपटे इत्येतेषाम् ।

(ग.) इतिसंज्ञिता—केनोपनिषत्सटीकपदभाष्योपेता, इन्दूरपुरनिवासिनां किबे इत्युपाह्वानां श्रीयुतानां रा. रा. भाऊसाहेब बाळासाहेब इत्येतेषाम् ।

(घ.) इतिसंज्ञिता—केनोपनिषत्सटीकपदभाष्योपेता वटोदरानिवासिनां श्रीयुतानां पटवर्धनोपाह्वानां रा. रा. कृष्णराव भीमाशंकर इत्येतेषाम् ।

(ङ.) इतिसंज्ञिता—केनोपनिषत्सटीकपदभाष्योपेता वे. शा. सं. रा. रा. दिनकर शास्त्री जोशी नागावकर इत्येतेषाम् । लेखनकालः सं० १८६२

(च.) इतिसंज्ञिता—केनोपनिषत्सटीकपदभाष्योपेता बडलीग्रामनिवासिनां श्रीयुतानां वे. शा. सं. रा. रा. चिदम्बरदीक्षितकुलोत्पन्नानां मार्तण्डदीक्षितानाम् । लेखनकालः शके १७६७

(छ.) इतिसंज्ञिता—केनोपनिषत्पुण्यपत्तननिवासिनां श्रीयुतानां रा. रा. भाऊसाहेब नगरकर इत्येतेषाम् ।

(ज.) इतिसंज्ञिता—केनोपनिषत्पुण्यपत्तननिवासिनां श्रीमतां पुरन्दरे इत्युपाह्वानां मल्हारराव इत्येतेषाम् ।

(झ.) इतिसंज्ञितम्—केनोपनिषत्पदभाष्यं सटीकं करवीरपुरनिवासिनां वे. शा. सं. द्रविडोपाह्वानां नानाशास्त्रिणाम् ।

(ञ.) इतिसंज्ञिता—केनोपनिषत्सटीकपदभाष्योपेता करवीरपुरनिवासिनां श्रीमतां वे. शा. सं. गुरुमहाराजानाम् । लेखनकालः सं० १८७८

(ट.) इतिसंज्ञिता—केनोपनिषत्सटीकपदभाष्योपेता अष्टेग्रामनिवासिनां लिमये इत्युपाह्वानां रा. रा. गोविन्दशर्मणाम् ।

(ठ.) इतिसंज्ञिता—केनोपनिषत्सटीकपदभाष्योपेता नागपुरनिवासिनां श्रीयुतानां रा. रा. आप्पासाहेब बुटी इत्येतेषाम् ।

(क.) इतिसंज्ञिता—केनोपनिषत्सटीकवाक्यभाष्योपेता बडलीग्रामनिवासिनां

श्रीयुतानां वे. शा. सं. रा. रा. चिदम्बरदीक्षितकुलोत्पन्नानां मार्तण्डदीक्षितानाम् । लेखनकालः शके १७६७

( ख. ) इतिसंज्ञिता—केनोपनिषत्सटीकवाक्यभाष्योपेता, इन्दूरपुरनिवासिनां किबे इत्युपाह्वानां श्रीयुतानां भाऊसाहेब बाळासाहेब इत्येतेषाम् ।

( ग. ) इतिसंज्ञिता—केनोपनिषत्सटीकवाक्यभाष्योपेता वे. शा. सं. रा. रा. दिनकरशास्त्री जोशी नागावकर इत्येतेषाम् । लेखनकालः सं० १८६६

(घ.) इतिसंज्ञिता—केनोपनिषत्सटीकवाक्यभाष्योपेता वटोदरनिवासिनां श्रीयुतानां पटवर्धनोपाह्वानां रा. रा. कृष्णरावभीमाशंकर इत्येतेषाम् ।

( ङ. ) इतिसंज्ञितम्—केनोपनिषद्वाक्यभाष्यं विंचूरपुरनिवासिनां श्रीयुतानां रा. रा. रावसाहेब अण्णासाहेब इत्येतेषाम् । लेखनकालः शके १६३२

( च. ) इतिसंज्ञिता—केनोपनिषत्सटीकवाक्यभाष्योपेता मुम्बापुरनिवासिनां वे. शा. सं. रा. रा. जयकृष्णमहाराजानाम् ।

( छ. ) इतिसंज्ञितम्—केनोपनिषद्वाक्यभाष्यं सटीकं करवीरपुरनिवासिनां वे. शा. सं. रा. रा. द्रविडोपाह्वानां नानाशास्त्रिणाम् ।

(ज.) इतिसंज्ञितम्—केनोपनिषद्वाक्यभाष्यं करवीरपुरनिवासिनां श्रीमतां वे. शा. सं. गुरुमहाराजानाम् । लेखनकालः शके १६९५

( झ. ) इतिसंज्ञिता—केनोपनिषत्सटीकवाक्यभाष्योपेता करवीरपुरनिवासिनां श्रीमतां वे. शा. सं. गुरुमहाराजानाम् ।

( ञ. ) इतिसंज्ञिता—केनोपनिषत्सटीकवाक्यभाष्योपेता नागपुरनिवासिनां श्रीयुतानां रा. रा. अप्पासाहेब बुटी इत्येतेषाम् ।

( क. ) इतिसंज्ञिता—केनोपनिषद्दीपिका मुम्बापुरनिवासिनां वे. शा. सं. रा. रा. जयकृष्णमहाराजानाम् ।

( ख. ) इतिसंज्ञिता—केनोपनिषद्दीपिका वटोदरनिवासिनां श्रीयुतानां पटवर्धनोपाह्वानां रा. रा. कृष्णरावभीमाशंकर इत्येतेषाम् ।

( ग. ) इतिसंज्ञिता—केनोपनिषद्दीपिका मूलयुता *

( क. ) इतिसंज्ञिता—केनोपनिषद्दीपिका नारायणविरचिता पुण्यपत्तननिवासिनां श्रीयुतानां रा. रा. भाऊसाहेब नगरकर इत्येतेषाम् ।

---

* इदं आनन्दाश्रमकोशात्प्राप्तम् । एतत्पुस्तकस्य स्वामिनो नाम न ज्ञायते ।

# केनोपनिषत् ।

## आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता ।

### अथ श्रीमच्छंकरभगवत्पादविरचितं भाष्यम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

केनेषितमित्याद्योपनिषत्परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्याऽऽरम्भः । प्रागेतस्मात्कर्माण्यशेषतः परिसमापितानि समस्तकर्माश्रयभूतस्य च प्राणस्योपासनान्युक्तानि कर्माङ्गसामविषयाणि च । अनन्तरं च गायत्रसामविषयं दर्शनं वंशान्तमुक्तं कार्यं सर्वमेतद्यथोक्तं कर्म च ज्ञानं च सम्यगनुष्ठितं निष्कामस्य मुमुक्षोः सत्त्वशुद्ध्यर्थं भवति । सकामस्य तु ज्ञानरहितस्य केवलानि श्रौतानि

---

अथाऽऽनन्दगिरिकृता टीका ।

यच्छ्रोत्रादेरधिष्ठानं चक्षुर्वागाद्यगोचरम् ॥
स्वतोऽध्यक्षं परं ब्रह्म नित्यमुक्तं भवामि तत् ॥ १ ॥

केनेषितमित्यादिकां तलवकारशाखोपनिषदं व्याचिख्यासुर्भगवान्भाष्यकारोऽहंप्रत्ययगोचरस्याऽऽत्मनः संसारित्वादसंसारिब्रह्मभावस्योपनिषत्प्रतिपाद्यस्यासंभवान्निर्विषयत्वादव्याख्येयत्वमित्याशङ्क्याहंकारसाक्षिणः संसारित्वग्राहकप्रमाणाविषयत्वाद्ब्रह्मत्वप्रतिपादने विरोधासंभवात्सविषयत्वाद्व्याख्येयत्वं प्रतिजानीते—**केनेषितमित्याद्येति** । कस्तर्हि नवमस्याध्यायस्याष्टाध्याय्या सह नियतपूर्वोत्तरभावानुपपत्तिलभ्यः संबन्ध इत्याशङ्क्य हेतुहेतुमद्भावलक्षणसंबन्धं दर्शयितुं वृत्तमनुवदति—**प्रागेतस्मादित्यादिना** । कर्माङ्गसाम पाञ्चभक्तिकं साप्तभाक्तिकं च तद्विषयाण्युपासनानि पृथिव्यादिदृष्ट्योक्तानि । प्राणदृष्ट्या गायत्रसामोपासनं च । शिष्याचार्यसंतानाविच्छेदो वंशस्तदवसानेन ग्रन्थेन कार्यरूपमेव वस्तूक्तं चेत्तर्हि प्राणाद्युपासनसहितस्य कर्मणः संसारफलत्वाद्ब्रह्मज्ञानानुपयोगात्कथं हेतुहेतुमद्भावः संबन्धोऽभिधित्सित इत्याशङ्क्य नित्यकर्मणां तावज्ज्ञानोपयोगित्वं कथयति—**सर्वमेतदिति** । काम्यानां प्रतिषिद्धानां च फलं तद्दोषदर्शनेन वैराग्यार्थं कथयति—**सकामस्य त्विति** ।

---

१ क. ख. ग. ज. 'न्धोऽभिधित्सित। २ घ. ग. ड. झ. ट. 'णां फलं तावज्ज्ञानोपयोगि क'।

स्मार्तानि च कर्माणि दक्षिणमार्गप्रतिपत्तये पुनरावृत्तये च भवन्ति। स्वाभाविक्या त्वशास्त्रीयया प्रवृत्त्या पश्वादिस्थावरान्ताऽधोगतिः स्यात्। "अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति। जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्।" इति श्रुतेः। "प्रजा ह तिस्रो अत्यायमीयुः" इति मन्त्रवर्णाद्विशुद्धसत्त्वस्य तु निष्कामस्यैव बाह्यादनित्यात्साध्यसाधनसंबन्धादिह कृतात्पूर्वकृताद्वा संस्कारविशेषोद्भवाद्विरक्तस्य प्रत्यगात्मविषया जिज्ञासा प्रवर्तते। तदेतद्वस्तु प्रश्नप्रतिवचनलक्षणया श्रुत्या प्रदर्श्यते केनेषितमित्याद्यया। काठके चोक्तम्—"पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्।" इत्यादि। "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन"। "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्याद्याथर्वणे च। एवं विरक्तस्य प्रत्यगात्मविषयं विज्ञानं श्रोतुं मन्तुं विज्ञातुं च सामर्थ्यमुपपद्यते नान्यथा। एतस्माच्च प्रत्यगात्मब्रह्मविज्ञानात्संसारबीजमज्ञानं कामकर्मप्रवृत्तिकारणमशेषतो निवर्तते। "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति मन्त्रवर्णात्। "तरति शोकमात्मवित्" इति,

एतयोः पथोर्ज्ञानकर्मणोर्मध्ये केनापि मार्गेण येन प्रवृत्तास्ते प्रतिषिद्धानुष्ठायिन इत्यर्थः। **जायस्व म्रियस्वेति**। पुनः पुनर्जायन्ते म्रियन्ते चेत्यर्थः। तिस्रः प्रजा जरायुजाण्डजोद्भिज्जलक्षणाः। पितृयाणदेवयानलक्षणमार्गद्वयगमनमतीत्य कष्टामेव गतिर्मायः प्राप्ता इत्यर्थः। एवं कर्मफलमुक्त्वा ततो विरक्तस्य विशुद्धसत्त्वस्य ब्रह्मज्ञानेऽधिकार इति दर्शयन्हेतुहेतुमद्भावमाह—**विशुद्धसत्त्वस्य त्विति**। साध्यसाधनसंबन्धाद्विरक्तस्येति संबन्धः। तत्र निमित्तस्यादृष्टस्यानियतत्वमाह—**इह कृतादिति**। कर्मफलाद्विरक्तस्य ब्रह्मजिज्ञासा भवतीत्यत्रान्यसंवादमाह—**काठके चेति**। **आवृत्तचक्षुरिति**। साध्यसाधनभावादुपरतकरणग्रामश्चक्षुर्ग्रहणस्योपलक्षणार्थत्वात्। अन्वयव्यतिरेकसिद्धत्वं चाऽऽह—**एवं हीति**। **नान्यथेति**। अविरक्तस्य बहिर्विषयाक्षिप्तचेतस आत्मजिज्ञासैवानुपपन्ना कथंचिज्जाताऽपि न फलावसाना स्याच्छूद्रयागादिवदित्यर्थः। यद्यप्येवमुपनिषदः कर्मकाण्डसंबन्धोऽस्ति तथाऽप्युपनिषज्जन्यज्ञानस्य निष्प्रयोजनत्वान्नोपनिषदो व्याख्यारम्भः संभवतीत्याशङ्क्याऽऽह—**एतस्माच्चेति**।

१ क. ख. घ. म. 'वृत्तय'। २ क. ख. म. च. प्रजाः स्वेदजा। ३ क. ख. म. घ. वृत्तय°। ४ ग. ङ. ट. 'ति कार्यकारणभा'।

" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे "

इत्यादिश्रुतिभ्यश्च । कर्मसहितादपि ज्ञानादेतत्सिध्यतीति चेन्न । वाजसनेयके तस्यान्यकारणत्ववचनात् । "जाया मे स्यात्" इति प्रस्तुत्य "पुत्रेणायं लोको जय्यो नान्येन कर्मणा । कर्मणा पितृलोको विद्यया देवलोकः" इत्यात्मनोऽन्यस्य लोकत्रयस्य कारणत्वमुक्तं वाजसनेयके । तत्रैव च पारिव्राज्यविधाने हेतुरुक्तः । " किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः " इति । तत्रायं हेत्वर्थः । प्रजाकर्मतत्संयुक्तविद्याभिर्मनुष्यपितृदेवलोकत्रयसाधनैरनात्मलोकप्रतिपत्तिकारणैः किं करिष्यामो न चास्माकं लोकत्रयमनित्यं साधनसाध्यमिष्टं येषामस्माकं स्वाभाविकोऽजोऽजरोऽमृतोऽभयो न वर्धते कर्मणा नो कनीयानित्यश्च लोक इष्टः । स च नित्यत्वान्नाविद्यानिवृत्तिव्यतिरेकेणान्यसाधननिष्पाद्यस्तस्मात्प्रत्यगात्मब्रह्मविज्ञानपूर्वकः सर्वैषणासंन्यास एव कर्तव्य इति । कर्मसहभावित्वविरोधाच्च प्रत्यगात्मब्रह्मविज्ञानस्य । न ह्युपात्तकारकफलभेदविज्ञानेन कर्मणा प्रत्यस्तमितसर्वभेददर्शनस्य

---

समुच्चयवादिनोऽभिप्रायं शङ्कते—**कर्मसहितादपीति** । एकाध्ययनविधिपरिगृहीतत्वात्कर्मज्ञानकाण्डयोरेकं फलं वाच्यं ततः कर्मसमुच्चितात्ज्ञानात्सनिदानसंसारनिवृत्तिलक्षणं फलं सिध्यतीति न कर्मसु विरक्तस्योपनिषदारम्भ इत्यर्थः । अध्ययनविधिपरिग्रहमात्रेण कर्मकाण्डस्य न मोक्षफलत्वं कल्पयितुं शक्यं फलान्तरावगमविरोधादित्याह—**न वाजसनेयक इति** । किंच यदि श्रुतेः कर्मसमुच्चितज्ञानं विधित्सितं स्यात्तदा पारिव्राज्यं नोपदिश्येत श्रुत्या हेत्वभिधानेन ततो न समुच्चयः श्रुत्यर्थ इत्याह—**तत्रैव चेति** । प्रजाशब्दस्योपलक्षणार्थत्वमादाय हेत्वर्थमाह—**तत्रायमिति** । किं करिष्यामो न किमप्यात्मकामत्वादेवेति शेषः । तत्फलं भुक्त्वा क्रमेण मोक्षसंभवात्किमिति प्रजादिष्वनादर इत्याशङ्क्याऽऽह—**न चेति** । इष्टोऽप्ययमात्मलोकः कर्मणा विना न लभ्यते फलत्वान्मोक्षस्यान्यथास्वभावमुक्तत्वे बन्धमोक्षावस्थयोरविशेषापातादित्याशङ्क्याऽऽह—**स चेति** । कर्ममोक्षे कार्यस्योत्पाद्यादेरसंभवात्सम्यग्ज्ञानादविद्यानिवृत्त्या फलप्रसिद्ध्युपपत्तेर्न कर्मकार्यो मोक्ष इत्यर्थः । ब्रह्मज्ञानस्यानुभवावसानतासिद्धये परोक्षनिश्चयपूर्वकः संन्यासः कर्तव्यः । सिद्धे चानुभवावसाने ब्रह्मात्मज्ञाने स्वभावप्राप्तः संन्यास इति द्रष्टव्यम् । इतश्च न कर्मब्रह्मात्मतानिश्चयसमुच्चयः शास्त्रार्थ इत्याह—**कर्मसहभावित्वेति** । ननु कर्मवद्ब्रह्मज्ञानस्य विधितोऽनुष्ठेयत्वाद्विधेश्च विनियोज्यादिभेदापेक्षितत्वात्कथं सर्वभेददर्शनं प्रत्यस्त-

---

१ क. ख. °त्मा नाय ।

सामवेदीयतलवकारोपनिषत् ।

सहनाववतु सह नौ भुनक्तु सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः । शान्तिः । शान्तिः ।

आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकारोदनिराकारणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः । शान्तिः । शान्तिः ।

## ॐ केनेषितं पतति

प्रत्यगात्मब्रह्मविषयस्य सहभावित्वमुपपद्यते । वस्तुप्राधान्ये सत्यपुरुषतन्त्रत्वाद्ब्रह्मविज्ञानस्य । तस्माद्दृष्टादृष्टेभ्यो बाह्यसाधनसाध्येभ्यो विरक्तस्य प्रत्यगात्मविषया ब्रह्मजिज्ञासेयं केनेषितमित्यादिश्रुत्या प्रदर्श्यते । शिष्याचार्यप्रश्नप्रतिवचनरूपेण कथनं तु सूक्ष्मवस्तुविषयत्वात्सुखप्रतिपत्तिकारणं भवति । केवलतर्कागम्यत्वं च दर्शितं भवति । "नैषा तर्केण मतिरापनेया" इति श्रुतेश्च । "आचार्यवान्पुरुषो वेद" "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इति । "तद्विद्धि प्रणिपातेन" इत्यादिश्रुतिस्मृतिनियमाच्च । कश्चिद्गुरुं ब्रह्मनिष्ठं विधिवदुपेत्य प्रत्यगात्मविषयादन्यत्र शरणमपश्यन्नभयं नित्यं शिवमचलमिच्छन्पप्रच्छेति कल्प्यते । केनेषितमित्यादि । केनेषितमिति केन कर्त्रेषितमिष्टमभिप्रेतं सन्मनः पतति गच्छति स्वविषयं प्रतीति संब-

मत्र उच्यते ब्रह्मज्ञाने सतीत्याशङ्क्याऽऽह—वस्तुप्राधान्ये सतीति । विधिजन्यप्रयत्नभाव्यो हि विधिविषय उच्यते ज्ञानं न तथेति तद्विधेरसिद्धिरित्यर्थः । यस्मात्प्रत्यगात्मनो ब्रह्मतानिश्चयस्य परोक्षस्यापरोक्षस्य वा कर्मणा समुच्चयो न प्रामाणिकस्तस्मादित्युपसंहरति—तस्मादिति । प्रश्नप्रतिवचनरूपेण प्रतिपादनस्य तात्पर्यमाह—शिष्याचार्येति । आपनेया प्रापणीया हन्तव्या वा न भवतीत्यर्थः । साधिष्ठं शोभनतमं फलं प्रापयतीत्यर्थः । इष आभीक्ष्ण्ये गतौ

## प्रेषितं मनः ।

ध्यते । इषेराभीक्ष्ण्यार्थस्य गत्यर्थस्य चेहासंभवादिच्छार्थस्यैवैतद्रूपमिति गम्यते । इषितमितीट्प्रयोगस्तु च्छान्दसस्तस्यैव प्रपूर्वस्य नियोगार्थे प्रेषितमित्येतत् । तत्र प्रेषितमित्येवोक्ते प्रेषयितृप्रेषणविशेषविषयाकाङ्क्षा स्यात् । केन प्रेषयितृविशेषेण । कीदृशं वा प्रेषणमिति । इषितमिति तु विशेषणे सति तदुभयं निवर्तते । कस्येच्छामात्रेण प्रेषितमित्यर्थविशेषनिर्धारणार्थ्येषोऽर्थोऽभिप्रेतः स्यात्केनेषितमित्येतावतैव सिद्धत्वात्प्रेषितमिति न वक्तव्यम् । अपि च शब्दाधिक्यादर्थाधिक्यं युक्तमितीच्छया कर्मणा वाचा वा केन प्रेषितमित्यर्थविशेषोऽवगन्तुं युक्तः । न प्रश्नसामर्थ्याद्देहादिसंघातादनित्यात्कर्मकार्याद्विरक्तोऽतोऽन्यत्कूटस्थं नित्यं वस्तु बुभुत्समानः पृच्छतीति सामर्थ्यादुपपद्यते । इतरथेच्छावाक्कर्मभिर्देहादिसंघातस्य प्रेरयितृत्वं प्रसिद्धमिति प्रश्नोऽनर्थक एव स्यात् । एवमपि प्रेषितशब्दस्यार्थो न प्रदर्शित एव न संशयवतोऽयं प्रश्न इति प्रेषितशब्दस्यार्थविशेष उपपद्यते । किं यथा प्रसिद्धमेव कार्यकारणसंघातस्य प्रेषयितृत्वं किंवा संघातव्यतिरिक्तस्य स्वतन्त्रस्येच्छामात्रेणैव मनआदिप्रेषयितृत्वमित्यस्यार्थस्य प्रदर्शनार्थं केनेषितं पतति

---

चेति धात्वन्तरसंभवे कथमिच्छार्थस्यैव व्याख्यानमित्याशङ्क्याऽऽह—इषेरिति । आभीक्ष्ण्यं पौनःपुन्यं तद्विषयताया गतिविषयताया वा मनसोऽनभिप्रेतत्वान्मनःप्रवर्तकविशेषस्यैव बुभुत्सितत्वादित्यर्थः । इट्[*]प्रयोगे सति गुणेन भवितव्यम् । तदैषितमिति स्यात्तदभावाच्छान्दसत्वाभिधानं न तु धातोरनिट्त्वादनुबन्धस्य विकल्पविधानादन्वेषितमन्विष्टं वेति वैकल्पिकप्रयोगादर्शनादिति । इषितं प्रेषितमिति पदद्वयस्यार्थवत्त्वमाह—तत्र प्रेषितमित्यादिना । इच्छामात्रेणेति । प्रयत्नमन्तरेण संनिधिमात्रेणेति व्याख्यातं नेदं व्याख्यानमपि शोभते । अपर्यायशब्दभेदस्यार्थभेदव्यभिचारादित्याह—अपि चेति । त्वदुक्तोऽयमर्थविशेषो न घटते संघातस्यैवेच्छादिभिः प्रवर्तकत्वसिद्धेः प्रश्नानुपपत्तिप्रसङ्गादित्याह—न प्रश्नेति । मनसः स्वातन्त्र्यात्स्वव्यतिरिक्तप्र-

---

* सेट्कत्वस्यार्धधातुविषये कित्त्वनिषेधाभावात्क्ङिति चेति निषेधप्रसक्त्या गुणेन भवितव्यमिति चिन्त्यम् । धातोरनिट्त्वाभावेऽपि यथाकथंचिदनुबन्धशब्देनेटो ग्रहणेऽपि तीषसहेति विकल्पे सत्यपि यस्य विभाषेति क्त इण्निषेधाद्वैकल्पिकप्रयोगादिति पुस्तकान्तरीयपाठोऽपि चिन्त्यः । प्रयोगादर्शनादिति पाठेऽपि यस्य विभाषेति निषेधपूरणमपेक्ष्यमेव । ण्यन्तेषिणा गुणसमर्थनं तु गुणस्येण्निमित्तत्वाभावेनेटि सतीत्यक्षराननुगुणम् । प्रेषितशब्दे प्रेरणार्थकारादिषितशब्दे ण्यर्थानुपयोगेन भाष्यानभिप्रेतं च । अनुबन्धस्येत्याद्युत्तरमन्यासंबद्धं चेति ज्ञेयम् ।

---

१ ग. घ. ङ. च. झ. म. ट. 'गादि' ।

केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥१॥ श्रोत्रस्य श्रोत्रं

प्रेषितं मन इति विशेषणद्वयमुपपद्यते । ननु स्वतन्त्रं मनः स्वविषये स्वयं पततीति प्रसिद्धम् । तत्र कथं प्रश्न उपपद्यत इति । उच्यते । यदि स्वतन्त्रं मनः प्रवृत्तिनिवृत्तिविषयं स्यात्तर्हि सर्वस्यानिष्टचिन्तनं न स्यादनर्थं च जानन्संकल्पयति । अभ्युग्रदुःखे च कार्ये वार्यमाणमपि प्रवर्तत एव मनस्तस्माद्युक्त एव केनेषितमित्यादिप्रश्नः । केन प्राणो युक्तो नियुक्तः प्रेरितः सन्प्रैति गच्छति स्वव्यापारं प्रति । प्रथम इति प्राणविशेषणं स्यात्तत्पूर्वकत्वात्सर्वेन्द्रियप्रवृत्तीनाम् । केनेषितां वाचमिमां शब्दलक्षणां वदन्ति लौकिकाः । तथा चक्षुः श्रोत्रं च स्वे स्वे विषये क उ देवो द्योतनवान्युनक्ति नियुङ्क्ते प्रेरयति ॥ १ ॥

एवं पृष्टवते योग्यायाऽऽह गुरुः शृणु त्वं यत्पृच्छसि । मनआदिकरणजातस्य को देवः स्वविषयं प्रति प्रेरयिता कथं वा प्रेरयतीति । श्रोत्रस्य श्रोत्रं शृणोत्यनेनेति श्रोत्रं शब्दस्य श्रवणं प्रति करणं शब्दाभिव्यञ्जकं श्रोत्रमिन्द्रियं तस्य श्रोत्रं स यस्त्वया पृष्टश्चक्षुः श्रोत्रं क उ देवो युनक्तीति । असावेवंविशिष्टः श्रोत्रादीनि नियुङ्क्त इति वक्तव्ये नन्वेतदननुरूपं प्रतिवचनं श्रोत्रस्य श्रोत्रमिति । नैष दोषः । तस्यान्यथाविशेषानवगमात् । यदि हि श्रोत्रादिव्यापारव्यतिरिक्तेन स्वव्यापारेण विशिष्टः श्रोत्रादिनियोक्ताऽवगम्येत दात्रादिप्रयोक्तृवत्तदेदमननुरूपं प्रतिवचनं स्यात् । न त्विह श्रोत्रादीनां प्रयोक्ता स्वव्यापारविशिष्टो लवित्रादिवदधिगम्यते । श्रोत्रादीनामेव तु संहतानां व्यापारेणाऽऽलोचनसंकल्पाध्यवसायलक्षणेन फलावसानलिङ्गेनावगम्यते । अस्ति हि श्रोत्रादिभिरसंहतो यत्प्रयोजनप्रयुक्तः श्रोत्रादिकलापो गृहादिवदिति संहतानां

वर्तकसंभावनाभावात्प्रश्नो न घटत इत्याक्षिप्य समाधत्ते—ननु स्वतन्त्रमित्यादिना । अत्युग्रदुःखे चेति । अद्यतनीनदुःखे द्यूतादिकार्ये ॥ १ ॥

प्रतिवचनस्य प्रश्नाननुरूपत्वमाशङ्क्य समाधत्ते—असावेवंविशिष्ट इत्यादिना । श्रोत्रादयः स्वविलक्षणशेषाः संहतत्वाद्गृहादिवदित्यनुमानेन श्रोत्रादिशेषी तावदवगम्यते यदि सोऽपि संहतः स्यात्तर्हि गृहादिवदचेतनः स्यात् । ततस्तस्याप्यन्यः शेषी कल्प्यस्तस्याप्यन्य इत्यनवस्थाप्रसङ्गपरिहारायासंहतश्चेतनो गम्यते । अतः सर्वसाक्षिणं लक्षयितुं युक्तमेव प्रतिवचनमित्यर्थः । फलावसानं फलनिष्पत्तिर्लिङ्गम् । यस्मिन्नवगत्या हि करणस्य व्यापारो लिङ्ग्यते नित्यावगतिव्यञ्जकत्वाद्वा फलावसानलिङ्गं व्यापारस्तेन तच्छेषी

**मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राण-**

परार्थत्वादवगम्यते श्रोत्रादीनां प्रयोक्ता । तस्मादनुरूपमेवेदं प्रतिवचनं श्रोत्रस्य श्रोत्रमित्यादि कः पुनरत्र पदार्थः श्रोत्रस्य श्रोत्रमित्यादेः । नह्यत्र श्रोत्रस्य श्रोत्रान्तरेणार्थः । यथा प्रकाशस्य प्रकाशान्तरेण । नैष दोषोऽयमत्र पदार्थः । श्रोत्रं तावत्स्वविषयव्यञ्जनसमर्थं दृष्टम् । तच्च स्वविषयव्यञ्जनसामर्थ्यं श्रोत्रस्य चैतन्ये ह्यात्मज्योतिषि नित्ये संहते सर्वान्तरे सति भवति नासतीत्यतः श्रोत्रस्य श्रोत्रमित्याद्युपपद्यते । तथा च श्रुत्यन्तराणि—"आत्मनैवायं ज्योतिषाऽऽस्ते" "तस्य भासा सर्वमिदं विभाति" "येन सूर्यस्तपति तेजसेद्धः" इत्यादीनि ।

"यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।

क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत" इत्यादि गीतासु । काठके च—"नित्यो नित्यानां चेतनश्चेतनानाम्" इति । श्रोत्राद्येव सर्वस्याऽऽत्मभूतं चेतनमिति प्रसिद्धं तदिह निवर्त्यते । अस्ति किमपि विद्वद्बुद्धिगम्यं सर्वान्तरतमं कूटस्थमजरममृतमभयमजं श्रोत्रादेरपि श्रोत्रादि तत्सामर्थ्यनिमित्तमिति प्रतिवचनं शब्दार्थश्चोपपद्यत एव । तथा मनसोऽन्तःकरणस्य मनः । न ह्यन्तःकरणमन्तरेण चैतन्यज्योतिषा दीपितं स्वविषयसंकल्पाध्यवसायादिसमर्थं स्यात् । तस्मान्मनसोऽपि मन इति । इह बुद्धिमनसी एकीकृत्य निर्देशो मनस इति । यद्वाचो ह वाचं यच्छब्दो यस्मादर्थे श्रोत्रादिभिः सर्वैः संबध्यते । यस्माच्छ्रोत्रस्य श्रोत्रम् । यस्मान्मनसो मन इत्येवम् । वाचो ह वाचमिति द्वितीया प्रथमात्वेन विपरिणम्यते । प्राणस्य प्राण इति दर्शनात् । वाचो ह वाचमित्येतदनुरोधेन प्राणस्य प्राणमिति कस्माद्द्वितीयैव न क्रियते । न । बहूनामनुरोधस्य युक्तत्वाद्वाचमित्यस्य वागित्येतावद्वक्तव्यं स उ प्राणस्य प्राण इति शब्दद्वयानुरोधेन । एवं हि बहूनामनुरोधो युक्तः कृतः स्यात् । पृष्टं च वस्तु प्रथमयैव निर्देष्टुं युक्तम् । स यस्त्वया पृष्टः प्राणस्य प्राणाख्यवृत्तिविशेषस्य प्राणस्तत्कृतं हि प्राणस्य प्राणनसामर्थ्यम् । न ह्यात्मनाऽनधिष्ठितस्य प्राणनमुपपद्यते । "को ह्येवान्यात्कः प्राण्याद्यदेष

---

लक्ष्यत इत्यर्थः । प्रतिवचनस्य संक्षेपतस्तात्पर्यमाह—श्रोत्राद्येव सर्वस्येति । यस्मादस्ति श्रोत्रस्य श्रोत्रं तस्माच्छ्रोत्रादावात्मबुद्धिः संत्यक्तव्येति शेषः । प्राणचेष्टा चेतनाधिष्ठानपूर्विकाऽचेतनप्रवृत्तित्वाद्रथादिप्रवृत्तिवदित्यभिप्रेत्याऽऽह—न ह्यात्मनाऽनधिष्ठितस्येति ।

श्चक्षुषश्चक्षुः । अतिमुच्य धीराः प्रेत्या-
स्माल्लोकादमृता भवन्ति ॥ २ ॥ न तत्र

---

आकाश आनन्दो न स्यात्" "ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति" इत्यादिश्रुतिभ्यः। इहापि च वक्ष्यते—"येन प्राणः प्रणीयते तदेव ब्रह्म त्वं विद्धि" इति । श्रोत्रादीन्द्रियप्रस्तावे घ्राणप्राणस्य ननु युक्तं ग्रहणम् । सत्यमेवं प्राणग्रहणेनैव तु घ्राणप्राणस्य ग्रहणं कृतम् । एवं मन्यते श्रुतिः । सर्वस्यैव करणकलापस्य यदर्थप्रयुक्ता प्रवृत्तिस्तद्ब्रह्मेति प्रकरणार्थो विवक्षितः। तथा चक्षुषश्चक्षू रूपप्रकाशकस्य चक्षुषो यद्रूपग्रहणसामर्थ्यं तदात्मचैतन्याधिष्ठितस्यैवातश्चक्षुषश्चक्षुः । प्रष्टुः पृष्टस्यार्थस्य ज्ञातुमिष्टत्वाच्छ्रोत्रादेः श्रोत्रादिलक्षणं यथोक्तं ब्रह्म ज्ञात्वेत्यध्याह्रियते । अमृता भवन्तीति फलश्रुतेश्च । ज्ञानाद्ध्यमृतत्वं प्राप्यते । ज्ञात्वा विमुच्यत इति सामर्थ्याच्छ्रोत्रादिकरणकलापमुज्झित्वा । श्रोत्रादौ ह्यात्मभावं कृत्वा तदुपाधिः संस्तदात्मना जायते म्रियते संसरति च । अतः श्रोत्रादेः श्रोत्रादिलक्षणं ब्रह्माऽऽत्मेति विदित्वाऽतिमुच्य श्रोत्राद्यात्मभावं परित्यज्य ये श्रोत्राद्यात्मभावं परित्यजन्ति ते धीरा धीमन्तः। नहि विशिष्टधीमत्त्वमन्तरेण श्रोत्राद्यात्मभावः शक्यः परित्यक्तुम् । प्रेत्य व्यावृत्यास्माल्लोकात्पुत्रमित्रकलत्रबन्धुषु ममाहंभावसंव्यवहारलक्षणात्त्यक्तसर्वैषणा भूत्वेत्यर्थः । अमृता अमरणधर्माणो भवन्ति । "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" "पराञ्चि खानि व्यतृणत्" "आवृत्तचक्षुरमृतत्वमिच्छन्" "यदा सर्वे प्रमुच्यन्ते" "अत्र ब्रह्म समश्नुते" इत्यादिश्रुतिभ्यः। अथ वाऽतिमुच्येत्यनेनैवैषणात्यागस्य सिद्धत्वादस्माल्लोकात्प्रेत्यास्माच्छरीरात्प्रेत्य मृत्वेत्यर्थः ॥ २ ॥

यस्माच्छ्रोत्रादेरपि श्रोत्राद्यात्मभूतं ब्रह्मातो न तत्र तस्मिन्ब्रह्मणि

---

ज्ञात्वेति पदाध्याहारे कारणमाह—प्रष्टुः पृष्टस्यार्थस्येति । सामर्थ्यादिति । श्रोत्राद्यात्मभावत्यागमन्तरेणामृतत्वासंभवाज्ज्ञानबलाच्छ्रोत्राद्यात्मभावं त्यक्त्वाऽमृता भवन्तीति संबन्धः । एतत्स्फुटयति । श्रोत्रादौ हीत्यादिना । मृत्वेति । विदेहमुक्तिर्विवक्षिता प्रारब्धभोगक्षये शरीरान्तरोत्पादे कारणाभावादवश्यंभाविनी विदुषो मुक्तिरित्यर्थः ॥२॥

सर्पाद्यध्यासाधिष्ठानरज्जुवच्छ्रोत्राद्यध्यासाधिष्ठानचैतन्यं श्रोत्रस्य श्रोत्रमित्यादिना लक्षितं तर्हि रज्जुवदधिष्ठानत्वाद्विषयत्वप्रसङ्ग इति शङ्कां निवर्तयति—यस्माच्छ्रोत्रादेरपीत्यादिना । अध्यस्तस्य ह्यधिष्ठानमेव स्वरूपमाद्यन्तमध्येषु तदत्यभिचारात्स्वरूप-

**चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि ।**

चक्षुर्गच्छति । स्वात्मनि गमनासंभवात् । तथा न वाग्गच्छति । वाचा हि शब्द उच्चार्यमाणोऽभिधेयं प्रकाशयति यदा तदाऽभिधेयं प्रति वाग्गच्छतीत्युच्यते । तस्य च शब्दस्य तन्निर्वर्तकस्य च करणस्याऽऽत्मा ब्रह्मातो न वाग्गच्छति । यथाऽग्निर्दाहकः प्रकाशकश्चापि सन्न ह्यात्मानं प्रकाशयति दहति च तद्वत् । नो मनो मनश्चान्यस्य संकल्पयितृ अध्यवसायितृ च सदात्मानं संकल्पयत्यध्यवस्यति च । तस्यापि ब्रह्माऽऽत्मेतीन्द्रियमनोभ्यां हि वस्तुनो विज्ञानं तदगोचरत्वान्न विद्मस्तद्ब्रह्मेदृशमित्यतो न विजानीमो यथा येन प्रकारेणैतद्ब्रह्मानुशिष्यादुपदिशेच्छिष्यायेत्यभिप्रायः । यद्धि करणगोचरं तदन्यस्मा उपदेष्टुं शक्यं जातिगुणक्रियाविशेषणैः । न तज्जात्यादिविशेषणवद्ब्रह्म । तस्माद्विषमं शिष्यानुपदेशेन प्रत्याययितुमिति । उपदेशे तदर्थग्रहणे च यत्नातिशयकर्तव्यतां दर्शयति—न विद्म इत्यादि । अत्यन्तमेवोपदेशप्रकारप्रत्याख्याने प्राप्ते तदपवादोऽयमुच्यते । सत्यमेवं प्रत्यक्षादिभिः प्रमाणैर्न परः प्रत्याययितुं शक्यः । आगमेन तु शक्यत एव प्रत्याययितुम् । तदुपदेशार्थमागममाह—अन्यदेव तद्विदितादथो अविदितादधीति । अन्यदेव पृथगेव तद्यत्प्रकृतं श्रोत्रादीनां श्रोत्रादीन्युक्तमविषयं च तेषाम् । तद्विदितादन्यदेव हि विदितं नाम यद्विदिक्रियया ऽतिशयेनाऽऽप्तं तद्विदिक्रियाकर्मभूतं क्वचित्किंचित्कस्यचिद्विदितं स्यादिति सर्वमेव व्याकृतं तद्विदितमेव तत्तस्मादन्यदित्यर्थः । अविदितमज्ञातं तर्हीति प्राप्त आह—अथो अविदिताद्विदितविपरीतादव्याकृ-

विषयता च न पदार्थधर्मस्ततोऽप्रयोजकोऽयं हेतुरित्यर्थः । अविषयत्वात्तर्हि शास्त्राचार्योपदेश्यत्वमपि न स्यादित्याशङ्क्य नास्त्येव वास्तवमित्याह—**इन्द्रियमनोभ्यां हीति ।** ब्राह्मणोऽयमित्यादि जातितः कृष्णोऽयमित्यादि गुणतः पाचकोऽयमित्यादि क्रियातो राजपुरुष इत्यादि संबन्धविशेषणत उपदिश्यते । ब्रह्म तु न जात्यादिमत् । "केवलो निर्गुणश्च" इत्यादिश्रुतेः । अज्ञानाऽऽगमस्य भेदेन प्रतिपन्नत्वात्तद्दृष्ट्याऽऽचार्यस्याप्यविद्यालेशोत्थदृष्ट्या व्यावहारिक उपदेश उपपद्यत आगमतस्तस्यैवाऽऽत्मा(नं) ब्रह्मरूपेण लक्षयितुं योग्यतातिशयवत्त्वादित्यभिप्रेत्याऽऽह—**अत्यन्तमेवेति ।** वाक्यस्य

१ ख. ङ. च. ञ. 'शोच्छेदद'।

इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥ ३ ॥

तादविद्यालक्षणाद्व्याकृतबीजात् । अधीत्युपर्यर्थे लक्षणयाऽन्यदित्यर्थः । यद्धि यस्माद्ध्युपरि भवति तत्तस्मादन्यदिति प्रसिद्धं यद्विदितं तदल्पं मर्त्यं दुःखात्मकं चेति हेयम् । तस्माद्विदितादन्यद्ब्रह्मेत्युक्ते त्वहेयत्वमुक्तं स्यात् । तथाऽविदितादधीत्युक्तेऽनुपादेयत्वमुक्तं स्यात् । कार्यार्थं हि कारणमन्यदन्येनोपादीयतेऽतश्च न वेदितुरन्यस्मै प्रयोजनायान्यदुपादेयं भवतीत्येवं विदिताविदिताभ्यामन्यादिति हेयोपादेयप्रतिषेधेन स्वात्मनोऽन्यब्रह्मविषया जिज्ञासा शिष्यस्य निवर्तिता स्यात् । न ह्यन्यस्य स्वात्मनो विदिताविदिताभ्यामन्यत्वं वस्तुनः संभवतीत्यात्मा ब्रह्मेत्येष वाक्यार्थः । "अयमात्मा ब्रह्म" "य आत्माऽपहतपाप्मा" । "यत्साक्षादपरोक्षाद्ब्रह्म" । "य आत्मा सर्वान्तरः" इत्यादिश्रुत्यन्तरेभ्यश्चेत्येवं सर्वात्मनः सर्वविशेषरहितस्य चिन्मात्रज्योतिषो ब्रह्मत्वप्रतिपादकस्य वाक्यार्थस्याऽऽचार्योपदेशपरम्परया प्राप्तत्वमाह—इति शुश्रुमेत्यादि । ब्रह्म चैवमाचार्योपदेशपरम्परयैवाधिगन्तव्यं न तर्कतः प्रवचनमेधाबहुश्रुततपोयज्ञादिभ्यश्चेत्येवं शुश्रुम श्रुतवन्तो वयं पूर्वेषामाचार्याणां वचनम् । य आचार्या नोऽस्मभ्यं तद्ब्रह्म व्याचचक्षिरे व्याख्यातवन्तो विस्पष्टं कथितवन्तस्तेषामित्यर्थः ॥ ३ ॥

अन्यदेव तद्विदितादथो अविदितादधीत्यनेन वाक्येनाऽऽत्मा ब्रह्मेति प्रतिपादिते श्रोतुराशङ्का जाता तत्कथं त्वात्मा ब्रह्म । आत्मा हि नामाधिकृतः कर्मण्युपासने च संसारी कर्मोपासनं वा साधनमनुष्ठाय ब्रह्मादिदेवान्स्वर्गं वा प्राप्तुमिच्छति तत्तस्मादन्य उपास्यो विष्णुरीश्वर इन्द्रश्च प्राणो वा ब्रह्म भवितुमर्हति न त्वात्मा । लोकप्रत्ययविरोधात् । यथाऽन्ये तार्किका ईश्वरादन्य आत्मेत्याचक्षते तथा कर्मिणः "अमुं यजामुं यज" इत्यन्या एव देवता उपासते । तस्माद्युक्तं यद्विदितमुपास्यं तद्ब्रह्म भवेत् । ततोऽन्य उपासक इति तामेतामाशङ्कां शिष्यलिङ्गेनोपलक्ष्य तद्वा-

पदार्थान्व्याख्याय तात्पर्यं दर्शयितुमुपक्रमते—यद्विदितं तदल्पमित्यादिना । यद्वेदितुरन्यत्तद्विदितमविदितं चेति द्वयी गतिः । ततो विदितत्वाविदितत्वनिषेधेन वेदितुः स्वरूपं ब्रह्मेत्यत्र तात्पर्यमागमस्येत्याह—न ह्यन्यस्येति ॥ ३ ॥

उक्तवाक्यार्थे लौकिकतार्किककर्मीमांसकप्रतिपत्तिविरोधमाशङ्क्य परिहरति विदितादन्यत्वप्रपञ्चनाय । अन्यदेव तद्विदितादित्यादिना ।

१ क. ख. 'न्व्याख्याय'।

यद्वाचाऽनभ्युदितं येन वागभ्युद्यते।

क्याद्वाऽऽह मैवं शङ्किष्ठाः। यच्चैतन्यमात्रसत्ताकं वाचा वागिति जिह्वामूलादिष्वष्टसु स्थानेषु विषक्तमाग्नेयं वर्णानामभिव्यञ्जकं करणं वर्णाश्चार्थसङ्केतपरिच्छिन्ना एतावन्त एवं क्रमप्रयुक्ता इत्येवं तदभिव्यङ्ग्यशब्दः पदं वागित्युच्यते। "अकारो वै सर्वा वाक्सैषा स्पर्शान्तस्थोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति श्रुतेः। मितममितं स्वरः सत्यानृते एव विकारो यस्यास्तया वाचा पदत्वेन परिच्छिन्नया करणगुणवत्याऽनभ्युदितमप्रकाशितमनभ्युक्तं येन ब्रह्मणा विवक्षितेऽर्थे सकरणा वागभ्युद्यते चैतन्यज्योतिषा प्रकाश्यते प्रयुज्यत इत्येतत्। यद्वाचो ह वागित्युक्तं वदन्वाक्। यो वाचमन्तरो यमयतीत्यादि च वाजसनेयके। "या वाक्पुरुषेषु सा घोषेषु प्रतिष्ठिता कश्चित्तां वेद ब्राह्मणः" इति प्रश्नमुत्पाद्य प्रतिवचनमुक्तम्, "सा वाग्यया स्वप्ने भाषते" इति। सा हि वक्तुर्वक्तिर्नित्या वाक्चैतन्यज्योतिःस्वरूपा। "न हि वक्तुर्वक्तेर्विपरिलोपो विद्यते" इति श्रुतेः। तदेवाऽऽत्मस्वरूपं ब्रह्म निरतिशयं भूमाख्यं बृहत्त्वाद्ब्रह्मेति विद्धि

---

अष्टसु स्थानेष्विति।

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च"

इत्येतेष्वाकाशप्रदेशेष्वाश्रितमित्यनेनाऽऽकाशोपादानत्वं सूचितम्। **आग्नेयमिति।** अग्निदेवताकमित्यर्थः। न केवलं करणं वागुच्यते वर्णाश्चोच्यन्त इत्याह—**वर्णाश्चेति।**

तदुक्तम्—"यावन्तो यादृशा ये च यदर्थप्रतिपादकाः।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः" इति।

गौरिति पदं गकारौकारविसर्जनीया एवं क्रमविशेषावच्छिन्ना इति मीमांसकाद्यनुसारेणोक्तं स्फोटवादिनोऽनुसारेणाऽऽह—**तदभिव्यङ्ग्य इति।** स्फुट्यते व्यज्यते वर्णैरिति स्फोटः पदादिबुद्धिप्रमाणकः। एकरूपाया बुद्धेरनेकवर्णावलम्बनत्वासंभवादिति भावः। उक्ते वाक्यार्थे श्रुतिसंमतिमाह—**अकार इति।** अकारप्रधानोंकारोपलक्षिता स्फोटाख्या चिच्छक्तिः सर्वा वाक्सैषा स्पर्शान्तस्थोष्मभिर्व्यज्यमाना कादयो मावसानाः स्पर्शा यरलवा अन्तस्थाः शषसहा उष्माणस्तैः क्रमविशेषावच्छिन्नैर्व्यज्यमाना नानारूपा विवर्तते। मितमृगादि पादावसाननियताक्षरत्वात्। अमितं यजुराद्यनियताक्षरपादावसानत्वात्। स्वरः साम। गीतिप्राधान्यात्। सत्यं यथादृष्टार्थवचनम्। अनृतं तद्विपरीतम्। करणं वागिन्द्रियं गुण उपसर्जनं यस्याः सा करणगुणवती पुरु-

---

१ ग घ. ङ. ट. वाक्यपदार्थे।

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ४ ॥
यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥
यच्चक्षुषा न पश्यति येन चक्षूꣳषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥

---

विजानीहि त्वं यैर्वागाद्युपाधिभिः । वाचो ह वाक्चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मनः कर्ता भोक्ता विज्ञाता नियन्ता प्रशासिता विज्ञानमानन्दं ब्रह्मेत्येवमादयः संव्यवहारा असंव्यवहार्ये निर्विशेषे परे साम्ये ब्रह्मणि प्रवर्तन्ते तान्व्युदस्याऽऽत्मानमेव निर्विशेषं ब्रह्म विद्धीत्येवशब्दार्थः । नेदं ब्रह्म यदिदमित्युपाधिभेदविशिष्टमनात्मेश्वराद्युपासते ध्यायन्ति । तदेव ब्रह्म त्वं विद्धीत्युक्तेऽपि नेदं ब्रह्मेत्यनात्मनोऽब्रह्मत्वं पुनरुच्यते । नियमार्थमन्यब्रह्मबुद्धिपरिसंख्यानार्थं वा ॥ ४ ॥

यन्मनसा न मनुते । मन इत्यन्तःकरणं बुद्धिमनसोरेकत्वेन गृह्यते । मनुतेऽनेनेति मनः सर्वकरणसाधारणम् । सर्वविषयव्यापकत्वात् । "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतेः । कामादिवृत्तिमन्मनस्तेन मनसा यच्चैतन्यज्योतिर्मनसोऽवभासकं न मनुते न संकल्पयति नापि निश्चिनोति । मनसोऽवभासकत्वेन नियन्तृत्वात् । सर्वविषयं प्रति प्रत्यगेवेति स्वात्मनि न प्रवर्ततेऽन्तःकरणम् । अन्तस्थेन हि चैतन्यज्योतिषाऽवभासितस्य मनसो मननसामर्थ्यं तेन सवृत्तिकं मनो येन ब्रह्मणा मतं विषयीकृतं व्याप्तमाहुः कथयन्ति ब्रह्मविदः । तस्मात्तदेव मनस आत्मानं प्रत्यक्चेतयितारं ब्रह्म विद्धि । नेदमित्यादि पूर्ववत् ॥ ५ ॥

यच्चक्षुषा न पश्यति न विषयीकरोत्यन्तःकरणवृत्तिसंयुक्तेन येन चक्षूंष्यन्तःकरणवृत्तिभेदभिन्नाश्चक्षुर्वृत्तीः पश्यति लोकश्चैतन्यात्मज्योतिषा विषयीकरोति व्याप्नोति ॥ ६ ॥

---

येषु चेतनेषु या वाक्शक्तिः सा घोषेषु वर्णेषु प्रतिष्ठिता तद्व्यञ्जकत्वादित्यर्थः । तदेवेत्येवकारस्य कृत्यमाह—यैर्वागाद्युपाधिभिरिति । नियमार्थमिति । पक्षेऽनात्मन्यपि ब्रह्मबुद्धौ प्राप्तायामात्मैव ब्रह्मेति बुद्धिं नियन्तुमित्यर्थः । अन्यस्मिन्नुपास्ये या ब्रह्मबुद्धिस्तन्निवृत्त्यर्थं वा पुनरब्रह्मत्वमुच्यत इत्यर्थः ॥ ४ ॥

सर्वं स्पष्टमिति न व्याख्यातम् ॥ ५ ॥ ६ ॥

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदꣳश्रुतम्।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥
यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८॥
इति प्रथमः खण्डः ॥ १ ॥
यदि मन्यसे सुवेदेति

---

यच्छ्रोत्रेण न शृणोति दिग्देवताधिष्ठितेनाऽऽकाशकार्येण मनोवृत्तिसंयुक्तेन न विषयीकरोति लोको येन श्रोत्रमिदं श्रुतं यत्प्रसिद्धं चैतन्यात्मज्योतिषा विषयीकृतं तदेवेत्यादि पूर्ववत् ॥ ७ ॥
यत्प्राणेन घ्राणेन पार्थिवेन नासिकापुटान्तरवस्थितेनान्तःकरणप्राणवृत्तिभ्यां सहितेन यन्न प्राणिति गन्धवन्न विषयीकरोति येन चैतन्यात्मज्योतिषाऽवभास्यत्वेन स्वविषयं प्रति प्राणः प्रणीयते। तदेवेत्यादि सर्वं समानम् ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादकृतौ केनोपनिषत्पदभाष्ये प्रथमः खण्डः ॥ १ ॥

एवं हेयोपादेयविपरीतस्त्वमात्मा ब्रह्मेति प्रत्यायितः शिष्योऽहमेव ब्रह्मेति सुष्ठु वेदाहं मामिति गृह्णीयादित्याशङ्क्याऽऽचार्यः शिष्यबुद्धिविचालनार्थं यदीत्याह। नन्विष्टैव सु वेदाहमिति निश्चिता प्रतिपत्तिः सत्यमिष्टा निश्चिता प्रतिपत्तिर्न हि सुवेदाहमिति। यद्धि वेद्यं वस्तु विषयीभवति तत्सुष्ठु वेदितुं शक्यं दाह्यमिव दग्धुमग्नेर्दग्धुर्न त्वग्नेः स्वरूपमेव। सर्वस्य हि वेदितुः स्वात्मा ब्रह्मेति सर्ववेदान्तानां सुनिश्चितोऽर्थः। इह च तदेव प्रतिपादितं प्रश्नप्रतिवचनोक्त्या श्रोत्रस्य श्रोत्रमित्याद्यया। यद्वाचाऽनभ्युदितमिति विशेषतोऽवधारितम्। ब्रह्मवित्संप्रदायनिश्चयश्चोक्तोऽन्यदेव तद्विदितादथो अविदितादधीत्युपन्यस्तमुपसंहरिष्यति चाविज्ञातं विजानतां विज्ञातमविजानतामिति। तस्माद्युक्तमेव शिष्यस्य सुवेदेति बुद्धिं निराकर्तुम्। न हि वेदिता वेदितुर्वेदितुं शक्योऽग्निरिव

---

॥ ७ ॥ ८ ॥ प्रथमः खण्डः ॥ १ ॥
वेदितुः स्वरूपत्वे ब्रह्मणो मा भूद्विषयत्वम्। स्वरूपत्वे मानाभावात्। अतिरिक्तस्य विषयत्वे किमनुपपन्नमित्याशङ्क्याऽऽह—सर्वस्य हीति। यदिशब्दप्रयोगे किं कारणमित्यत

दहरमेवापि नूनम् । त्वं वेत्थ ब्रह्मणो रूपं

दग्धुमग्नेः। न चान्यो वेदिता ब्रह्मणोऽस्ति यस्य वेद्यमन्यत्स्याद्ब्रह्म। "नान्य-दतोऽस्ति विज्ञातृ" इत्यन्यो विज्ञाता प्रतिषिध्यते। तस्मात्सुष्ठु वेदाहं ब्रह्मेति प्रतिपत्तिर्मिथ्यैव। तस्माद्युक्तमेवाऽऽहाऽऽचार्यो यदीत्यादि। यदि कदाचिन्मन्यसे सु वेदेति सुष्ठु वेदाहं ब्रह्मेति। कदाचिद्यथाश्रुतं दुर्वि-ज्ञेयमपि क्षीणदोषः सुमेधाः कश्चित्प्रतिपद्यते कश्चिन्नेति साशङ्कमाह यदीत्यादि। दृष्टं च "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवा-चैतदमृतमभयमेतद्ब्रह्म" इत्युक्ते प्राजापत्यः पण्डितोऽप्यसुरराड्विरोचनः स्वभावदोषवशादनुपपद्यमानमपि विपरीतमर्थं शरीरमात्मेति प्रतिपन्नः। तथेन्द्रो देवराट्सकृद्द्विस्त्रिरुक्तं चाप्रतिपद्यमानः स्वभावदोषक्षयमपेक्ष्य चतुर्थे पर्याये प्रथमोक्तमेव ब्रह्म प्रतिपन्नवान्। लोकेऽप्येकस्माद्गुरोः शृण्वतां कश्चिद्यथावत्प्रतिपद्यते कश्चिदयथावत्कश्चिद्विपरीतं कश्चिन्न प्रति-पद्यते किमु वक्तव्यमतीन्द्रियमात्मतत्त्वम्। अत्र हि विप्रतिपन्नाः सद-सद्वादिनस्तार्किकाः सर्वे। तस्मादविदितं ब्रह्मेति सुनिश्चितोक्तमपि वि-षमप्रतिपत्तित्वाद्यदि मन्यस इत्यादि साशङ्कं वचनं युक्तमेवाऽऽचार्यस्य। दहरमल्पमेवापि नूनं त्वं वेत्थ जानीषे ब्रह्मणो रूपम्। किमनेकानि ब्रह्मणो रूपाणि महान्त्यर्भकाणि च येनाऽऽह दहरमेवेत्यादि। बाढम्। अनेकानि हि नामरूपोपाधिकृतानि ब्रह्मणो रूपाणि न स्वतः। स्वतस्तु "अशब्द-मस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" इति शब्दादिभिः सह रूपाणि प्रतिषिध्यन्ते। ननु येनैव धर्मेण यद्रूप्यते तदेव तस्य स्वरूपमिति ब्रह्मणोऽपि येन विशेषेण निरूपणं तदेव तस्य रूपं स्यादत उच्यते। चैतन्यं

आह—कदाचिदिति। अक्षिणि शरीरस्य प्रतिच्छाया दृश्यत इति प्रसिद्धवदुपदेशाच्छ-रीरमात्मेति प्रतिपन्नः। छायाया व्यभिचारित्वं बुद्ध्वेत्यर्थः। सकृदिति। "य एषोऽक्षिणि पुरुषो दृश्यते" इत्येकवारमुक्तम्, "य एष स्वप्ने महीयमानश्चरति" इति द्वितीयेनोक्तम्, "तद्यत्रैतत्सुप्तः समस्तः संपन्नः" इति त्रिरुक्तमप्यात्मानमप्रतिपद्यमान इन्द्रो ब्रह्मचर्येणाध-र्मादिदोषक्षयमपेक्ष्य चतुर्थ पर्याये "एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुप-संपद्य" इत्यत्र प्रथमपर्यायोक्तमेव ब्रह्म प्रतिपन्नवानित्यर्थः। अर्भकाणि चेति। अल्पानि। न स्वतो रूपमस्ति ब्रह्मण इत्युक्तं तदाक्षिपति। ननु येनैवेति। केन तर्हि विशेषेण ब्रह्मणो निरूपणमित्याकाङ्क्षायां चैतन्यरूपेणेत्याह—चैतन्यमिति। भूतानां समस्तानां व्यस्तानां

१ क. ख. ङ. च. ट. दग्धुमग्ने। २ ग. घ. ङ. दग्धमे। ३ घ. ङ. ञ. ट. नाहं दं। ४ क. ख. च. ञ. संप्रप।

**यदस्य त्वं यदस्य देवेष्वथ नु मीमांस्यमेव ते**

पृथिव्यादीनामन्यतमस्य सर्वेषां विपरिणतानां वा धर्मो न भवति। तथा श्रोत्रादीनामन्तःकरणस्य च धर्मो न भवतीति। ब्रह्मणो रूपमिति। ब्रह्म रूप्यते चैतन्येन। तथा चोक्तम्—"विज्ञानमानन्दं ब्रह्म" "विज्ञानघन एव" सत्यं ज्ञानमनन्तम्" "प्रज्ञानं ब्रह्म" इति च ब्रह्मणो रूपं निर्दिष्टं श्रुतिषु। सत्यमेवं तथाऽपि तदन्तःकरणदेहेन्द्रियोपाधिद्वारेणैव विज्ञानादिशब्दैर्निर्दिश्यते तदनुकारित्वाद्देहादिवृद्धिसंकोचच्छेदादिषु नाशेषु च न स्वतः। स्वतस्त्वविज्ञातं विजानतां विज्ञातमविजानतामिति स्थितं भविष्यति। यदस्य ब्रह्मणो रूपमिति पूर्वेण संबन्धः। न केवलमध्यात्मोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूपं त्वमल्पं वेत्थ यदप्यधिदैवतोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूपं देवेषु वेत्थ त्वं तदपि नूनं दहरमेव वेत्थेति मन्येऽहम्। यदध्यात्मं यदधिदैवं तदपि च देवेषूपाधिपरिच्छिन्नत्वाद्दहरत्वान्न निवर्तते यत्तु विध्वस्तसर्वोपाधिविशेषं शान्तमनन्तमेकमद्वैतं भूमाख्यं नित्यं ब्रह्म न तत्सुवेद्यमित्यभिप्रायः। यत एवमथ नु तस्मान्मन्येऽद्यापि मीमांस्यं विचार्यमेव ते तव ब्रह्म। एवमाचार्योक्तः शिष्य एकान्त उपविष्टः समाहितः सन्यथोक्तमाचार्येणाऽऽगममर्थतो विचार्य तर्कतश्च निर्धार्य

---

वा देहाकारपरिणतानां चैतन्यं धर्मो न भवतीति बहिरनुपलम्भात्तद्धर्मत्वे रूपादिवत्तत्साधकत्वाभावप्रसङ्गाच्च। तथा श्रोत्रादीनामपि भौतिकत्वाविशेषाच्चैतन्यं धर्मो न भवतीति पारिशेष्यात्स्वतन्त्रचैतन्यं ब्रह्मणो रूपम्। तत्र श्रुतिसंमतिमाह—**तथाचोक्तमिति**। सत्यमेवं चैतन्यं पारमार्थिकं ब्रह्मरूपं श्रुतितात्पर्यगम्यं तथाऽपि यदुक्तं ब्रह्मणो रूपं कथं नास्तीति तदुपाधिद्वारेणैव ब्रह्मणः शब्देन निरूपणं निर्देशनं न स्वत इत्यभिप्रेत्यान्तःकरणाद्यभिव्यक्तिमुपलभ्य हि यदुपाध्यभिव्यक्तिनिमित्तं चैतन्यं तद्ब्रह्मेति निर्दिश्यत इत्यर्थः। ननूपाधिरुपहितसंबद्धो भवति चैतन्यस्य त्वसङ्गस्य कथं देहादिरुपाधिरित्याशङ्क्याऽऽह—**तदनुकारित्वादित्यादिना**। यथा जले कम्पमाने सविता कम्पत इव भिद्यमाने भिद्यत इवेति मिथ्यातद्धर्मभागित्वात्सवितुर्जलमुपाधिरित्युच्यते ननु संबन्धाद्दूरस्थयोः संयोगाद्ययोगात्। तद्वद्देहादेर्वृद्धिसंकोचच्छेदादिषु दाहादिषु नाशेषु चैतन्यस्य मिथ्यादेहधर्मभागित्वाद्देहादेरुपाधित्वमभिधीयत इत्यर्थः। ननु न स्वतश्चैतन्यतया निरूप्यते ब्रह्म कथं तर्हि तदनुभव इत्याशङ्क्याऽऽह—**स्वतस्त्विति**। अविषयतयैव विषयानुपरक्तचित्स्फुरणं ब्रह्मानुभव इत्यर्थः। **तर्कतश्चेति**। वेद्यत्वे घटा-

---

१ ट. ब. 'स्य च दे'। २ क. ख. 'त्वं तदपि चोपाधि'।

मन्ये विदितम् ॥ ९ ॥ १ ॥ नाहं मन्ये सुवेदेति नो न वेदेति वेद च । यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥ १० ॥ २ ॥ यस्यामतं तस्य मतं

---

स्वानुभवं कृत्वाऽऽचार्यसकाशमुपगम्योवाच—मन्येऽहमथेदानीं विदितं ब्रह्मेति ॥ ९ ॥ १ ॥

कथमिति । शृणुत । नाहं मन्ये सु वेदेति नैवाहं मन्ये सुवेद ब्रह्मेति । नैव तर्हि विदितं त्वया ब्रह्मेत्युक्त आह—नो न वेदेति वेद च । वेद चेति चशब्दात्र वेदं च । ननु विप्रतिषिद्धं नाहं मन्ये सु वेदेति नो न वेदेति वेद चेति । यदि न मन्यसे सु वेदेति कथं मन्यसे वेद चेति । अथ मन्यसे वेदैवेति । कथं न मन्यसे सुवेदेति । एकं वस्तु येन ज्ञायते तेनैव तदेव वस्तु न सु विज्ञायत इति विप्रतिषिद्धं संशयविपर्ययौ वर्जयित्वा । न च ब्रह्म संशयितत्वेन ज्ञेयं विपरीतत्वेन वेति नियन्तुं शक्यम् । संशयविपर्ययौ हि सर्वत्रानर्थकरत्वेनैव प्रसिद्धौ । एवमाचार्येण विचाल्यमानोऽपि शिष्यो न विचचाल । "अन्यदेव तद्विदितादथो अविदितादधि" इत्याचार्योक्तागमसंप्रदायबलादुपपत्त्यनुभवबलाच्च जगर्ज च ब्रह्मविद्यायां दृढनिश्चयतां दर्शयन्नात्मनः । कथमित्युच्यते । यो यः कश्चिन्नोऽस्माकं सब्रह्मचारिणां मध्ये तदुक्तं वचनं तत्त्वतो वेद स तद्ब्रह्म वेद । किं पुनस्तद्वचनमित्यत आह—नो न वेदेति वेद चेति । यदेवान्यदेव तद्विदितादथो अविदितादधीत्युक्तं वस्त्वनुमानानुभवाभ्यां संयोज्य निश्चितं वाक्यान्तरेण नो न वेदेति वेद चेत्यवोचदाचार्यबुद्धिसंवादार्थं मन्दबुद्धिग्रहणव्यपोहार्थं च । तथा च गर्जितमुपपन्नं भवति यो नस्तद्वेदेति ॥ १० ॥ २ ॥

शिष्याचार्यसंवादात्प्रतिनिवृत्त्य स्वेन रूपेण श्रुतिः समस्तसंवादनिर्वृत्तमर्थमेव बोधयति—यस्यामतमित्यादिना । यस्य ब्रह्मविदोऽमतमविज्ञातमविदितं ब्रह्मेति मतमभिप्रायो निश्चयस्तस्य मतं ज्ञातं सम्य-

---

दिवदनात्मत्वादिप्रसङ्गादित्यादितर्कत आत्मनो वेद्यं ब्रह्म न भवत्येवेति निर्धार्याज्ञानसंशयाद्यभावेन स्वानुभवं कृत्वेत्यर्थः ॥ ९ ॥ १ ॥

आचार्यवचनादन्यदेव वचनं शिष्य उवाचेति नाऽऽशङ्कनीयमित्याह—यदेवान्यदेवेति । तथा चेत्याचार्यबुद्धिसंवादे मत्यर्थान्तरानभिधाने सतीत्यर्थः ॥ १० ॥ २ ॥

१ क. घ. नाहम' । २ क. ख. 'द त्व न' । ३ ख. अ. 'ण व्यामोहा' । ४ क. ख. ग. घ अ. ट. 'निवर्त्य स्वे' । ५ क. ख. 'निवृत्त' ।

मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ११ ॥ ३ ॥ प्रतिबोधविदितं मत-

ब्रह्मेत्यभिप्रायः । यस्य पुनर्मतं ज्ञातं विदितं मया ब्रह्मेति निश्चयो न वेदैव स न ब्रह्म विजानाति सः । विद्वदविदुषोर्यथोक्तौ पक्षाववधारयति—अविज्ञातममतमविदितमेव ब्रह्म विजानतां सम्यग्विदितवतामित्येतत् । विज्ञातं विदितं ब्रह्माविजानतामसम्यग्दर्शिनामिन्द्रियमनोबुद्धिष्वेवाऽऽत्मदर्शिनामित्यर्थः । न त्वत्यन्तमेवाव्युत्पन्नबुद्धीनाम् । न हि तेषां विज्ञातमस्माभिर्ब्रह्मेति मतिर्भवति । इन्द्रियमनोबुद्ध्युपाधिष्वात्मदर्शिनां तु ब्रह्मोपाधिविवेकानुपलम्भाद्बुद्ध्याद्युपाधेश्च विज्ञातत्वाद्विदितं ब्रह्मेत्युपपद्यते भ्रान्तिरित्यतोऽसम्यग्दर्शनं पूर्वपक्षत्वेनोपन्यस्यते विज्ञातमविजानतामिति । अथवा हेत्वर्थ उत्तरार्धोऽविज्ञातमित्यादिः ॥ ११ ॥ ३ ॥

अविज्ञातं विजानतामित्यवधृतम् । यदि ब्रह्मात्यन्तमेवाविज्ञातं लौकिकानां ब्रह्मविदां चाविशेषः प्राप्तः । अविज्ञातं विजानतामिति च परस्परविरुद्धम् । कथं तु तद्ब्रह्म सम्यग्विदितं भवतीत्येवमर्थमाह—प्रतिबोधविदितं बोधं बोधं प्रति विदितम् । बोधशब्देन बौद्धाः प्रत्यया उच्यन्ते । सर्वे प्रत्यया विषयीभवन्ति यस्य स आत्मा सर्वबोधान्प्रतिबुध्यते

**अथवा हेत्वर्थ इति** । लोके शुक्त्यादितत्त्वं विजानतां यतोऽध्यस्तं रूप्याद्यविज्ञातं भवति । अजानतामेव त्वध्यस्तं विज्ञातं भवतीति प्रसिद्धम् । तथा ब्रह्मणि ज्ञेयत्वस्याध्यस्तत्वादेव तत्त्वविदो न ज्ञातं ब्रह्म पश्यन्तीत्यर्थः ॥ ११ ॥ ३ ॥

ज्ञातब्रह्मत्वादर्शने ब्रह्मास्मीति कथं व्यवहरतीति चेत्किमनयेष्टकावाहकानां रत्नपेटकचिन्तया ज्ञातस्य व्यवहाराङ्गत्वं वदतोऽपि वस्तुप्रकाशस्य व्यवहाराङ्गत्वस्येष्टत्वाद्वास्तवज्ञाततानपेक्षकत्वादित्यव्युत्पन्नव्युत्पादनाय चोद्यमुद्भावयति—**अविज्ञातमित्यादिना** । नीलपीताद्याकाराणां बुद्धिविकाराणां जडानां यच्चैतन्यव्याप्तत्वेनाजडवदवभासस्तं साक्षिणमुपलक्ष्य सोऽहमात्मा ब्रह्मेति महावाक्यादविषयतयैव यो वेत्ति स ब्रह्मविदुच्यते । तेन नाविशेषप्रसङ्गादिचोद्यावकाश इत्याह—**प्रतिबोधविदितमिति** । प्रत्ययेष्वविशिष्टतयाऽनुगतरूपेणेत्यर्थः । येन चित्स्वरूपेणाहमत्र साक्षी तस्य सर्वत्राविशेषान्नैकस्मिन्नेव देहेऽहं साक्षी भेदोत्पत्त्यादीनां च साक्ष्यगतत्वेन साक्षिण

१ ग. झ. ट. °ज्ञेयप्रामेयरर्वि° । २ ग. घ. ब. ञ. ट. °यया भ° ।

इतीन्न्यमीमिषदा३ इत्यधिदैवतम् ॥ २९ ॥४॥ अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णꣳ संकल्पः ॥ ३० ॥ ५॥ तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं

---

शत एवं तद्ब्रह्म देवानां पुरतः सर्वतः प्रकाशवद्व्यक्तीभूतमतो व्यद्युतदिवेत्युपास्यम्। यथा सकृद्विद्युतमिति च वाजसनेयके। यस्माच्चेन्द्रोपसर्पणकाले न्यमीमिषत्। यथा कश्चिच्चक्षुर्निमेषणं कृतवानिति। इतीदित्यनर्थकौ निपातौ। निमिषितवदिव तिरोभूतमित्येवमधिदैवतं देवताया अधि यद्दर्शनमधिदैवतं तत् ॥ २९ ॥ ४ ॥

अथानन्तरमध्यात्ममात्मनोऽध्यात्ममुच्यत इति वाक्यशेषः। यदेतद्यथोक्तलक्षणं ब्रह्म गच्छतीव प्राप्नोतीव विषयी करोतीवेत्यर्थः। न पुनर्विषयी करोति मनसोऽविषयत्वाद्ब्रह्मणोऽतो मनो न गच्छति। येनाऽऽहुर्मनो मतमिति हि चोक्तम्। गच्छतीवेति तु मनसोऽपि मनस्त्वात्। आत्मभूतत्वाच्च ब्रह्मणस्तत्समीपे मनो वर्तत इत्युपस्मरत्यनेन मनसैव तद्ब्रह्म विद्वान्यस्मात्तस्माद्ब्रह्म गच्छतीवेत्युच्यते। अभीक्ष्णं पुनः पुनश्च। संकल्पो ब्रह्मप्रेषितस्य मनसः। अत उपस्मरणसंकल्पादिभिर्लिङ्गैर्ब्रह्म मनोऽध्यात्मभूतमुपास्यमित्यभिप्रायः ॥ ३० ॥ ५ ॥

तस्य चाध्यात्ममुपासने गुणो विधीयते तद्ध तद्वनं तदेतद्ब्रह्म तच्च तद्वनं च तत्परोक्षं वनं संभजनीयम्। वननेस्तत्कर्मणस्तस्मात्तद्वनं नाम। ब्रह्मणो गौणं हीदं नाम। तस्मादनेन गुणेन तद्वनमित्युपासितव्यम्। स यः कश्चिदेतद्यथोक्तमेवं यथोक्तेन गुणेन वनमित्यनेन नाम्नाऽभिधेयं ब्रह्म

---

वादोपसंहारोऽयं विध्युपक्रमार्थम्। विद्युद्दृष्टान्तेनात्यन्तदीप्तिमत्त्वं निमेषणदृष्टान्तेन देवैरपि दुर्ज्ञेयत्वमिति गुणद्वयं देवानधिकृत्य विवक्षितम्। अत एव तद्गुणद्वयविशिष्टोपासनमाधिदैविकमुच्यते ॥ २९ ॥ ४॥ अहंग्रहणेनैतत्कर्तव्यमित्यभिप्रेत्याऽऽध्यात्मिकब्रह्मरूपमाह — आत्मेन्त्यादिना ॥ ३० ॥ ५ ॥

वननेस्तत्कर्मण इति। वन संभजन इत्यस्य धातोः संभजनार्थस्य रूपं वनमिति। तत्प्रसिद्धं वनं न गृह्यत इत्यर्थः। गौणमिति। अवयवशक्ति-

१ ग. घ. च. छ. म. 'त्मविषयमध्यात्मम्'।

वेदाभिहैनꣳ सर्वाणि भूतानि संवाञ्छन्ति॥३१॥
॥६॥ उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं
वाव त उपनिषदमब्रूमेति ॥३२॥७॥ तस्यै तपो
दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि(णि?)
सत्यमायतनम् ॥३३॥८॥ यो वा एतामेवं वेदा-
पहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रति-

वेदोपास्ते । तस्यैतत्फलमुच्यते । सर्वाणि भूतान्येनमुपासकमभिसंवाञ्छन्तीहाभिसंभजन्ते सेवन्ते स्मेत्यर्थः । यथागुणोपासनं हि फलम् ॥३१॥६॥

उपनिषदं भो ब्रूहीत्युक्तायामप्युपनिषदि शिष्येणोक्त आचार्य आह—उक्ता कथिता ते तुभ्यमुपनिषदात्मोपासनं च । अधुना ब्राह्मीं वाव ते तुभ्यं ब्रह्मणो ब्राह्मणजातेरुपनिषदमब्रूम वक्ष्याम इत्यर्थः । वक्ष्यति हि । ब्राह्मी नोक्ता । उक्ता त्वात्मोपनिषत् । तस्मान्न भूताभिप्रायोऽब्रूमेत्ययं शब्दः ॥ ३२ ॥ ७ ॥

तस्या वक्ष्यमाणाया उपनिषदस्तपो ब्रह्मचर्यादि दम उपशमः कर्माग्निहोत्रादीत्येतानि प्रतिष्ठाऽऽश्रयः । एतेषु हि सत्सु ब्राह्म्योपनिषत्प्रतिष्ठिता भवति । वेदाश्चत्वारोऽङ्गानि च सर्वाणि । प्रतिष्ठेत्यनुवर्तते । ब्रह्माश्रया हि विद्या । सत्यं यथाभूतवचनमपीडाकरमायतनं निवासः सत्यवत्सु हि सर्वं यथोक्तमायतन इवावस्थितम् ॥ ३३ ॥ ८ ॥

तामेतां तपआद्यङ्गां तत्प्रतिष्ठां ब्राह्मीमुपनिषदं[2] सायतनामात्मज्ञानहेतुभूतामेवं यथावद्यो वेदानुवर्तनेऽनुतिष्ठति । तस्यैतत्फलमाह—अपहत्य पाप्मानम् । अपक्षय्य(क्षीय) धर्माधर्मावित्यर्थः । अनन्तेऽपारेऽविद्यमानान्ते । स्वर्गे लोके सुखप्राये निर्दुःखात्मनि परे ब्रह्मणि । ज्येये महति

लभ्यं न रूढ्या समुदायशक्त्येत्यर्थः ॥ ३१ ॥ ६ ॥

ब्राह्मणजातेरुपनिषदमिति । ब्राह्मणजात्यनुष्ठेयां विद्यामात्मज्ञानसाधनभूतामित्यर्थः ॥ ३२ ॥ ७ ॥ ब्रह्मेति वेदस्तन्मूलत्वात्तदाश्रया ॥ ३३ ॥ ८ ॥

तपआदीनि वेदाङ्गान्यन्याङ्गानि यस्याः ॥ ३४ ॥ ९ ॥

सत्यकामः स्वयं सिद्धः सर्वेशो यः स्वशक्तितः ।
स एवान्तःप्रविष्टोऽहमुपास्यः सर्वदेहिनाम् ॥ १ ॥

१ ख. ज. ब्राह्म्युप° । २ ग. °दं सत्याय° । ३ क. ङ. °स्यैव त° ।

तिष्ठति प्रतितिष्ठति ॥३४॥ ९ ॥ इति चतुर्थः खण्डः ॥ ४ ॥

इति सामवेदीया तलवकारशाखोक्ता केनोपनिषत्समाप्ता ॥

---

सर्वमहत्तरे प्रतितिष्ठति सर्ववेदान्तवेद्यं ब्रह्माऽऽत्मत्वेनावगम्य तदेव ब्रह्म प्रतिपद्यत इत्यर्थः ॥ ३४ ॥ ९ ॥ इति चतुर्थः खण्डः ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पादपूज्यशिष्यश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवतः कृतौ तलवकारोपनिषदपरपर्यायकेनोपनिषद्भाष्ये क्षुद्रगणवाक्यविवरणं समाप्तम् ॥

---

इति चतुर्थः खण्डः ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवतः कृतौ सामवेदीयतलवकारशाखोपनिषत्क्षुद्रगणे वाक्यविवरणे भाष्ये श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दज्ञानविरचिता व्याख्या समाप्ता ॥

ॐ तत्सद्ब्रह्मणे नमः ।

# शंकरानन्दकृता केनोपनिषद्दीपिका ।

---

केनेषितोपनिषदं व्याकरिष्ये पदाध्वना ।
रम्यां तलवकाराणां शाखायामात्मबोधिनीम् ॥ १ ॥

ब्रह्मणः प्रत्यक्षादिप्रमाणैरनवगम्यत्वात्तदस्तित्वस्य च प्रमाणसिद्धत्वाच्चित्रेणापि कर्मणा प्राणाद्युपासनेन ब्रह्मज्ञानोत्पादमन्तरेण ब्रह्मावाप्तेः संपादयितुमशक्यत्वादशुद्धान्तःकरणस्य च ब्रह्मज्ञानोत्पादस्यासंभावितत्वादतः कर्माणि प्राणाद्युपासनानि चोक्त्वा ब्रह्मविद्यामुपक्रमते । तत्रापि प्रतिपत्तिसौकर्यार्थं गुरुशिष्यसंवादमिवाऽऽह । शिष्यः पृच्छति—केनासता सता केनाचेतनेन चेतनेन वा भिन्नेनाभिन्नेन वेषितमिष्टं कस्येच्छानिमित्तमित्यर्थः । पतति सर्वासु दिक्षु गच्छति मन इति वक्ष्यमाणेन संबन्धः । सामान्यतः प्रेरयितारं पृष्ट्वा विशेषतस्तं पृच्छति—प्रेषितं प्रेरितं धनुष्मतेव ज्याघाताद्बाणजातं को ह्येतद्देशाद्देशान्तरं नयतीत्यर्थः । मनः संकल्पविकल्पोपलक्षितमन्तःकरणं ज्ञानशक्तिरित्यर्थः । केन व्याख्यातम् । प्राणः पञ्चवृत्तिरध्यात्मादिभेदभिन्नः क्रियाशक्तिरित्यर्थः । प्रथमोऽव्याकृताभिमानिन ईश्वरस्य चेतनाचेतनात्मकं विक्षेपं जनयतः सर्वप्रवृत्तिनिमित्तं प्रथमः पुत्रः प्रैति प्रकर्षेणोर्ध्वादिदिक्षु गच्छति युक्तः संबद्धः केन प्रेरित इत्यर्थः । केन व्याख्यातम् । इषितां प्रेरितां वाचं वागिन्द्रियरूपामनेकशब्दजननीमिमां ताल्वाद्यष्टस्थानस्थां वदन्ति । अस्य वागिन्द्रियस्य वक्तुमशक्यत्वेऽपि केनचित्प्रवृत्तवागिन्द्रियास्तदुच्चार्यमाणां वर्णपदवाक्यात्मिकां वाचं व्यक्तमुच्चारयन्ति । चक्षुःश्रोत्रं चक्षुश्च श्रोत्रं च क उ को नाम देवः सर्वव्यवहारकारणभूतो युनक्ति संनद्धं करोति प्रेरयतीत्यर्थः ॥ १ ॥

गुरुराह—श्रोत्रस्य शब्दोपलब्धेरसाधारणकारणस्य श्रोत्रं यथाऽस्माकमसाधारणव्यवहारस्य कारणं श्रोत्रं तथा श्रोत्रस्यापि शब्दग्रहणसामर्थ्यस्यासाधारणं कारणम् । मनसः सर्वोपलब्धौ साधारणकारणस्य मनः साधारणकारणत्वसामर्थ्यकारणम् । यद्वेत्यर्थमुक्तैः श्रोत्रादिभिर्वक्ष्यमाणैश्चक्षुरन्तैः संबध्यते । अथवा यद्यो वाचो वागिन्द्रियस्य वर्णोच्चारणशक्तेरिह प्रसिद्धस्य वाचं वाग्वागिन्द्रियसामर्थ्य-

१ ग. चित्रा । २ ग. विद्या वक्तुम् । ३ ग. श्रोत्रस्य सा । ४ ग. कार्यस्य ।

कारणम्। यः* य उ स उं एव प्राणस्य पञ्चवृत्तेर्जीवनकारणस्य प्राणो जीवनकारणत्वसामर्थ्यकारणम्। चक्षुषो रूपोपलब्धेरसाधारणकारणस्य चक्षुश्चक्षुःसामर्थ्यकारणम्। एवंभूतो यः स एवेत्यन्वयः। मनआदेः सामान्यतो विशेषतश्च प्रेरयितेति शेषः। अयमर्थः। अस्ति मनआदीनां प्रेरयिता मनआदिविलक्षणश्चेतनश्चेतनानां भेदगन्धशून्य इति। अतो ज्ञात्वाऽविद्यां सकार्यामतिमुच्य सर्वात्मना परित्यज्य धीरा बुद्धिमन्तो ब्रह्मचर्यादिसाधनसंपन्नाः। अथवोपसर्गयोगे धातोरन्यार्थत्वं प्रायेणेति न्यायेन धीरा अतिमुच्याहं ब्रह्मास्मीति तमवगत्य प्रेत्यास्माल्लोकाल्लोकशब्दाभिधेयकार्यकारणसंघाताभिमानादस्मात्प्रतिप्राणिप्रत्यक्षात्प्रेत्य प्रकर्षेण गत्वा तदभिमानं परित्यज्येत्यर्थः। अमृता मरणकारणाविद्यातत्कार्यशून्याः। भवन्ति स्पष्टम् ॥ २ ॥

ननु येन प्रेरितं मनआदिकं गच्छति तदिदमिति शृङ्गग्राहिकया कस्मान्न प्रदर्श्यत इत्यत आह—न तत्र चक्षुर्गच्छति रूपादिहीनत्वात्तस्य तस्मिन्विषये चक्षुर्न गच्छति। ननु चक्षुरग्राह्याणामपि स्वर्गापूर्वादीनां वाग्विषयत्वं दृष्टमित्यत आह—न वाग्गच्छति स्पष्टम्। तत्रेत्यनुवर्तते। ननु वागग्राह्याणामपि चम्पककेतक्यादिगन्धभेदानां मनसा ग्रहो दृष्ट इत्यत आह—नो मन उक्तम्। गच्छति तत्रेत्यनुवर्तते। यत एवं ततः श्रोत्रस्य श्रोत्रमित्याद्युक्तोपदेशमन्तरेणास्याऽऽत्मनो दर्शन उपायान्तरं न विद्मः स्वबुद्ध्या न जानीमः। नापि विविधशास्त्रगुर्वाद्युपदेशेभ्य इत्याह—न विजानीमो विशिष्टेभ्यः शास्त्रेभ्यः शास्त्रगुर्वादिभ्य इदानीमपि नाधिगच्छामः। यथा येन प्रकारेणैतच्छ्रोत्रस्य श्रोत्रमित्यादिनोक्तं मनआदेः प्रेरकमनुशिष्यात्स्मादृशो गुरुर्भवादृशं शिष्यं श्रोत्रस्य श्रोत्रमित्यादिनोपदिश्यानु पश्चाच्छ्वेतो वर्तुलशृङ्गो गौरितिवद्विशेषणं कुर्यात्तमुपायं न विद्मो न विजानीम इत्यन्वयः। ननु लोके द्वयी मतिर्ज्ञातमज्ञातं च तत आभ्यामन्यतरविशेषणेन विशेषणीयमित्यत आह—अन्यदेव तद्विदितात्तच्छ्रोत्रस्य श्रोत्रमित्यादिनोक्तं विदिताज्ज्ञानविषयात्सर्वस्मादन्यदेव पृथगेव न तु ज्ञानविषयः। ननु तर्ह्यविदितमज्ञातस्वरूपमित्यत आह—अथो अप्यविदिताज्ज्ञानाविषयादज्ञातादन्यदेव। नन्विदं भवद्बुद्धिकल्पितमित्यत आह—इत्यनेन प्रकारेण शुश्रुम श्रुतवन्तो वयम्। पूर्वेषां पित्रादीनाम्। ते च न मूर्खा इत्येवमाह—ये प्रसिद्धाः शमदमादिसाधनसंपन्नाः शास्त्रहृदयज्ञा नोऽस्माकं सहाध्यायिनां शिष्याणां तच्छ्रोत्रस्य श्रोत्रमित्यादिनोक्तं व्याचचक्षिरे विस्पष्टमा-

* इदं पदद्वयं मूले नोपलभ्यते।

समन्तात्कथितवन्तः । अनेन गुरुमुखादेवाऽऽत्मावगतिर्भवति न तु प्रकारान्तरेणेत्यर्थादुक्तम् ॥ ३ ॥

अतो वागाद्यगम्यत्वेनैवावगन्तव्यं न त्वन्यथेत्येतन्मन्त्रपञ्चकेनाऽऽह—यत्प्रसिद्धमात्मस्वरूपं वाचा वर्णपदादिरूपया वेदलोकवाक्यात्मिकयाऽनभ्युदितमप्रकाशितं शृङ्गग्राहिकया । येन प्रसिद्धेन वाग्वागिन्द्रियं वर्णादिवाक्सहितमभ्युद्यते सर्वत उच्यते स्वव्यवहारक्षमा भवतीत्यर्थः । केनेषितां वाचमित्यस्येदमुत्तरम् । तदेव वाचा प्रकाशितं वाचः प्रेरकं न त्वन्यत् । ब्रह्म बृहद्देशकालवस्तुपरिच्छेदशून्यं त्वमस्मच्छिष्यो ब्रह्मणो भेदरहितो विद्धि जानीहि । ननु किमर्थं तदेव ज्ञातव्यं यतो बहुविधभेदमहमनहं वा तदित्युपासते जनाः । तद्वदहमपि भवदुक्तादन्यज्ज्ञास्यामीत्यत आह—नेदमिदं बहुविधभेदमहमनहं वा गृहीतं वागादिविषयभूतं न ब्रह्मेति शेषः । इदंशब्दार्थमाह—यत्प्रसिद्धमुपासकानामिदं प्रसिद्धं ज्ञातृज्ञानज्ञेयभेदवदुपासत उपासनं कुर्वते यथावत्स्वरूपावबोधशून्याः ॥ ४ ॥

वागगम्यस्यापि चम्पककेतक्यादिगन्धभेदस्य मनसा ग्रहो दृष्ट इत्यत आह—यत्प्रसिद्धं मनसो मनो मनसाऽन्तःकरणेन न मनुते कोऽपि नाधिगच्छति । न च तदकिंचित्करमित्याह—येन मनसाऽविज्ञातेनाऽऽहुः कथयन्त्यस्माकं व्याख्यातारो मन उक्तं मतं ज्ञातं सर्वकार्यक्षममित्यर्थः । अनेन केनेषितमित्यादिप्रथमप्रश्नस्योत्तरं सिद्धम् । यद्यपि वाङ्मनसयोरगोचरत्वेनैव चक्षुःश्रोत्रप्राणानामगोचरत्वं सिद्धं तथाऽपि पञ्चप्रश्नानां प्रत्येकमुत्तरं दातुं वक्ष्यमाणं पर्यायत्रयमवगन्तव्यम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते व्याख्यातम् ॥ ५ ॥

यत्प्रसिद्धं चक्षुषश्चक्षुश्चक्षुषा रूपग्राहकेणेन्द्रियेण न पश्यति नावलोकयति येन चक्षुषश्चक्षुषा चक्षूंष्यक्षीणि पश्यत्यवगच्छति चक्षुषः सर्वकार्यकारणमित्यर्थः । चक्षुःश्रोत्रं क उ देवो युनक्तीतियोगस्य विभागेनाऽऽद्यस्योत्तरं दत्तम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते व्याख्यातम् ॥ ६ ॥

यत्प्रसिद्धं श्रोत्रस्य श्रोत्रं श्रोत्रेण शब्दोपलब्धिसाधनेन न शृणोति नाधिगच्छति । येन श्रोत्रस्य श्रोत्रेण श्रोत्रं शब्दोपलब्धिकारणमिदमाकाशस्य प्रदेशविशेषात्मकं श्रुतमधिगतम् । स्वकार्यक्षमं कृतमित्यर्थः । चक्षुःश्रोत्रं क इत्यस्याविशिष्टस्यानेनोत्तरं दत्तम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते व्याख्यातम् ॥ ७ ॥

यत्प्रसिद्धं प्राणस्य प्राणरूपं प्राणेन पञ्चवृत्तिना न प्राणिति प्राणचेष्टां न करोति येन प्राणस्य प्राणेन प्राणः प्रसिद्धपञ्चवृत्तिः प्रणीयते प्रकर्षेण नीयते

१ ग. °ति । अत्र त° । २ ग. °नसोऽवि° । ३ ग. °ब्धिकारणेन । ४ ख. °ग्राम्य वि° ।

स्वचेष्टां कार्यत इत्यर्थः। अनेन केन प्राण इत्यादेरुत्तरं दत्तम्। श्रोत्रस्य श्रोत्रमित्यादिना तु सामान्यतः। अत्र तु विशेषत इति न पुनरुक्तम् । अथवा तदुत्तरं तत्रैव कण्ठतः। अत्र तु वागाद्यविषयत्वप्रतिपादनेनार्थ्यमिति न पुनरुक्तम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते। व्याख्यातम् ॥ ८ ॥

इति श्रीशंकरानन्दभगवतः कृतौ केनोपनिषद्दीपिकायां प्रथमः खण्डः ॥ १ ॥

---

पूर्वं यथावत्स्थितमात्मस्वरूपं गुर्वाद्युपदिष्टमुपदिश्येदानीं शिष्यबुद्धिमनुसरन्नाह—यदि पक्षान्तरं मन्यसे वस्तुतो विद्यमानमपि *जानामि सुवेद सुष्ठु भवदादिभिरुक्तं ममाऽऽत्मस्वरूपं जानामि। इत्यनेन प्रकारेण यदि मन्यस इत्यन्वयः। तथा ब्रह्मतत्त्वं जानीष इत्याह—दहरमेवापि नूनम्। अपि संभावनायाम्। नास्त्येव भवतो ब्रह्मज्ञानम् । अथ च चेतनत्वाज्ज्ञानवानहमस्मीति संभावयसि तथाऽपि नूनं निश्चितं तद्विषयस्याल्पत्वादल्पमेव न तु बृहत्। त्वं ज्ञानित्वाभिमानी वेत्थाल्पमेव जानीषे। किम्। ब्रह्मणो रूपं देशकालवस्तुपरिच्छेदशून्यस्य स्वरूपं दहरज्ञानत्वे हेतुर्यद्यस्मादस्य त्रिविधपरिच्छेदशून्यस्य त्वं कार्यकारणसंघाताभिमानी परिच्छिन्नो ज्ञानकः । एवंभूतात्त्वत्तोऽन्यद्यत्प्रसिद्धं त्वया ज्ञेयं कार्यब्रह्मस्वरूपमस्य ब्रह्मणः सर्वपरिच्छेदशून्यस्य देवेष्विन्द्राग्न्यादिषु। अथ नु यस्मादस्य देवेषु यत्प्रसिद्धमस्य त्वं चेति भेदस्तस्मादेव मीमांस्यमेव विचारणीयमेव ते तव त्वयेत्यर्थः । एवमुक्तो मीमांसां कृत्वा शिष्य आह—मन्येऽवगच्छामि विदितमवगतं मयेति शेषः ॥ १ ॥

स्वयंविदि[त]त्वे हेतुमाह—नाहं मन्ये सुवेदेति नो न वेदेति वेद च। अहं सुवेदेति नैव मन्ये। यदि सम्यङ्न ज्ञातं तर्हि किं न ज्ञातमेवेत्यत आह—नो न वेदेति। तर्हि किं संदिग्धमित्यत आह—वेद च। जानाम्यपि चकाराज्जानन्नपि भेदबुद्धेरभावान्न जानामि। [न]सुवेदेत्यनेन ब्रह्मणोऽतिदुर्बोधत्वं दर्शितम्। नो न वेदेत्यनेन शास्त्रैकगम्यत्वमुक्तम् । वेदेत्यनेन संशयादिराहित्यमुक्तम्। चकारेण सर्वभेदभक्षकः साक्षात्कार उक्तः। अतिदुर्बोधशास्त्रैकगम्यासंदिग्धसर्वभेदशून्यब्रह्माहमस्मीत्यर्थः। यो मत्तोऽन्योऽपि नोऽस्माकं शिष्याणां मध्ये तन्मयोक्तं सुवेदेति न न वेदेत्यपि न वेद चेति वेद जानाति स तद्ब्रह्म श्रोत्रस्य श्रोत्रमित्यादिनोक्तं वेद जानाति यस्मादयमवगन्ता मदुक्तं वेद भवा-

---

* इदं पदमधिकमिव भाति।

---

१ ग. स्वस्य विदितत्वे। २ ग. ति। चेमाह।

नैतमवगच्छति । नो न वेदेति वेद च न जानामीति न जानामीत्यपि न। चकार इतिनोकारयोरनुवृत्त्यर्थः । दर्शिता च तयोर्योजना। तस्माद्ब्रह्म वेदेत्यभिप्रायः ॥ २ ॥

ननु न जानामीति ज्ञानवता ज्ञेयं जानामीति ज्ञानवता चाज्ञेयं[1] भवद्वाचो भङ्ग्या ब्रह्म सिध्यति न चैवं प्रामाणिकमित्यत आह—यस्य ब्रह्म विदुषोऽमतमनधिगतं कर्तृकर्मादिभावेन तस्य कर्तृकर्मादिभावानधिगतवतो मतमधिगतम्। इदानीं वैपरीत्यमाह—मतं कर्तृकर्मादिभावेनाधिगतं यस्य ब्रह्म विदुषो न वेद न जानाति स कर्तृकर्मादिभेदज्ञानवान्। तत्रैव हेतुमाह—यतोऽविज्ञातमनधिगतं विजानतां विविधज्ञातृज्ञानज्ञेयादिबुद्धिमतां देशकालवस्तुपरिच्छेदशून्यरूपत्वाद्ब्रह्मणस्ततः। विज्ञातं विशेषेण यथाविद्यमानस्वरूपेणाधिगतमविजानतां विविधज्ञात्रादिभेदबुद्धिरहितानाम् ॥ ३ ॥

अविजानतां विज्ञातं चेत्तर्हि सुषुप्तिमूर्छादौ सर्वोऽपि कृतकृत्यः स्यादित्यत आह—प्रतिबोधविदितं सर्वप्रत्ययसाक्षित्वेनावगतं मतं विज्ञातं न तु सर्वप्रत्ययोपरमे सुषुप्त्यादौ। ननु किमनेन ज्ञानेनेत्यत आह—अमृतत्वं हि विन्दत आत्मना हि यस्मादात्मनाऽऽत्मज्ञानेनामृतत्वमविद्यातत्कार्यादिमरणशून्यत्वं स्वयंप्रकाशमानन्दात्मस्वरूपमित्यर्थः। विन्दते लभते। हेतोर्न्वर्थस्याऽऽत्मनेति व्याख्यानम्[3]। विन्दते वीर्यं सामर्थ्यमविद्यानिवृत्तिकारणं चरमसाक्षात्काररूपं लभते। उक्तवीर्यलाभादुक्तामृतत्वप्राप्तिः प्रसिद्धैवेत्याह—विद्ययाऽधिष्ठानयाथात्म्यसाक्षात्कारेण कर्मगन्धानपेक्षेण विन्दतेऽमृतमधिष्ठानविपरीतग्रहणतज्जदुःखरूपमरणकारणशून्यमविक्रियमधिष्ठानं लभते ॥ ४ ॥

ननु विद्या चेच्छरीरान्तर एव न त्वत्रैव सति शरीर इत्यत आह—इहास्मिन्नेवाधिकारिशरीरे चेद्यद्यवेदीज्ज्ञातवान्। अथ तदा सत्यं सच्चिदानन्दरसं ब्रह्मास्ति विद्यते न चेदिहावेदीदिहाधिकारिशरीरे यद्यहं ब्रह्मास्मीति शरीरे साक्षात्कारं न कृतवांस्तदा महत्यतिप्रौढा त्रिविधदुःखसंतानजननी विनष्टिर्विनाशरूपा। श्रुत्या मानुक्रोशमेतदुक्तम्। एतच्छरीरमन्तरेण समस्तघोरसंसारविनाशकात्मज्ञानस्य दुर्लभत्वात्ततोऽस्मिन्सत्येव तदर्थं यत्न आस्थेयोऽन्यथा सततं संसारसागरे निमज्जनमेव स्यादिति। इदानीमात्मनः सर्वत्राहमस्मीत्यवलोकनं करणीयमित्येतदात्मज्ञानस्य संसारव्याध्योपधस्य स्वरूपमाह सा। भूतेषु भूतेषु प्राणिषु। वीप्सा निखिलचतुर्विधप्राणिसंग्रहार्था। विचित्य वयं

---

१ ग. °थ भद्वा°। २ ग. °गमयतां। ३ ग. °धस्य व्या°।

स्म इत्यधिगत्य धीरा बुद्धिमन्तो विद्वांसः । प्रेत्यास्माल्लोकादमृता भवन्ति व्याख्यातम् ॥ ५ ॥

इति श्रीशंकरानन्दभगवतः कृतौ केनोपनिषद्दीपिकायां द्वितीयः खण्डः ॥ १ ॥

---

विशुद्धान्तःकरणैरेव ब्रह्मविद्ययैव सर्वातिशयवत्सर्वात्मभूतं ब्रह्म विज्ञेयं न त्वन्यथेत्येतदर्थमियमाख्यायिकाऽऽरभ्यते—ब्रह्म सत्यज्ञानानन्दादिलक्षणं ह किल देवेभ्यो देवानामनुग्रहार्थाय विजिग्ये विविधं देवानां लोकद्वयप्रतिकूलम-सुरकुलं जितवत् । तस्य देवानुग्रहप्रवृत्तस्य ह किल ब्रह्मणः सत्यज्ञानानन्दा-दिलक्षणस्य विजये विविधजयनिमित्तं देवा इन्द्राग्निवायुप्रभृतयोऽमहीयन्त पूजिता अभूवन् । तेऽविज्ञातब्रह्मप्रभावा ऐक्षन्त प्रत्यक्षं वक्ष्यमाणप्रकारेणेक्षणमकुर्वन् । तदीक्षणप्रकारमाह—अस्माकमेव कार्यकरणसंघाताभिमानिनामिन्द्राग्न्यादीना-मेव न त्वन्यस्य कस्यचित् । अयमस्मत्प्रत्यक्षविषयो विजयो विविधोऽसुरपरा-भवलक्षण उत्कर्षः । अस्माकमेवायं व्याख्यातम् । महिमा महत्त्वरूपः सर्व-जन्तुभ्यः स्तुतिपूजादिलाभलक्षणः । इत्यनेन प्रकारेण ॥ १ ॥

तद्ब्रह्म देवानां विजयकृद्ध किलैषां देवानामज्ञानिनां गर्वारूढमभिप्रायं विजज्ञौ विशेषेण ज्ञातवत्तेभ्यस्तेषां गर्वारूढानां देवानामज्ञानिनामनुग्रहार्थं ह किल प्रादुर्बभूव किमपि रूपं धृत्वा नयनपथमागतं तद्ब्रह्म न व्यजानत देवा इदं तदिति विशेषेण न ज्ञातवन्तः । तदज्ञानमाह—किं विचारे । इदं प्रत्यक्षं यक्षं पूज्यमतिदिव्यरूपत्वात् । इत्यनेन प्रकारेण ॥ २ ॥

एवं संशयाविष्टहृदयास्ते गर्वाविष्टा देवा अग्निं देवानामग्रेसरं वह्निमब्रुवन्नु-क्तवन्तः । तदुक्तिमाह—जातवेदो जातानि वेदांसि विविधानि ज्ञानानि सर्व-वेदात्मकानि यस्मादग्नेः स जातवेदास्तस्य संबोधनं हे जातवेद एतदस्माभि-रुच्यमानं पुरःस्थितं विजानीहि विशेषेणावगच्छ । किमेतद्यक्षमेतत्पुरतःस्थितं यक्षं किं देवादिषु कतमदित्यर्थः । इत्यनेन प्रकारेण । एवं तैरुक्तः स तथा देवोक्ताङ्गीकारे । यद्भवद्भिरुच्यते तत्करिष्यामीत्यर्थः । इत्यनेन प्रकारेणो-क्त्वेति शेषः ॥ ३ ॥

तत्पुरःस्थितं यक्षमवगन्तुमभ्यद्रवत्संमुखत्वेन समीपं गतवान् । तद्यक्षं तं समीपं प्राप्तं जिज्ञासुं सावज्ञमभ्यवददाभिमुख्येनोक्तवत् । तदुक्तिमाह—कः प्रश्ने । मत्समीपमागतस्त्वमसि भवसि । इत्यनेन प्रकारेण । एवं पृष्टः स आह—अग्निरग्निनामा वै प्रसिद्धः सर्वेषामहं त्वत्समीपमागतोऽस्मि भवामि । इत्यनेन

---

१ ग. 'यंदार' ।

प्रकारेणाब्रवीदुक्तवान् । विशेषनाम्ना पुनरात्मानमाह—जातवेदा वा अहमस्मीति स्पष्टम् ॥ ४ ॥

एवमुक्ते पुनः सावज्ञं तद्यक्षमाह—तस्मिन्नुक्तनाम्नि त्वयि मत्पुरतो वर्तमाने वराके । किमाक्षेपे । न किमपीत्यर्थः । वीर्यं सामर्थ्यमित्यनेन प्रकारेण । एवमाक्षिप्तोऽपि स स्वगर्ववशात्तदीयं प्रश्नं मन्वान आह—अपि संभावनायाम् । इदं शुष्कमार्द्रं च जगत्सर्वं निखिलं दहेयं दहनं कुर्याम् । अत्युक्तिवारणार्थं सर्वशब्दार्थमाह—यत्प्रसिद्धमिदं स्थावरजङ्गमात्मकं मूर्तं पृथिव्यां ब्रह्माण्डकटाहभुवि । इत्यनेन प्रकारेण ॥ ५ ॥

तस्मै तस्याग्नेरनुग्रहार्थं तृणमत्यल्पं शुष्कं स्थावररूपं निदधौ नितरां पुरतः स्थापितवत् । तत्स्थापयित्वेदं जगौ । एतच्छुष्कं तृणं मया पुरतः स्थापितं दह भस्मीकुरु । इत्यनेन प्रकारेण यक्षेणोक्तोऽग्निः पुरतः स्थितं तृणमुपप्रेयाय समीपं प्रकर्षेण गतवान्सर्वजवेन स्वकीयेन सर्वजवेन तद्यक्षस्थापितं शुष्कं तृणं न शशाक दग्धुं भस्मीकर्तुं शक्तो न बभूव । सोऽग्निर्जातवेदा अपगतगर्वस्तत एव शुष्कतृणादहनादेव निमित्तात्प्राप्तलज्जो निववृते झटित्येव देवान्गन्तुं तस्मान्निवृत्तिं चकार । आगत्य च देवानुवाच । तदुक्तिमाह—नैतदशकं विज्ञातुं यदेतद्यक्षमेतत्पुरतः स्थितं यत्प्रसिद्धं सामान्यतस्तदेतदिति विशेषतो विज्ञातुं शक्तो नाभवम् । इत्यनेन प्रकारेण ॥ ६ ॥

अथाग्नेर्निवृत्तस्य वाक्यश्रवणानन्तरं वायुं सर्वजगतः प्राणं प्रभञ्जनमब्रुवन्नुक्तवन्तः । वायो हे वायो । एतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तमभ्यवदत्कोऽसीति । वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति । तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वमाददीय यदिदं पृथिव्यामिति तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकाऽऽदातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति । वायुर्वायुनामा । इदं सामान्यम् । विशेषरूपं त्वाह—मातरिश्वा मातर्याकाशे श्वसिमि गच्छामीति मातरिश्वनामा । आददीयाऽऽदायान्तरिक्षे गमनं कुर्याम् । आदत्स्वाऽऽदायैतस्या भूमेरस्य तृणस्य च कस्यांचिदत्यल्पमप्यन्तरं कुरु । आदातुं सर्वतः स्वीकर्तुं व्याख्यातमन्यत् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

अथ निवृत्तस्य विगतगर्वस्य वायोर्वचनश्रवणानन्तरमिन्द्रं परमैश्वर्यसंपन्नं त्रिलोकनाथमब्रुवन्नुक्तवन्तः । मघवन्भो इन्द्र । एतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत् । व्याख्यातम् । तस्मात्स्वसमीपमागतादिन्द्रात्तिरोदधेऽन्तर्धानं चकार । शुद्धान्तःकरणैरपि स्वस्वकर्मभिरनवगम्यं दर्शयितुमिन्द्रो हि ब्रह्मसमीपं प्राप्तः करग्रहणावसरं तन्न दृष्टवानित्यर्थः ॥ ११ ॥

स विस्मयमना इन्द्रस्तस्मिन्नेव यत्र यक्षं स्थितं तत्रैव न त्वन्यत्राऽऽकाशेऽवकाशे तदेव यक्षं ध्यायंस्तस्थाविति शेषः। एवं स्थिते मघोनि विशुद्धान्तःकरणे यक्षदर्शनोत्सुके तदन्तर्धानादपगतान्तर्धानाद्यैश्वर्याभिमाने संपन्नाधिकारिगुणे स्त्री प्रादुर्बभूव। स तां स्त्रियं ब्रह्मविद्यां मूर्तिमतीं ददर्शेति शेषः। ततो निरीक्ष्य तामाजगाम यक्षस्य वार्तां प्रष्टुमागतवान्। आगत्य च बहुशोभमानां सकलाविद्यापिशाचीवैलक्षण्येनाधिककान्तिमतीमुमां सकलसंसारवृक्षोच्छेदकत्वेनोत्कृष्टां प्रभां ब्रह्मविद्यामित्यर्थः। हैमवतीं हिमरूपः सर्वदा शीतलः स्वयंप्रकाशमान आनन्दात्माऽन्तर्हितयक्षस्वरूपः स यस्य नित्यमस्त्युपनिषद्विभागस्य स हिमवांस्तस्येयं दुहिता हैमवती ताम्। अथवोमा भगवतः पिनाकपाणेः प्राणप्रिया सा हि कान्दिशीकान्भृशं विषण्णाञ्जन्तून्मातेव नानारूपैराश्वासयति। तदुचितमिन्द्रस्यापि तादृशस्य तस्या दर्शनम्। सा च हिमवतो गिरिराजस्य दुहिता प्रसिद्धा ताम्। अथवा हेम कनकं तस्याऽऽभरणानि हैमानि कटकमुकुटादीनि तानि यस्याः सन्ति सा हैमवती तां प्रसिद्धां विदुं[१]पामुमां ह किलोवाचोक्तवान्। तदुक्तिमाह—किमेतद्यक्षमिति व्याख्यातम्॥ १२॥

इति श्रीशंकरानन्दभगवतः कृतौ केनोपनिषद्दीपिकायां तृतीयः खण्डः॥ ३॥

सा तं ब्रह्म बृहद्देशकालवस्तुपरिच्छेदशून्यं भवतां विजयकारणमित्यनेन प्रकारेण ह किलोवाचोक्तवती। ब्रह्मेति नामधेयमुक्त्वा तस्य महिमानमप्याह—ब्रह्मण उक्तस्य वै प्रसिद्धस्यैतद्विजये महीयध्वं विजयनिमित्तमेतन्महीयध्वमिदं भवतां महत्त्वं येन लोके स्तुतिपूजादिमन्त एतादृशाः स्युरित्यनेन प्रकारेण। शिक्षा चेयं ब्रह्मणो विजये सति यूयं महीयध्वं मा स्वातन्त्र्याभिमानं कुरुतेत्यर्थः। एवमुमयोक्त इन्द्रस्ततस्तस्या उमाया वचनाद्ध किलैव तत एव न त्वन्यस्माद्विदांचकार ज्ञातवान्। तज्ज्ञानप्रकारमाह—ब्रह्म यद्यक्षमन्तर्हितं तद्ब्रह्मेत्यनेन प्रकारेण॥ १॥

तस्माद्यतो वाय्वग्नी संवादं कृतवन्तौ ब्रह्मणेन्द्रश्चोमावचनेन निश्चिकाय ततो वै प्रसिद्धा एते[देवा अ]ग्नीन्द्रवायवोऽतितरामिवाधिकर्मातिक्रम्येव वर्तन्तेऽन्यानग्नीन्द्रवायुव्यतिरिक्तान्देवांश्चन्द्रवरुणादीन्। एत इन्युक्ताश्चामन आह—यद्यः प्रसिद्धोऽग्निर्वायुरिन्द्रः प्रसिद्धानि त्रीण्यपि नामानि त्रयाणां तेऽग्नीन्द्रवायवः सर्वेभ्योऽत्यधिका हि यस्मादेनद्यक्षरूपमात्मानं नेदिष्ठमतिशयेन समीपं पस्पृशुः स्पर्शनं चक्रुर्ब्रह्मणः समीपं गता इत्यर्थः। तेऽग्नीन्द्रवायवः सर्वदेवाधिका हि

१ ग. 'दुर्पाम्'।

यस्मादेनद्देवानां पुरतः स्थितं यक्षं ब्रह्म प्रथमः प्रथमा देवेभ्यो मुख्या इत्यर्थः। विदांचकार विदांचक्रुः। छत्रिन्यायं दर्शयितुमेकवचनेन निर्देशः। तज्ज्ञानानुकरणं ब्रह्मेति स्पष्टम् ॥ २ ॥

इदानीं छत्रिन्यायं विवृणोति। तस्माद्यतोऽग्नीन्द्रवायुषु ब्रह्मसमीपगामिष्विन्द्र एवोमोपदेशाद्ब्रह्म ज्ञातवान्। ततो वै प्रसिद्ध इन्द्रः परमैश्वर्यसंपन्नोऽतितरामिवातिशयेनातिक्रामत्यन्यान्स्वव्यतिरिक्तान्देवानग्निवायुप्रमुखान्। स इन्द्रः। ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत्प्रथमो विदांचकार ब्रह्मेति स्पष्टम् ॥ ३ ॥

तस्येन्द्रेणावगतस्य ब्रह्मण एष वक्ष्यमाण आदेश उपदेशः। यत्प्रसिद्धं ब्रह्मरूपं शास्त्रेषु स्वयंप्रकाशमेतद्बुद्धेर्द्रष्टृ वक्ष्यमाणस्वरूपं विद्युतः प्रसिद्धायास्त[1]डितः। व्यद्युताद्विशेषेण द्योतनमकरोत्। आ ३। आकारप्लुतिराश्चर्यार्था। आश्चर्यं तेजोधातुविलक्षणमपि ब्रह्म विद्युतः सकाशाद्विस्पष्टं[3] प्रकाशं कृतवदिव स्वयंप्रकाशमित्यर्थः। इत्यनेन प्रकारेणाऽऽदेश इत्यन्वयः। यथा स्वयं विद्युतोऽपि विशेषप्रकाशवदिव। इदित्थं चक्षुरादीनि सान्तःकरणानि न्यमीमिषन्निमेषोपलक्षितं स्वस्वव्यापारं कारितवत्। आ ३ आकारप्लुतिः पूर्ववदाश्चर्यं सर्वक्रियाहीनोऽपि सर्वदेवनिष्पाद्यां क्रियां कारितवानिवेत्यनेन प्रकारेणाऽऽदेश इत्यन्वयः। अधिदैवतं हिरण्यगर्भमधिकृत्येतिद्वयाभ्यां वाक्याभ्यामुपदिष्ट आदेशोऽधिदैवतम् ॥ ४ ॥

अथाधिदैवतादेशकथनानन्तरमध्यात्ममात्मानमधिकारिशरीरमुररीकृत्योच्यमान उपदेशोऽध्यात्मं यत्प्रसिद्धमधिदैवं विद्युतोऽपि विशेषप्रकाशवदिवैतद्बुद्धेर्द्रष्टृ सर्वगतं प्रति गच्छतीव च यातीव चकारात्स्पृशतीव च मनोऽन्तःकरणमनेन चान्तःकरणेनैवैतद्विद्युतोऽपि विशेषप्रकाशवदिव ब्रह्मोपस्मरत्यहं ब्रह्मास्मीति सामीप्येन शास्त्रोक्तं स्मरत्यभीक्ष्णं निरन्तरं संकल्प इदं ब्रह्माहं साक्षात्करोमीत्येवंरूपोऽभिलाषः सोऽप्यनेनेत्यभिप्रायः ॥ ५ ॥

तदुक्तं ब्रह्म ह किल तद्वनं नाम तस्य तस्य प्राणिजातस्य वननीयं संभजनीयमेतदेव नामधेयम्। तस्येदानीं नामानुगुणोपासनमाह—तद्वनं नामधेयमित्यनेन प्रकारेण तदुपासितव्यं विजातीयप्रत्ययशून्येन सजातीयप्रत्ययप्रवाहेण साक्षात्कर्तव्यम्। इदानीं गुणोपासनस्य फलमाह—स उपासकलक्षणसंपन्नो यः कश्चनैतत्स्वयंप्रकाशं सर्वव्यापारनिमित्तं मनःसंकल्पस्मरणगमनेषु कारणं ब्रह्म। एवमुक्तेन प्रकारेण तद्वनं नामधेयमिति वेद जानात्युपास्त इत्यर्थः। अभिहैनं सर्वाणि भूतानि

---

१ ग. 'डितस्तत्स्वयंप्रकाशं सर्वव्यापारनिमित्तं मन. संकल्पस्मरणगमनेषु कारणं ब्रह्म आ ३ आश्च'। २ ग. 'नमिव ब्र'। ३ ग. 'द्विशिष्ट'।

गच्छन्ति ह किलैनं तद्वननामोपासकं निखिलानि स्थावरजङ्गमानि भूतानि दर्शनस्पर्शनादिनाऽभिगच्छन्ति संगच्छन्ति संवाञ्छन्ति सर्वत इच्छां कुर्वन्ति ॥ ६ ॥

इदानीमाख्यायिकां परित्यज्य पुनः शिष्यप्रश्नमवतारयति—उपनिषदं ब्रह्मविद्यां विद्यया विन्दतेऽमृतमिति भवतैवोक्तं[1] भो हे गुरो ब्रूहि कथय किमु ब्रह्मविद्याऽऽहोस्विदन्याऽपीति प्रश्नार्थः । इत्यनेन प्रकारेण । ब्रह्मविद्या चेदुक्तैव तस्याः साधनानि चेत्तपआदीनि वक्ष्यामीत्यनेनाभिप्रायेण गुरुराह—उक्ता श्रोत्रस्य श्रोत्रमित्यारभ्याभीक्ष्णं संकल्प इत्यन्तेन गुणोपासनासहितेन वाक्यसंदर्भेण कथिता । ते तुभ्यम् । उपनिषत्, तादात्म्यलक्षणेन सामीप्येन नितरां ब्रह्म गमयित्वाऽहंममादिग्रन्थींञ्शिथिलीकृत्याविद्यां ससंस्कारां सादयति विनाशयतीत्युपनिषद्ब्रह्मविद्या । ब्राह्मीं वाव ब्रह्मणा सत्यज्ञानलक्षणेन संबद्धा ब्राह्मी तामेव नतु तत्संबद्धां तपआदिकाम् । अत उपनिषदं व्याख्यातम् । अब्रूमोक्तवन्तः । अतोऽन्यां कथयिष्याम इत्यभिप्रायः ॥ ७ ॥

तस्यै, उक्ताया ब्राह्मया उपनिषद उत्पत्त्यर्थम् । तपस्तपःशब्दाभिधेयं स्वधर्मानुगुणशरीरसंतापकरं मनइन्द्रियैकाग्र्यादिषु । दम इन्द्रियनिग्रहः । कर्म स्ववर्णाश्रमोचितं श्रौतं स्मार्तं चेत्यादिकमन्यदपि शमब्रह्मचर्यादि । इदानीमस्या उपनिषदःस ब्राह्म्युपनिषद(?) उपासनमाह—प्रतिष्ठाः प्रतितिष्ठन्त्येतैरिति प्रतिष्ठा इयं तपआद्युपनिषत्कामधेनुर्ब्रह्मविद्योपनिषद्वत्सा चतुष्पादित्यर्थः । ततः प्रतिष्ठाः पादाः । इदानीं तान्विशेषत आह—वेदा ऋगाद्याश्चत्वारः । वेदानां षड(सर्वा)ङ्गानि विद्याकामधेनोः परिशिष्टानि निखिलाङ्गानि । सत्यं कालत्रयेऽपि बाधशून्यं ब्रह्म भूरिवेतरस्या गोरायतनं प्रचारोपवेशनादिस्थलम् ॥ ८ ॥

यो मुमुक्षुर्ब्रह्मविद्यार्थी तपआदिसंपादनोद्यतो वै प्रसिद्धोऽनुत्पन्नब्रह्मसाक्षात्कारः श्रद्धालुरेतां तपआदिकामधेनुं ब्रह्मविद्यावत्सामेवं वेदपादादिरूपेण वेद जानात्युपास्त इत्यर्थः । सोऽपहत्य स्वस्मादपच्छेदपुरःसरं विनाश्य पाप्मानं ब्रह्मविद्योत्पत्तिप्रतिबन्धहेतुमनन्ते विनाशरहिते स्वर्गे स्वर्गवासिभिर्गेय आनन्दात्मनि लोके स्वयंप्रकाशे ज्येये ज्यायसि सर्वस्मादभ्यधिके ब्रह्मणीत्यर्थः । प्रतितिष्ठति संजातचरमसाक्षात्कारः प्रकर्षेण पुनरुत्थानशून्यत्वेनावस्थानं करोति । प्रतितिष्ठति व्याख्यातम् । पदाभ्यास उपनिषत्समाप्त्यर्थः ॥ ९ ॥

इति श्रीशंकरानन्दभगवतः कृतौ केनोपनिषद्दीपिकायां चतुर्थः खण्डः ॥ ४ ॥

समाप्तेयं शंकरानन्दकृता तलवकारोपनिषदपरपर्यायकेनोपनिषद्दीपिका ॥

---

* इदं पदमधिकमिव भाति ।

---

१ क. °वोक्तां भो ।

ॐ तत्सद्ब्रह्मणे नमः।

# नारायणविरचिता केनोपनिषद्दीपिका।

केनेषितोपनिषदि खण्डाश्चत्वार ईप्सिताः।
क्षुद्रग्रन्थसमाहारे सा द्वात्रिंशत्तमी मता॥

तलवकारशाखा सामवेदे नवाध्याय्याम्। तत्र प्राक्कर्माण्युक्तानि ततः समकर्माश्रयस्य प्राणस्योपासनानि ततः कर्माङ्गसामोपासनानि ततो गायत्रसामविषयं दर्शनं वंशान्तमुक्तमष्टभिः। ततस्तैः शुद्धसत्त्वं प्रति केनेषितमित्याद्या ब्रह्मविषयोपनिषन्नवमाध्याय आरभ्यते। दृष्टादृष्टार्थेभ्यो बाह्यसाधनेभ्यो विरक्तस्य प्रत्यगात्मविषया जिज्ञासेयम्। केनेषितमित्यादि। शिष्याचार्यप्रश्नप्रतिवचनरूपेण कथनं सुखप्रतिपत्त्यर्थं केवलतर्कागम्यत्वदर्शनार्थं च। केन कर्त्रेषितमिष्टमभिप्रेतं सत्कस्येच्छामात्रेण मनः पतति स्वविषयं प्रति गच्छति। इषेराभीक्ष्ण्यार्थस्य गत्यर्थस्य चेहासंभवादिच्छार्थस्यैतद्रूपम्। इडागमश्छान्दसः। तस्यैव प्रपूर्वस्य नियोगार्थे प्रेषितमिति। न यथाप्रसिद्धमेव कार्यकारणसंघातस्य प्रेरयितृत्वं किंतु संघातव्यतिरिक्तस्य स्वतन्त्रस्येच्छामात्रेण मनआदिप्रेरयितृत्वमित्यस्यार्थस्य प्रदर्शनार्थं केनेषितं प्रेषितमिति विशेषणद्वयम्। ईश्वरविषयोऽयं प्रश्नः।

यदुक्तम्—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" इति।

प्रवृत्तिलिङ्गाच्च विशेषार्थः प्रश्न उपपन्नः। रथादीनां हि चेतनावदधिष्ठितानां प्रवृत्तिर्दृष्टा तद्धि लिङ्गं चेतनावतोऽधिष्ठातुरस्तित्वे। मनआदीनि चेतनावदधिष्ठितानि करणत्वाद्वासीवदिति प्रयोगः। मनुतेऽनेनेति मनोऽन्तःकरणम्। इषितं प्रेषितमित्युपमार्थे न त्वनयोरर्थाविह संभवतः। नहि शिष्यानिव मनआदीनि विषयेभ्यः प्रेरयत्यात्मा। विविक्तनित्यचित्स्वरूपमात्रतया तु निमित्तमात्रं प्रवृत्तौ। प्राण इति नासिक्यः प्रकरणात्। केन युक्तो नियुक्तः प्रेरितः सन्प्रैति गच्छति स्वव्यापारं प्रति। प्रथमः। आद्यः। तत्प्रवृत्तिपूर्वकत्वात्सर्वेन्द्रियप्रवृत्तीनाम्। चलिक्रिया हि सर्वेषां प्राणनिमित्तैव। तेन प्राणस्य प्राथम्यम्। स्वतस्त्विन्द्रियाणां विषयावभासकत्वमात्रं न चलिक्रियारूपा प्रवृत्तिः। सा तु प्राणनिमित्तैव तेषाम्। केन देवेनेषितामिष्टां कस्येच्छामात्रेण वाचं शब्दलक्षणां वदन्ति लौकिकवाचा वदनं किंनिमित्तं प्राणि-

नाम् । चक्षुः श्रोत्रमिन्द्रियम् । क उ प्रश्ने । देवो युनक्ति प्रेरयति । कारणानामधिष्ठाता चेतनावानन्यः स किंलक्षण इत्यर्थः ॥ १ ॥

प्रतिवचनं श्रोत्रस्य श्रोत्रमित्यादि । अयमत्र पदार्थः । श्रोत्रं तावत्स्वविषयव्यञ्जनसमर्थं दृष्टं तच्च सामर्थ्यं श्रोत्रस्य चैतन्ये ह्यात्मज्योतिषि नित्येऽसंहते सर्वान्तरे सति भवति नासतीति । "आत्मनैवायं ज्योतिषाऽऽस्ते शेते" "तस्य भासा" "येन सूर्यस्तपति" इत्यादिश्रुतेः । श्रोत्राद्येव सर्वस्याऽऽत्मभूतं चेतनमिति प्रसिद्धम् । तदिह निवर्त्यते । अस्ति किमपि विद्वद्बुद्धिगम्यं सर्वान्तरतमं कूटस्थमजरममृतमभयं श्रोत्रादेरपि श्रोत्रादि तत्सामर्थ्यनिमित्तमिति प्रतिवचनम् । शब्दार्थश्चोपपन्नः । कथं शृणोत्यनेनेति श्रोत्रं तस्य शब्दावभासकत्वं श्रोत्रतत्त्वम् । वतश्च शब्दोपलब्धृरूपतयाऽवभासकत्वं न स्वतः श्रोत्रस्याचिद्रूपत्वात् । आत्मनश्च चिद्रूपत्वाद्यच्छ्रोत्रस्योपलब्धृत्वेनावभासकत्वं तदात्मनिमित्तमिति श्रोत्रमात्मेत्युच्यते । यथोदकस्यौष्ण्यमग्निनिमित्तमिति दग्धुरप्युदकस्य दग्धाऽग्निरुच्यते । उदकमप्यग्निसंयोगादग्निरुच्यते । तद्वत् । अनित्यं यस्यान्यसंयोगादुपलब्धृत्वं तत्करणं श्रोत्रादि । उदकस्येव दग्धृत्वम् । तत्र हि तन्नित्यं यत्र नित्यमुपलब्धृत्वमग्नाविवौष्ण्यं स नित्योपलब्धिस्वरूपत्वाद्दग्धेवोपलब्धोच्यते । श्रोत्रादिषु श्रोत्रत्वाद्युपलब्धिरनित्या । नित्या चाऽऽत्मनि । अतः श्रोत्रस्य श्रोत्रमित्याद्यक्षरार्थानुगमादुपपन्नं निर्विशेषस्योपलब्धिरूपस्याऽऽत्मनो मनआदिप्रवृत्तिनिमित्तत्वम् । मनसोऽन्तःकरणस्य मनो न ह्यन्तःकरणमन्तरेण चैतन्यज्योतिषाऽऽदीपितं स्वविषयसंकल्पाध्यवसानादिसमर्थं स्यात् । तस्मान्मनसोऽपि मनः । बुद्ध्यादित्रयमप्यन्तर्भाव्य मनस इति निर्देशः । यद्वाचो ह वाचम् । यच्छब्दो यस्मादर्थः श्रोत्रादिभिः सर्वैः संबध्यते । यस्माच्छ्रोत्रस्य श्रोत्रं यस्मान्मनसो मनो यस्माद्वाचो वाक्तस्मात्तज्ज्ञात्वा मनआद्यतिमुच्योज्झित्वाऽमृता भवन्तीत्यन्वयः । वाचमिति द्वितीया प्रथमार्थे स उ प्राण इत्यनुरोधात् । पृष्टस्याऽऽत्मनः प्रधानविभक्त्या प्रथमया निर्देष्टुमुचितत्वाच्च । स यस्त्वया पृष्टः स प्राणाख्यस्य वृत्तिविशेषस्य प्राणः । तत्कृतं हि प्राणस्य प्राणनसामर्थ्यम् । न ह्यात्मनाऽनधिष्ठितस्य प्राणनमुपपत्तिमत् । "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" "ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति" इत्यादिश्रुतिभ्यः । ननु श्रोत्रादीन्द्रियप्रस्तावाद्घ्राणप्राणस्य ग्रहणं युक्तं न त्वविशेषेण । सत्यम् । सामान्यग्रहणे तस्याप्यन्तर्भावाददोषः । सर्वस्यैव हि करणकलापस्य यदर्थप्रयुक्ता प्रवृत्तिस्तद्ब्रह्मेति प्रकरणार्थो विवक्षितः । तथा चक्षुषो रूपप्रकाशकस्य यद्ग्रहणसामर्थ्यं तदात्मचैतन्याधिष्ठितस्यैव । अतश्चक्षुषश्चक्षुः । प्रष्टुः पृष्टस्यार्थस्य

ज्ञातुमिष्टत्वादत्र तज्ज्ञात्वेति शेषः । अतिमुच्योज्झित्वा सामर्थ्याच्छ्रोत्रादिकरणकलापम् । यत्कृतः संसारस्तं श्रोत्रादावात्मभावं त्यक्त्वा श्रोत्रादेः श्रोत्रादिलक्षणं ब्रह्माऽऽत्मेति ज्ञात्वाऽत एव ते धीरा धीमन्तो न हि विशिष्टधीमत्त्वमन्तरेण श्रोत्राद्यात्मभावः शक्यः परित्यक्तुम् । प्रेत्य व्यावृत्यास्माल्लोकान्ममाहंभावलक्षणात्त्यक्तसर्वैषणा भूत्वेत्यर्थः । अमृता अमरणधर्माणो भवन्ति । अथ वाऽतिमुच्येत्यनेनैवैषणात्यागस्य सिद्धत्वादस्माल्लोकात्प्रेत्यास्माच्छरीरादपेत्य मृत्वेत्यर्थः ॥ २ ॥

यस्माच्छ्रोत्राद्यात्मभूतं ब्रह्मातो न तत्र तस्मिन्ब्रह्मणि चक्षुर्गच्छति स्वात्मनि गमनासंभवात् । अत एव न वाग्गच्छति यथाऽग्निर्दाहकः प्रकाशकश्चापि सन्न ह्यात्मानं दहति प्रकाशयति वा तद्वत् । श्रोत्रस्य श्रोत्रमित्यादिनोक्तेऽप्यात्मतत्त्वे सूक्ष्मत्वेनाप्रतिपन्नत्वात्पुनः पर्यनुयुयुक्षा वाक्चक्षुषोः सर्वेन्द्रियार्थत्वाच्चक्षुरादीनि तत्र स्वात्मभूते न ज्ञानमुत्पादयन्तीत्यर्थः । तर्हि सुखादिवदन्तःकरणेन गृह्यतामत आह—नो मनो गच्छति । अतो न विद्मो बाह्यकरणैर्न विजानीमोऽन्तःकरणेन सुखादिवद्यथैतन्मन आदिकरणजातमनुशिष्यादुपदिशेद्ब्रह्म । यद्धि करणगोचरं तदन्यस्मा उपदेष्टुं शक्यं जातिगुणक्रियादिविशेषणैः । न तु जात्यादिविशेषणवद्ब्रह्म तस्माद्विषमं शिष्यानुपदेशेन प्रत्याययितुं तस्मादुपदेशे तदर्थग्रहणे च यत्नातिशयः कर्तव्य इति भावः । अथवा श्रोत्रादीनां श्रोत्रादिलक्षणं ब्रह्म विशेषेण दर्शयेत्युक्त आह—न तत्र चक्षुरित्यादि । पूर्ववत्सर्वमत्र तु विशेषः । यथैतदनुशिष्यात्प्रतिपादयेदन्योऽपि शिष्यमितोऽन्यविधिनेति भावः । सर्वथा ब्रह्म बोधयेत्युक्ते यद्यपि प्रत्यक्षादिभिर्न शक्यते प्रत्याययितुमागमेन तु शक्यत इत्याशयेनाऽऽह—अन्यदेव तद्विदितादथो अविदितादधीति । विदितं व्यक्तं व्याकृतं ततोऽन्यदविदितमव्यक्तमव्याकृतमविद्या ततोऽप्यध्युपरि लक्षणयाऽन्यदित्यर्थः । यद्धि यस्मादुपरि भवति तत्ततोऽन्यदिति प्रसिद्धम् । यद्विदितं तदल्पं मर्त्यं दुःखात्मकं चेति हेयम् । अविदितमुपादेयं कार्यार्थं हि कारणमुपादीयते । तेन हेयोपादेयाभ्यामन्यद्ब्रह्म । एतेन स्वात्मव्यतिरिक्तब्रह्मविषया या जिज्ञासा सा निवर्तिता भवति । न हि स्वात्मा हेयो नाप्युपादेयोऽन्यद्ध्यन्येनोपादीयते न तु स्वयमेव स्वयं हीयते वोपादीयते वा तेन स्वात्मैव ब्रह्मेत्युपदिष्टम् । इति शुश्रुमेति । ब्रह्मैवमाचार्योपदेशपरम्परयैवाधिगन्तव्यं न तर्कतः प्रवचनमेधाबहुश्रुततपोयज्ञादिभ्यश्चेत्येवं शुश्रुम श्रुतवन्तो वयं पूर्वेषामाचार्याणां वचनम् । य आचार्या नोऽस्मभ्यं तद्ब्रह्म व्याचचक्षिरे विस्पष्टं कथितवन्तः ॥ ३ ॥

अन्यदेवेत्यनेनाऽऽत्मा ब्रह्मेति प्रतिपादिते शङ्का स्यात् । कथमात्मा शरीरी ब्रह्म ततोऽन्य उपास्यो विष्णुरीश्वर इन्द्रः प्राणो वा ब्रह्म भवितुमर्हति न त्वात्मा लोकप्रत्ययविरोधादिति तामपनेतुमाह—यद्वाचेति । यच्चैतन्यमात्रं स्वसत्ताकं वाचा वागिति जिह्वामूलादिष्वष्टसु स्थानेषु विषक्तमाग्नेयं वर्णानामभिव्यञ्जकं करणं वर्णाश्चार्थसंकेतपरिच्छिन्ना एतावन्त एवं क्रमप्रयुक्ता इत्येवं तदभिव्यङ्ग्यः शब्दः पदं वाक्यं वागित्युच्यते । "अकारो वै सर्वा वाक्सैषा स्वरस्पर्शान्तस्थोष्मभिर्व्यज्यमाना वाङ्नानारूपा भवति" इति श्रुतेः । मितममितं स्वरः सत्यानृते एव विकारो यस्यास्तया वाचा पदत्वेन परिच्छिन्नया करणवत्याऽनभ्युदितमप्रकाशितम् । येन ब्रह्मणा विवक्षितेऽर्थे सकरणा वागभ्युद्यते चैतन्यज्योतिषा प्रकाश्यते सा हि वक्तुर्वक्तिरूपा नित्या चैतन्यज्योतिःस्वरूपा "न हि वक्तुर्वाचो विपरिलोपो विद्यते" इति श्रुतेः । तदेवाऽऽत्मस्वरूपं ब्रह्म निरतिशयं भूमाख्यं बृहत्त्वाद्ब्रह्मेति विद्धि जानीहि त्वम् । चक्षुषश्चक्षुरित्यादिश्रौतव्यवहारान्व्युदस्याऽऽत्मानमेव निर्विशेषं ब्रह्म विद्धीत्येवशब्दार्थः । नेदं ब्रह्म यदिदमुपाधिभेदविशिष्टमनात्मेश्वराद्युपासते ध्यायन्ति । उक्तं हीश्वरेण वसिष्ठं प्रति—

"शृणु ब्रह्मविदां श्रेष्ठ देवार्चनमनुत्तमम् ।
न देवः पुण्डरीकाक्षो न च देवस्त्रिलोचनः ।
न देवो देवरूपो हि न देवश्चित्तरूपकः ।
अकृत्रिममनाद्यन्तं देवनं देव उच्यते ।
आकारादिपरिच्छिन्ने मिते वस्तुनि तत्कुतः ।
अकृत्रिममनाद्यन्तं देवनं चिच्छिवं विदुः" इति ।
अज्ञातशिवतत्त्वानामाकाराद्यर्चनं कृतम् ।
योजनाध्वन्यशक्तस्य क्रोशाध्वा परिकल्प्यते" इति च ।

तत्र पूजाविधिरप्युक्तः—

"बोधः साम्यं शम इति पुष्पाण्यग्र्याणि तत्र च ।
शिवं चिन्मात्रममलं पूज्यं पूजाविदो विदुः" इति ।

तदेव विद्धीत्युक्तेऽपि नेदं ब्रह्मेत्यनात्मनोऽब्रह्मत्वं पुनरुच्यते नियमार्थमन्यब्रह्मबुद्धिपरिसंख्यानार्थं च ॥ ४ ॥

अन्यदेव तदितिब्राह्मणोक्तार्थो यद्वाचेत्यादिमन्त्रैर्दृढीक्रियते । यन्मनसेति । कामादिवृत्तिमन्मनस्तेन यच्चैतन्यज्योतिर्मनसोऽवभासकं न मनुते न संकल्पयति नापि निश्चिनोति मनसोऽवभासकत्वेन नियन्तृत्वात्सर्वविषयं प्रति प्रत्यगेवेति

स्वात्मनि न प्रवर्ततेऽन्तःकरणम् । अन्तस्थेन हि चैतन्यज्योतिषाऽवभासितस्य मनसो मननसामर्थ्यं तेन सर्ववृत्तिकं मनो येन ब्रह्मणा मतं विषयीकृतं व्याप्त-माहुः कथयन्ति ब्रह्मविदः । तस्मात्तदेव मनस आत्मानं प्रत्यक्चेतयितारं त्वं ब्रह्म विद्धि ॥ ५ ॥

न पश्यति न विषयीकरोति येनान्तःकरणवृत्तिसंयुक्तेन चक्षूंषि तद्वृत्तीः पश्यति चैतन्यात्मज्योतिषा विषयीकरोति व्याप्नोति लोकः ॥ ६ ॥

यच्छ्रोत्रेण दिग्देवताधिष्ठितेनाऽऽकाशकार्येण मनोवृत्तिसंयुक्तेन न विष-यीकरोति लोकः । यच्चैतन्यात्मज्योतिषा च श्रोत्रं श्रुतं विषयीकृतं तदेव ॥७॥

यत्प्राणेन पार्थिवेन नासापुटस्थेनान्तःकरणप्राणवृत्तिभ्यां सहितेन न प्राणिति गन्धवन्न विषयीकरोति लोकः । येन चैतन्यात्मज्योतिषाऽवभास्यत्वेन स्वविषयं प्रति प्राणः प्रणीयते तदेव ॥ ८ ॥

इति नारायणविरचितायां केनोपनिषद्दीपिकायां प्रथमः खण्डः ॥ १ ॥

---

एवं हेयोपादेयविपरीतस्त्वमात्मा ब्रह्मेति प्रत्यायितः शिष्योऽहमेव ब्रह्मेति सुष्ठु वेदाहं मामिति गृह्णीयादित्याशङ्कयाऽऽचार्यः शिष्यबुद्धिविचालनार्थमाह— यदिति । अहं सुष्ठु वेदेति चेन्मन्यसे नैतद्युक्तं सर्वस्य हि वेदितुरात्मा ब्रह्म नहि वेदिता वेदितुर्वेदितुं शक्योऽग्निरिव दग्धुमग्नेः । न चान्यो वेदिता ब्रह्मणोऽस्ति यस्य वेद्यमन्यत्स्याद्ब्रह्म "नान्यदतोऽस्ति विज्ञातृ" इत्यन्यस्य विज्ञातुर्निषेधात् । तस्मात्सुष्ठु वेदाहं ब्रह्मेति प्रतिपत्तिर्मिथ्यैव तस्माद्युक्तमेवाऽऽहाऽऽचार्यो यदी-त्यादि।कदाचिद्यथाश्रुतदुर्विज्ञेयमपि क्षीणदोषः सुमेधाः कश्चित्प्रतिपद्यते कश्चिन्नेति साशङ्कमुक्तं यदीत्यादि । महतीह सूक्ष्मेक्षिका वर्तते । ब्रह्मणा बोधितोऽपि विरोचनो यथावन्न प्रतिपेदे । इन्द्रश्चतुर्थपर्याये प्रथमोक्तमेव ब्रह्म प्रतिपेदे। लोकेऽप्येकस्माद्गुरोः शृण्वतां कश्चिद्यथावत्प्रतिपद्यते कश्चिदयथावत्कश्चिद्विपरीतं कश्चिन्न प्रतिपद्यते किं पुनर्वक्तव्यमतीन्द्रिय आत्मतत्त्वे । सर्वे चात्र तार्किका विप्रतिपन्नाः । तस्मादविदितं ब्रह्मेति सुनिश्चितोक्तेऽपि विषमप्रतिपत्तित्वाद्यदि मन्यस इति साशङ्कं वचनं युक्तमेवाऽऽचार्यस्य । दहरं दभ्रमल्पमेवापि नूनं त्वं वेत्थ जानीषे ब्रह्मणो रूपम् । किमनेकानि रूपाणि महान्ति दभ्रकाणि च येनाऽऽह दभ्रमेवेत्यादि । बाढम् । अनेकानि हि नामरूपोपाधिकृतानि ब्रह्मणो रूपाणि न स्वतः । स्वतस्तु " अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् " इति शब्दादिभिः सह रूपाणि प्रतिषिध्यन्ते । न केवलं श्रोत्रस्य श्रोत्रमित्याद्यध्यात्मोपाधिपरिच्छिन्नमुपदिष्टमेव ब्रह्मणो रूपमल्पं

वेत्थ । किंतु यदस्य ब्रह्मणो देवेषु रूपमधिदैवमिति यावत् । अधिदैवोपाधिपरिच्छिन्नस्य ब्रह्मणो यद्रूपं वेत्थ तदपि दभ्रमेव वेत्थेत्यहं मन्ये । यदध्यात्मं यदपि च देवेष्वधिदैवतोपाधिपरिच्छिन्नं तदपि तत्त्वतो न सहसा वेदितुं शक्यम् । यत्तु विध्वस्तसर्वोपाधिविशेषं शान्तमनन्तमेकमद्वैतं भूमाख्यं नित्यं ब्रह्म तत्कथं सुवेद्यमित्यभिप्रायः । यत एवमथ नु हीनं तस्मान्मन्येऽद्यापि मीमांस्यं विचार्यमेव तत्र ब्रह्म । एवमाचार्योक्तः शिष्य एकान्त उपविष्टः सन्यथोक्तमाचार्येणाऽऽगममर्थतो विचार्य तर्कतश्च निर्धार्य स्वानुभवं कृत्वाऽऽचार्यसकाशमुपगम्योवाच मन्ये विदितमिति । अथ त्वं मन्यसे मया विदितं ब्रह्मेति । अथवा देवेष्वग्न्यादिषु सूक्ष्मबुद्धिष्वपि यो मन्यते सुवेदाहमिति सोऽप्यस्य ब्रह्मणो रूपं दभ्रमेव वेत्ति नूनं किं पुनर्वक्तव्यमल्पबुद्धिषु मानवेषु तस्मान्मीमांस्यमेवेत्युक्तः शिष्य आह मन्ये विदितमित्येवं योज्यम् । अथवाऽध्यात्ममधिदैवं च यदस्य ब्रह्मणो रूपं सोपाधिकं त्वया विदितं तदहरमल्पमेव न तु परं भूमाख्यं तत्तु ते मीमांस्यमेवास्तीत्युक्तः शिष्य उपाधिं परित्यज्यानुभवेन निश्चित्याऽऽह मन्ये विदितमित्येवं योज्यम् । अथ न्विति हेतुर्मीमांसायाः । सुविदितरूपं कस्माद्दभ्रमन्यदेव तद्विदितादित्युक्तत्वात् । मन्ये विदितमिति शिष्यमीमांसानन्तरोक्तिरागमाचार्यानुभवलक्षणप्रत्ययत्रयस्यैकविषयत्वेन संगत्यर्थम् ॥ १ ॥

आचार्यात्मानुभवयोस्तुल्यत्वे हेतुमाह—मन्ये सुवेदेति । *अहेत्यवधारणे नैव मन्ये सुवेद ब्रह्मेति । नैव तर्हि त्वया विदितं ब्रह्मेत्युक्त आह—नो न वेदेति वेद चेति । नाह मन्ये सुवेदेति विदितादन्यत्वमुक्तं नो न वेदेति चाविदितादन्यत्वमुक्तं वेद चेति वेदैव। ननु विप्रतिषिद्धमिदं न सुवेद वेद चेति । एकस्मिन्विषये वेदनावेदनयोर्विरोधात् । नैष दोषः । विदिताविदितान्यत्वेन स्वप्रकाशावेदनपरत्वात् । फलव्याप्यत्वासंभवेऽपि चरमान्तःकरणवृत्तिव्याप्यत्वाङ्गीकारात् । आत्मप्रकाशे प्रकाशान्तरानपेक्षणात् । विषयाकारान्तःकरणवृत्तिप्रतिबिम्बितं चैतन्यं फलं घट इवाऽऽत्मप्रकाशे स्वप्रकाशत्वेन प्रतिबिम्बानपेक्षणात् । इदानीमात्मने(नो) ब्रह्मविद्याया दृढनिश्चयतां दर्शयन्गर्जति यो न इति नोऽस्माकं सब्रह्मचारिणां मध्ये य उक्तं तद्वचनं तत्त्वतो वेद स एव तद्ब्रह्म वेद नान्यः । किं पुनस्तद्वचनमत आह—नो न वेदेति वेद चेति । अन्यदेवेत्यादिनोक्तं वस्त्वनुमानानुभवाभ्यां संयोज्य निश्चितं नो न वेदेति वेद चेत्यनेन वाक्येनाऽऽचार्यबुद्धिसंवादार्थं मन्दबुद्धिग्रह-

* मूले नाहमित्यत्र नाहेति पाठानुरोधेनेदम् ।

ज्ज्यपोहार्थं च मयोक्तं ब्रह्म। एतद्वाक्यमर्थतो यो वेद स एव ब्रह्म वेद नान्य इत्यर्थः ॥ २ ॥

आख्यायिकोपसंहारार्थं श्रुतिः स्वेन रूपेण समस्तसंवादनिर्वृत्तमर्थमवधारयति—यस्यामतमिति। यस्यामतमात्मतत्त्वनिश्चयफलावसानावबोधतया विविदिषा निवृत्ता तस्य मतं तेन ज्ञातम्। "मतिबुद्धिपूजार्थेभ्यश्च" इति क्तः। "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी। विद्वदविदुषोर्यथोक्तौ पक्षाववधारयति—अविज्ञातमिति। अविज्ञातं विज्ञाताद्विदितादन्यदेव ब्रह्म विजानतां सम्यग्दर्शिनाम्। विज्ञातं विदितं ब्रह्माविजानतामसम्यग्दर्शिनाम्। इन्द्रियमनोबुद्ध्युपाधिष्वात्मदर्शिनां ब्रह्मोपाधिविवेकानुपलम्भाद्बुद्ध्युपाधेश्च विज्ञातत्वाद्विज्ञातं ब्रह्मेत्युपपद्यते भ्रान्तिः। न त्वत्यन्तमूढानामियं भ्रान्तिरतोऽसम्यग्दर्शनपूर्वपक्षत्वेनोपन्यस्यते हेत्वर्थे वोत्तरार्धः ॥ ३ ॥

यदि ब्रह्मात्यन्तमेवाविज्ञातं तर्हि लौकिकानां ब्रह्मविदां चाविशेषः प्राप्तोऽविज्ञातं विजानतामिति च परस्परविरुद्धम्। कथं च ब्रह्म सम्यग्विदितं भवतीत्येवमर्थमाह—प्रतिबोधेति। बोधं बोधं प्रति विदितं बोधशब्देन बौद्धाः प्रत्यया उच्यन्ते। यस्य सर्वे प्रत्यया विषयीभवन्ति स आत्मा सर्वबोधान्प्रतिबुध्यते सर्वप्रत्ययदर्शी चिच्छक्तिस्वरूपमात्रः प्रत्ययैरेव प्रत्ययेष्वविशिष्टतया लक्ष्यते नान्य*द्द्वारान्तरमात्मविज्ञानाय। अतः प्रत्ययप्रत्यगात्मतया यदा विदितं ब्रह्म तदा तन्मतं तत्सम्यग्दर्शनमित्यर्थः। यद्वा गुरूपदेशः प्रतिबोधस्तेन विदितं मतम्। अमृतत्वं हि विन्दत इति हेतुवचनम्। विषयात्मविज्ञाने (नं?) हि मृत्युमारभत इत्यात्मविज्ञानममृतत्वनिमित्तमिति युक्तं हेतुवचनम्। कथमात्मविज्ञानेनामृतत्वं विन्दतेऽत आह—आत्मनेति। स्वेन रूपेण विन्दते लभते वीर्यं बलं सामर्थ्यम्। धनसहायमन्त्रौषधितपोयोगकृतं वीर्यं मृत्युं नाभिभवितुं शक्नोति। अनित्यवस्तुकृतत्वात्। आत्मविद्याकृतं तु वीर्यमात्मनैव विन्दते नान्येनेत्यतस्तदेव वीर्यं मृत्युं शक्नोत्यभिभवितुम्। यत एवमात्मविद्याकृतं वीर्यमात्मनैव विन्दतेऽतो विद्ययाऽऽत्मविषयया विन्दतेऽमृतम्। "नायमात्मा बलहीनेन लभ्यते(भ्यः)" इति श्रुतेः सामर्थ्यं हेतुरमृतत्वे॥४॥

कष्टा खलु संसारगतिरत इहैव चेद्यदि मनुष्योऽधिकृतः समर्थः सन्नवेदीदात्मानं यथोक्तलक्षणं विदितवान्। अथ सत्यं परमार्थतत्त्वमस्त्यवाप्तं तस्य जन्म सफलमिति भावः। चेन्नावेदीन्महती विनष्टिर्महान्विनाशो जन्ममरणप्रबन्धाविच्छेदलक्षणः स्यात्। ज्ञाते किं स्यादत आह—भूतेषु भूतेषु चराचरेषु विचित्य

---

*अन्यदित्यधिकमिव भाति।

पृथक्कृत्यैकमात्वतत्त्वमात्मभावेनोपलभ्य धीरा धीमन्तो विवेकिनः प्रेत्य व्यावृत्यास्माल्लोकाच्छरीराद्व्यावृत्तममत्वाहंकाराः सन्तोऽमृता नित्यविज्ञानामृततत्त्वस्वभावा भवन्ति ॥ ५ ॥

इति नारायणविरचितायां केनोपनिषद्दीपिकायां द्वितीयः खण्डः ॥ २ ॥

---

समाप्ता ब्रह्मविद्याऽत ऊर्ध्वमर्थवादेन ब्रह्मणो दुर्विज्ञेयतोच्यतेऽधिकयत्नाय। समाधयर्थो वाऽऽम्नायोऽभिमानशातनात्। व्यावृत्तबाह्यमिथ्याप्रत्ययग्राह्यत्वाद्ब्रह्मणः। "नेदं यदिदमुपासते" इत्यपोदितत्वात्सगुणब्रह्मोपासनार्थो वा। तस्यैव ब्रह्मणः सगुणत्वेनाध्यात्ममधिदैवं चोपासनं विधातव्यमित्यर्थः। ब्रह्म। ईश्वरः को ह्यन्यस्तृणं वज्रीकर्तुं क्षमः। ह, ऐतिह्ये। देवासुरसंग्रामे देवेभ्योऽर्थाय विजिग्येऽजैषीदसुरान्। ब्रह्मण इच्छानिमित्तो देवानां विजयो बभूवेत्यर्थः। तस्येति। ब्रह्मणो विजये ब्रह्मकर्तृके स्वोत्कर्षे सति यज्ञादिलोकस्थित्यपहारिष्वसुरेषु पराजितेषु देवा वृद्धिं पूजां वा प्राप्तवन्तः। त ऐक्षन्ताऽऽलोचितवन्तो मिथ्याप्रत्ययत्वाद्धेयख्यापनार्थोऽयमाम्नायः। किमालोचितवन्त ईश्वरनिमित्ते विजये सति स्वसामर्थ्यनिमित्तोऽस्माकमेवायं विजयोऽस्माकमेवायं महिमेति सर्वकल्याणास्पदमीश्वरमात्मानमबुद्ध्वा पिण्डमात्राभिमानाः सन्तः ॥ १ ॥

तद्ब्रह्म ह किलैषां देवानामभिप्रायं मिथ्याहंकाररूपं विजज्ञौ ज्ञातवत्। ज्ञात्वा च मिथ्याभिमानशातनेन तदनुजिघृक्षया तेभ्यो देवेभ्योऽर्थाय तेषामेवेन्द्रियगोचरे नातिदूरे प्रादुर्बभूव महेश्वरशक्तिमायोपात्तेनात्यन्ताद्भुतेन केनचिद्रूपेण प्रादुर्भूतं तत्किलोपलभमाना अपि देवा न व्यजानत न विज्ञातवन्तः किमिदं यदेतद्यक्षं पूज्यमिति यजेर्णादिकः सः ॥ २ ॥

ते तद्विज्ञानायाग्निमब्रुवन्। अभ्यद्रवच्छीघ्रं गतः। तमभ्यवदद्ब्रह्म। किम्। कोऽसीति। पृष्टेऽग्निर्वै जातवेदा वा इति नामद्वयेनाऽऽत्मानं श्लाघयन्नग्निरब्रवीत्। एवमुक्तवन्तं ब्रह्मोवाच। तस्मिंस्त्वयि प्रसिद्धगुणनामवति त्वयि किं वीर्यं सामर्थ्यमिति। सोऽब्रवीदपीदमित्यादि। पृथिव्यामित्युपलक्षणमन्तरिक्षस्थस्यापि। तस्मा एवमभिमानवते ब्रह्म तृणं निदधौ पुरः स्थापितवत्। एतत्तृणमात्रं ममाग्रतो दह न चेद्दग्धुं समर्थो मुञ्च सर्वत्र दग्धृत्वाभिमानमित्युक्तस्तत्तृणमुपप्रेयाय तृणसमीपं गतवान्सर्वजवेन सर्वोत्साहकृतेन वेगेन गत्वा न शशाक नाशकद्दग्धुं सोऽग्निस्तत एव तृणदाहाशक्तेरेव व्रीडित्वा निववृते निवृत्तः सन्देवानवोचन्नैतादिति ॥ ३ ॥ ४ ॥ ५ ॥ ६

अथानन्तरं वायुमब्रुवन्नित्यादि पूर्ववत्। वानाद्गमनाद्वायुः। मातर्यन्तरिक्षे

श्वयति वर्धत इति मातरिश्वा । आददीय गृह्णीयाम् । तृणनिधानेऽयमभिप्रायः । अत्यन्तसंभावितयोरग्निमारुतयोस्तृणदहनादानाशक्त्याऽऽत्मसंभावना शातिता भवेदिति । तस्मादिन्द्रात्तिरोदधे । तिरोधानेऽप्यभिप्राय इन्द्रोऽहमित्यधिकतमोऽभिमानो यस्य सोऽहमग्न्यादिभिः प्राप्तं वाचा संभाषणमात्रमप्यनेन न प्राप्तोऽस्मीत्यभिमानं कथं न नाम जह्यादिति । तदनुग्रहायैवान्तर्हितं बभूव । स शान्ताभिमान इन्द्रोऽत्यर्थं ब्रह्मजिज्ञासुर्यस्मिन्नाकाशे ब्रह्मणः प्रादुर्भाव आसीत्तिरोधानं च तस्मिन्नेवाऽऽकाशे तस्थौ किं तद्यक्षमिति ध्यायन्न निववृतेऽग्न्यादिवत् । तत इन्द्रस्य यक्षे भक्तिं दृष्ट्वा विद्या प्रादुरासीत् । स स्त्रियमतिरूपिणीं विद्यामाजगाम रुद्रस्योमा हैमवती बहुशोभमानाऽभिप्रायबोधहेतुत्वाद्धिमैव सा तां ह प्रसिद्धामुवाच किमिदं यक्षम् । इति वाक्यसमाप्तौ ॥ ७ ॥ ८ ॥ ९ ॥ ॥ १० ॥ ११ ॥ १२ ॥

इति नारायणविरचितायां केनोपनिषद्दीपिकायां तृतीयः खण्डः ॥ ३ ॥

सा तं ब्रह्मेति होवाच । सा हि नित्यमेवेश्वरेण सर्वज्ञेन सह वर्तत इति ज्ञातुं समर्था । ब्रह्मण ईश्वरस्य वै विजये महीयध्वमीश्वरेण हि जिता असुरा यूयं तत्र निमित्तमात्रं तस्यैव विजये महिमानं प्राप्नुथ । एतदिति क्रियाविशेषणम् । युष्माकं तु मिथ्याभिमानोऽस्माकमेवायं विजय इति । ततस्तस्मादेवोमावाक्याद्धैव विदांचकार ब्रह्मेतीन्द्रः । ततो हैवेत्यवधारणं ब्रह्मावबोधे स्वातन्त्र्यनिरासाय ॥ १ ॥

तस्माद्वा इति । यस्मादग्निवाय्विन्द्रा ब्रह्मणा संवाददर्शनादिना सामीप्यमुपगतास्तस्मात्स्वैर्गुणैरतितरामिव शक्तिगुणादिमहाभाग्यैरन्यान्देवानतिशेरत इव । इवशब्दोऽवधारणे । अतिशेरत एते हि देवा यस्मादेनद्ब्रह्म नेदिष्ठमन्तिकतमं पस्पृशुः स्पृष्टवन्तः । यथोक्तैर्ब्रह्मणः संवादादिप्रकारैस्ते हि यस्माच्च हेतोरेतद्ब्रह्म प्रथमः प्रथमाः प्रधानभूताः सन्तो विदांचकार विदांचक्रुरेतद्ब्रह्मेति ॥ २ ॥

यस्मादग्निवायू अपीन्द्रवाक्यादेव विदांचक्रतुः । इन्द्रेण ह्युमावाक्यात्प्रथमं श्रुतं ब्रह्म । तस्माद्वा इन्द्रोऽतितरामिवातिशयेन शेत इवान्यान्देवान्स ह्येनन्नेदिष्ठं पस्पर्श । यस्मात्स ह्येनत्प्रथमो विदांचकार ब्रह्मेत्युक्तार्थम् ॥ ३ ॥

तस्य प्रकृतस्य ब्रह्मण एष आदेश उपदेशो निरुपमस्य ब्रह्मणो येनोपमा स एष पदार्थ इत्यर्थः । किं तत् । यदेतत्प्रसिद्धं लोके विद्युतो व्यद्युतत्प्रत्यायार्थोऽविवक्षितो देवेभ्यो ब्रह्म तिरोभूतम् । अथवा विद्युतस्तेज इत्यध्याहार्यं

व्यद्युतद्विद्योतितवदा इव विद्युतस्तेजः सकृद्विद्योतितवदिवेत्यर्थः । इतिशब्द आदेशप्रतिनिर्देशार्थः । इत्ययमादेश इति । इच्छब्दः समुच्चयार्थः । अयं चापरस्तस्याऽऽदेशः । कः । न्यमीमिषत् । स्वार्थे णिच् । उपमार्थ एवाऽऽकारः । चक्षुषो विषयं प्रति प्रकाशतिरोभाव इवेत्यर्थः । अथवोपमानद्वयेन ब्रह्मणो ज्ञानशक्तिक्रियाशक्ती क्रमेण दर्शिते इत्यधिदैवतं देवताविषयं ब्रह्मण उपमानदर्शनम् ॥ ४ ॥

अथाध्यात्मं प्रत्यगात्मविषय आदेश उच्यते । यदेतद्ब्रह्म गच्छतीव च मन उपढौकत इव विषयीकरोतीव चैष आदेशः । तत्प्रायःपिण्डवन्मनोवृत्तिमात्रस्य स्फुरणाविष्टत्वात् । अन्यथाऽऽकारमात्रस्य जडत्वेनैव भानानुपपत्तेः । साधकस्य विषयासक्तावपि ब्रह्माविस्मरणेऽयं हेतुरित्याह—अनेन च मनसो ब्रह्मगमनेनैतद्ब्रह्मोप स्वसमीप एव स्मरति चिन्तयति न विस्मरत्यभीक्ष्णं निरन्तरम् । संकल्पः संकल्पयतीति संकल्पः संकल्पविकल्पौ मनोवृत्ती कुर्वन्नपि साधक एषोऽध्यात्ममुपदेशः । यद्वैषाऽभीक्ष्णं संकल्पो मनसो ब्रह्मविषय इत्युपदेशः । अधिदैवं विद्युदुन्मेषणवद्द्रुतं प्रकाशधर्मि ब्रह्माध्यात्मं च मनः प्रत्ययसमकालाभिव्यक्तिधर्मीत्येष आदेशः । एवमादिश्यमानं हि ब्रह्म मन्दबुद्धिगम्यं भवति । न हि निरुपाधिकमेव ब्रह्म मन्दबुद्धिभिराकलयितुं शक्यम् ॥ ५ ॥

तस्य नामाऽऽह—तद्ध तद्वनं नाम ब्रह्म । ततः किमत आह—तद्वनमित्युपासितव्यमिति नाम्नोपासनायायमुपदेशः । तस्य प्राणिजातस्य वनं संभजनीयं "वन संभक्तौ" संभक्तिः सम्यक्सेवा । तद्गुणोपासनेन तदेव फलं भवतीत्याह—स य एतदेवमिति । वेदोपास्ते । अभिसंवाञ्छन्ति ह प्रार्थयन्त एव यथा ब्रह्म ॥ ६ ॥

एवमनुशिष्टः शिष्य आह—उपनिषदं भो इति । आचार्य आह—उक्तेति । का पुनः सेत्यत आह—ब्राह्मीमिति । ब्रह्मणः परमात्मन इयं ताम् । एतावत्येवेयमुपनिषदन्यनिरपेक्षाऽमृतत्वायोक्ता । इतिशब्दो विद्यासमाप्तौ ॥ ७ ॥

उपनिषदं भो ब्रूहीतिप्रश्नसार्थकत्वायोक्ताया उपनिषदः प्राप्त्युपायभूतानि तपआदीनि विद्याङ्गरूपकेणाऽऽह—तस्या इति । कायेन्द्रियमनसां समाधानं तपः । उपशमो दमः । अग्निहोत्रादि कर्म । इतिशब्द आद्यर्थे । अमानित्वमदम्भित्वमित्यादीन्यपि । प्रतिष्ठा पादौ पादाविवास्या विद्यायास्तेषु हि सत्सु प्रतितिष्ठति ब्रह्मविद्या पद्भ्यामिव पुरुषः । तपआदीनां विद्यासाधनत्वं श्वेताश्वतरमन्त्र उक्तम्—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति ।

स्मृतौ च—"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इति ।

वेदाः साङ्गाश्चत्वारः सर्वाणि शिरःपाण्यादीन्यङ्गानि । सत्यममायिताऽकौटिल्यं च वाङ्मनःकायानां तदायतनमाश्रयो विद्यायास्तपआदिष्वेव प्रतिष्ठात्वेन प्राप्तस्य सत्यस्य पुनरायतनत्वेन ग्रहणं साधनातिशयत्वप्रदर्शनार्थम् ।

"अश्वमेधसहस्रं तु सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेकं विशिष्यते" इति स्मृतेः ॥ ८ ॥

अमृतत्वं हि विन्दत इत्युक्तमपि ब्रह्मविद्याफलमन्ते निगमयति—यो वा इति । एतां केनेषितमित्याद्यां ब्रह्म ह देवेभ्य इत्यादिना स्तुताम् । पाप्मानमविद्याकामकर्मलक्षणं संसारबीजम् । अनन्तेऽपर्यन्ते स्वर्गे लोके सुखात्मनि ब्रह्मणि ज्येये ज्यायसि सर्वमहत्तरे । स्व आत्मनि प्रतितिष्ठति न पुनः पुनः संसारमापद्यते । द्विरुक्तिः समाप्त्यर्था ॥ ९ ॥

इति नारायणविरचितायां केनोपनिषद्दीपिकायां चतुर्थः खण्डः ॥ ४ ॥

---

नारायणेन रचिता शंकरोक्त्युपजीविना ।
अस्पष्टपदवाक्यानां केनेषितप्रदीपिका ॥ १ ॥

समाप्तेयं नारायणकृता तलवकारोपनिषदपरपर्यायकेनोपनिषद्दीपिका ॥

## अथ [illegible] के[illegible] ग्प्रतीकानां
## वर्ण[illegible]

समाप्तिमगमदियं वर्णानुक्रमणिका ।

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७

# काठकोपनिषत् ।

सटीकाद्वयशांकरभाष्योपेता ।

मास्टर ऑफ् आर्ट्स् इत्युपपदधारिभिः फर्ग्युसनकालेजस्थ-
संस्कृतभाषाध्यापकैः 'राजवाडे' इत्युपाह्व-
वैजनाथशर्मभिः संशोधिता ।

सा च
हरि नारायण आपटे
इत्यनेन
पुण्याख्यपत्तने
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशिता ।

द्वितीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८१८
खिस्ताब्दाः १८९७



मूल्यमेको रूपकः सपादः ।

# आद[illegible]कोल्लेखपत्रिका।

काठकोप

अस्य ग्रन्थस्य संस्करणे '[illegible]जी आपटे' इत्येतैः प्रेषितानि यानि मुद्रितहस्तलिखितपुस्तकानि क[illegible]क्षरैरङ्कितान्युपयुक्तानि तेषु—

'क' इतिसंज्ञितं पुस्तकम्—कलिकाता[illegible] 'बिब्लीओथिका इण्डिका' इति ग्रन्थाद्येव [illegible]मुद्रितं कै० वे० शा० सं० बालशास्त्री देव इत्येतेषामधिकारिभ्योऽधिगतम्।

'ख' इतिसंज्ञितम्—इन्दुरवासिभ्यां किबेकुलोत्पन्नाभ्यां भाऊसाहेब बाळासाहेब इत्येताभ्याम्।

'ग' 'घ' इतिसंज्ञिते द्वे—रावसाहेब विंचूरकर इत्येतेभ्योऽधिगतम्।

'ङ' 'च' इतिसंज्ञिते द्वे—पुण्यनगरवासिभ्यः श्रीगुरुमहाराज इत्येतेभ्योऽधिगतम्।

'छ' इतिसंज्ञितम्—भाऊसाहेब नगरकर इत्येतेभ्योऽधिगतम्।

'ज' इतिसंज्ञितम्—कोल्हापुरवासिभ्यः श्रीगुरुमहाराज इत्येतेभ्योऽधिगतम्।

'झ' इतिसंज्ञितम्—काश्यां मुद्रितं रा. रा. आपटे इत्येतेभ्योऽधिगतम्।

'ञ' इतिसंज्ञितम्—वटोदरनिवासिभ्यः 'कृष्णराव भीमाशंकर' इत्येतेभ्यः।

'ट' इतिसंज्ञितं—अष्टग्रामनिवासिभ्यः 'गोविंदराव लिमये' इत्येतेभ्योऽधिगतम्।

*'ठ' इतिसंज्ञिता—काठकोपनिषत्। गोपालेन्द्रयतीश्वरटीकायुतभाष्योपेता। नागपुरनिवासिनां श्रीयुतानां रा. रा. 'अप्पासाहेब बुटी' इत्येतेषाम्।

एतेषु 'क' 'झ' इति द्वे पुस्तके विहायेतराणि सर्वाणि हस्तलिखितान्येव। 'झ' इत्यस्य मुद्रणकालः संवत् १९३० इति वर्तते। 'क' इत्यस्य गलितमुखपृष्ठत्वात्कालो न ज्ञायते किंतु तदाधुनिकमेव। 'ङ' इति शके १६७७युवनामसंवत्सरे लिखितम्। 'ज' इत्यस्य लेखनकालः संवत् १८७८ इति वर्तते। इतराणि सर्वाणि शकविहीनान्येव।

* इदं तु तत्स्वामिसकाशाच्छोधनकालादूर्ध्वं प्राप्तमतस्तदानन्दाश्रमस्थैरेव पण्डितैः समीक्ष्य तत्पाठान्तराणि स्वीकृतानि।

**स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनः। अन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च ॥ ४ ॥**

ईश्वरेणैव[1] सर्वाधिकारी प्राणः पुरुषेण सृज्यते। कथं, स पुरुष उक्तप्रकारेणेक्षित्वा प्राणं हिरण्यगर्भाख्यं सर्वप्राणि[3]करणाधारमन्तरात्मानमसृजत सृष्टवान्। अतः प्राणाच्छ्रद्धां सर्वप्राणिनां शुभकर्मप्रवृत्तिहेतुभूताम्। ततः कर्मफलोपभोगसाधनाधिष्ठानानि कारणभूतानि महाभूतान्यसृजत। खं शब्दगुणम्। वायुं स्वेन स्पर्शेन कारणगुणेन च विशिष्टं द्विगुणम्। तथा ज्योतिः स्वेन रूपेण पूर्वाभ्यां च विशिष्टं त्रिगुणं शब्दस्पर्शाभ्याम्। तथाऽपो रसेन गुणेनासाधारणेन पूर्वगुणानुप्रवेशेन च चतुर्गुणाः। तथा गन्धगुणेन पूर्वगुणानुप्रवेशेन च पञ्चगुणा पृथिवी। तथा तैरेव भूतैरारब्धमिन्द्रियं द्विप्रकारं बुद्ध्यर्थं कर्मार्थं च दशसंख्यम्। तस्य चेश्वरमन्तःस्थं संशयसंकल्पलक्षणं मनः। एवं प्राणिनां कार्यं कारणं च सृष्ट्वा तत्स्थित्यर्थं व्रीहियवादिलक्षणमन्नम्। ततश्चाद्यमानाद्वीर्यं सामर्थ्यं बलं सर्वकर्मप्रवृत्तिसाधनम्। तद्वीर्यवतां च प्राणिनां तपो विशुद्धिसाधनं संकीर्यमाणानां, मन्त्रास्तपोविशुद्धान्तर्बहिःकरणेभ्यः कर्मसाधनभूता ऋग्यजुःसामाथर्वाङ्गिरसः। ततः कर्माग्निहोत्रादिलक्षणम्। ततो लोकाः कर्मणां फलम्। तेषु च सृष्टानां प्राणिनां नाम च देवदत्तो यज्ञदत्त इत्यादि। एवमेताः कलाः प्राणिनामविद्यादिदोषबीजापेक्षया सृष्टास्तैमिरिकदृष्टिसृष्टा इव द्विचन्द्रमशकमक्षिकाद्याः स्वप्नदृक्सृष्टा इव च सर्वपदार्थाः पुनस्तस्मिन्नेव पुरुषे प्रलीयन्ते हित्वा नामरूपादिविभागम् ॥ ४ ॥

एवं परपक्षं निराकृत्य प्रकृतश्रुतिव्याख्यानं कुर्वन्स प्राणमसृजतेत्यस्य तात्पर्यार्थमाह—ईश्वरेणैवेति[6]। गैत्रैवेत्यर्थः। अक्षरार्थं प्रश्नपूर्वकमाह—कथमिति। हिरण्यगर्भाख्यमिति। हिरण्यगर्भ इत्याख्या येनोपाधिनाऽऽत्मनो भवति तं बुद्ध्यमिश्रं सर्वप्राणं समष्टिप्राणमित्यर्थः। यथाश्रुते कस्मिन्नहमुत्क्रान्त इत्यादिनाऽऽत्मन उत्क्रान्त्याद्युपाधिसृष्टेः प्रस्तुतत्वाद्धिरण्यगर्भस्य जीवस्यातथात्वादुपक्रमविरोधापत्तेः। हिर-

१ क. ख. घ. ङ. च. छ. ज. झ. °रैणैव°। २ ङ. °त्वा सर्वप्रा°। ख. ग. घ. ङ. °त्वा स प्रा°। ३ ख. ग. घ. ङ. °णिक°। ४ ख. ग. घ. ङ. च. °णावे°। ५ क. घ. °कल्पादिक°। ६ ङ. °रेवैवे°। ७ ख. घ. ङ. रात्रैवे°। ८ ख. ग. घ. ङ. च. °स्मिन्नह°।

ण्यगर्भाख्यमित्युक्तिस्त्वात्मनो हिरण्यगर्भादिसंसारिभावोऽप्येतदुपाधिक इति सूचयितुमिति बोध्यम् । तस्य समष्टित्वमाह—सर्वेति । अन्तरात्मानमिति । सर्वस्थूलशरीरान्तरत्वादात्मबुद्धिगोचरत्वाच्चान्तरात्मा स इत्यर्थः । तत इत्यानन्तर्यार्थेयं पञ्चमी । एवमुत्तरत्रापि । न च भूतकार्यत्वात्प्राणस्य कथं ततः पूर्वकालीनत्वमिति वाच्यम् । सत्यम् । सूक्ष्मभूतसृष्ट्यनन्तरं प्राणमसृजतेति कल्पनीयत्वात् । न चैतदनन्तरं भूतसृष्ट्युक्तिविरोधशङ्का । तस्याः पञ्चीकृतस्थूलभूतविषयत्वोपपत्तेः । अत एव भोगसाधनाधिष्ठानानीत्युक्तम् । सूक्ष्माणां तथात्वायोगात् । न चैवमपि स्थूलभूतसृष्ट्यनन्तरमिन्द्रियमनःसृष्ट्युक्तिविरोधः । भूतारब्धदेहाधिष्ठितानामेव तेषां कार्यक्षमत्वेन तेषां तदनन्तरत्वोक्तिरिति भावः । भोगसाधनाधिष्ठानत्वं भूतानां तत्कारणत्वादित्याह—कारणभूतानीति । तेषां भूतानां लक्षणतया खं शब्दगुणमित्यादिनाऽसाधारणगुणा उक्ताः । पूर्वपूर्वगुणानुवृत्तिस्तु पूर्वपूर्वस्योत्तरोत्तरोपादानत्वसूचनार्थं स्थौल्यतारतम्यसिद्ध्यर्थं चोक्तेति बोध्यम् । वायुमिति । श्रुतौ वायुरित्यादिप्रथमा द्वितीयार्थाः । प्राणमसृजतेति द्वितीययोपक्रमात् । तैरेवेति । अपञ्चीकृतावस्थायामित्यर्थः । तस्य चेश्वरमिति । नियामकमित्यर्थः । संकीर्यमाणानामिति । अविशुद्धसत्त्वतया पापाचरणेन तैः पापैः संकीर्यमाणानां संकरपरिहाराय चित्तशुद्धिसाधनं तपोऽसृजतेत्यर्थः । फलमिति । लोक्यते भुज्यत इति लोकः फलमित्यर्थः । नाम चेति । ब्राह्मणादिनाम्नोक्तव्यवहारासंकरार्थमित्यर्थः । नन्वीश्वरसृष्टत्वोक्त्या कलानां सत्यत्वमङ्गीकर्तव्यम् । आरोपे शुक्तिरजतादौ[3] सृष्टत्वव्यवहाराभावादित्याशङ्क्याङ्गुल्यवष्टम्भनेत्रमर्दनादिना प्रयत्नेन सृष्टस्य[4] द्विचन्द्रमशकमक्षिकादेरारोपत्वदर्शनात् । अथ रथान्रथयोगान्पथः सृजत इति सृष्टत्वेनोक्तस्वप्नपदार्थस्य च भ्रमत्वदर्शनाच्चैवमित्याह—एवमेता इति । अविद्याकामकर्मादिदोषरूपं यद्बीजं तदपेक्षया तत्साधनीकृत्येत्यर्थः । तैमिरिकशब्दो नेत्रेऽङ्गुल्यवष्टम्भाद्युपलक्षणार्थः । एवमात्मप्रतिपत्त्यर्थमध्यारोपमुक्त्वा तदपवादमवतारयति—पुनस्तस्मिन्नेवेति ॥ ४ ॥

कथम्—

**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं**

---

१ क. ख. च 'नत्वमिति भावः । भू' । २ क. ख. घ. ङ. च. 'रजष्टृत्वो' । ३ क. ख. घ. ङ. च. 'दौ सष्टृत्व' । ४ क. ख. घ. ङ. च. 'ति स्रष्टृत्वे' ।

प्राप्यास्तं गच्छन्ति भिद्येते चाऽऽसां नाम-
रूपे पुरुष इत्येवं प्रोच्यते स एषोऽ-
कलोऽमृतो भवति तदेष श्लोकः ॥ ५ ॥

स दृष्टान्तः। यथा लोक इमा नद्यः स्यन्दमानाः स्रवन्त्यः समुद्रायणाः समुद्रोऽयनं गतिरात्मभावो यासां ताः समुद्रायणाः समुद्रं प्राप्योपगम्यास्तं नामरूपतिरस्कारं गच्छन्ति। तासां चास्तं गतानां भिद्येते विनश्येते(श्यतो?) नामरूपे गङ्गायमुनेत्यादिलक्षणे। तद्भेदे समुद्र इत्येवं प्रोच्यते तद्वस्तूदकलक्षणमेवं यथाऽयं दृष्टान्तः। उक्तलक्षणस्य प्रकृतस्यास्य पुरुषस्य परिद्रष्टुः परि समन्ताद्द्रष्टुर्दर्शनस्य कर्तुः स्वरूपभूतस्य यथाऽर्कः स्वात्मप्रकाशस्य कर्ता सर्वतस्तद्वदिमाः षोडश कलाः प्राणाद्या उक्ताः कलाः पुरुषायणा नदीनामिव समुद्रः पुरुषोऽयनमात्मभावगमनं यासां कलानां ताः पुरुषायणाः पुरुषं प्राप्य पुरुषात्मभावमुपगम्य तथैवास्तं गच्छन्ति। भिद्येते चाऽऽसां नामरूपे कलानां प्राणाद्याख्या रूपं च यथास्वम्। भेदे च नामरूपयोर्यदनष्टं तत्त्वं पुरुष इत्येवं प्रोच्यते ब्रह्मविद्भिः। य एवं विद्वान्गुरुणा प्रदर्शितकलाप्रलयमार्गः स एष विद्यया प्रविलापितास्वविद्याकामकर्मजनितासु प्राणादिकलास्वकलोऽविद्याकृतकलानिमित्तो हि मृत्युस्तदपगमेऽकलत्वादेवामृतो भवति, तदेतस्मिन्नर्थ एष श्लोकः ॥ ५ ॥

ग्रामादिवच्छब्देन गन्तव्यत्वभ्रमं वारयति—आत्मभाव इति। अस्तशब्देन नाशो नाभिधीयते भेदकोपाधिनामरूपयोर्नाशेऽपि स्वरूपस्य समुद्रात्मना विद्यमानत्वादित्याह—नामरूपतिरस्कारमिति। पूर्वरूपतिरस्कारमित्यर्थः। तद्वस्त्विति। नामरूपनाशानन्तरं परिशिष्टमुदकलक्षणं वस्तु समुद्र इत्येवोच्यत इत्यन्वयः। पुरुषस्येति कर्मणि षष्ठी। पुरुषं स्वात्मरूपम्। परितः सर्वं स्वरूपत्वेन पश्यत इत्यर्थः। द्रष्टुरित्युक्त आगन्तुकस्य दर्शनस्य कर्ता प्रतीयत इत्यत आह—दर्शनस्य कर्तुः स्वरूपभूतस्येति। स्वरूपत्वे दर्शनस्य तत्र कर्तृत्वानुपपत्तेस्तदर्थकतृच्प्रत्ययविरोध इत्याशङ्क्यार्कः सर्वतः स्वप्रकाशक इत्यत्र यथा कर्त्रर्थकस्य प्रत्ययस्योपचारितत्वं तद्वदिहापीत्याह—यथाऽर्क इति। नदीनामिवेति। इवशब्दस्तथाशब्दार्थे। यथा नदीनां समुद्रोऽयनं तथा पुरुषोऽयनमित्यन्वयः। अस्तगमनस्वरूपमाह—भिद्येते इति। नामरूपभेद एवास्तगमनमिहेत्यर्थः। यथास्वमिति। यस्य यत्स्वरूपं प्राणाद्यात्मकं तदपि

---

१ क. ख. छ. °ते तासां। २ क. ख. छ. °ते तासां। ३ क. ख. °रूपेण प°।

भिद्यत इत्यन्वयः । पुरुष इत्येवं प्रोच्यत इत्यस्यार्थमाह—भेदे चेति । यदनष्टमिति । कलानां हि रूपमारोप्याधिष्ठानोभयात्मकं सत्यानृतमिथुनरूपं, तत्राऽऽरोप्यस्य नामरूपात्मकस्य भेदेऽधिष्ठानात्मकं रूपं पुरुषात्मनोच्यत इत्यर्थः । यथा समुद्रस्वरूपभूतं जलं मेघैराकृष्याभिवृष्टं गङ्गादिनामरूपोपाधिना समुद्राद्भिन्नमिव व्यवह्रियमाणं तदुपाधिविगमे समुद्रस्वरूपमेव प्रतिपद्यत एवमविद्याकृतनामरूपोपाधिवशादात्मनो भिन्नमिव स्थितं सर्वं जगद्विद्ययाऽविद्याकृतनामरूपविगमे ब्रह्ममात्रतयाऽवशिष्यत इत्यर्थः । एवं प्राणादिकलोपाधिक आत्मन उत्क्रमणादिशब्दितमरणादिव्यवहार इत्युक्तेः प्रयोजनं प्राणादिनिवृत्तावुत्क्रमणादिसर्वसंसारधर्मरहितात्मस्वरूपावस्थानरूपं दर्शयितुं स एष इति वाक्यं व्याचष्टे—य एवं विद्वानित्यादिना ॥ ५ ॥

अरा इव रथनाभौ कला यस्मिन्प्रतिष्ठिताः । तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥

अरा रथचक्रपरिवारा[1] इव रथनाभौ रथचक्रस्य नाभौ यथाप्रवेशितास्तदाश्रया भवन्ति यथा तथेत्यर्थः । कलाः प्राणाद्या यस्मिन्पुरुषे प्रतिष्ठिता उत्पत्तिस्थितिलयकालेषु तं पुरुषं कलानामात्मभूतं वेद्यं वेदनीयं पूर्णत्वात्पुरुषं पुरि शयनाद्वा वेद जानीयात् । यथा हे शिष्या मा वो युष्मान्मृत्युः परिव्यथा मा परिव्यथयतु । न चेद्विज्ञायेत पुरुषो मृत्युनिमित्तां व्यथामापन्ना दुःखिन एव यूयं स्थ । अतस्तन्मा भूद्युष्माकमित्यभिप्रायः ॥ ६ ॥

---

परिवारा इति । नाभेः परितो नाभौ नेम्यां च प्रोतास्तिर्यक्काष्ठविशेषा इत्यर्थः । यथाप्रवेशिता इति । यथावत्सम्यक्प्रवेशिता इत्यर्थः । माङोऽर्थं व्यतिरेकप्रदर्शनेन स्पष्टयति—न चेदिति ॥ ६ ॥

तान्होवाचैतावदेवाहमेतत्परं ब्रह्म वेद । नातः परमस्तीति ॥ ७ ॥

तानेवमनुशिष्य शिष्यांस्तान्होवाच पिप्पलादः किलैतावदेव वेद्यं परं ब्रह्म वेद विजानाम्यहमेतत् । नातोऽस्मात्परमस्ति प्रकृष्टतरं वेदितव्यमित्येवमुक्तवाञ्शिष्याणामविदितशेषास्तित्वाशङ्कानिवृत्तये कृतार्थबुद्धिजननार्थं च ॥ ७ ॥

---

१ ग. ॰रिवारा । २ ग. ॰रिवारा ।

शिष्याणां कृतार्थतावुद्धिजननार्थं तानित्यादि वाक्यं व्याचष्टे—तानेवमिति ॥७॥

ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ॥

इत्यथर्ववेदीयप्रश्नोपनिषदि षष्ठः प्रश्नः ॥ ६ ॥

इत्यथर्ववेदीया प्रश्नोपनिषत्समाप्ता ॥

ततस्ते शिष्या गुरुणाऽनुशिष्टास्तं गुरुं कृतार्थाः सन्तो विद्यानिष्क्रयमपश्यन्तः किं कृतवन्त इत्युच्यते—अर्चयन्तः पूजयन्तः पादयोः पुष्पाञ्जलिप्रकिरणेन प्रणिपातेन च शिरसा, किम्, ऊचुरित्याह—त्वं हि नोऽस्माकं पिता ब्रह्मशरीरस्य विद्यया जनयितृत्वान्नित्यस्याजरामरस्याभयस्य । यस्त्वमेवास्माकमविद्याया विपरीतज्ञानाज्जन्मजरामरणरोगदुःखादिग्राहादविद्यामहोदधेर्विद्याप्लवेन परमपुनरावृत्तिलक्षणं मोक्षाख्यं महोदधेरिव पारं तारयस्यस्मानित्यतः पितृत्वं तवास्मान्प्रत्युपपन्नमितरस्मात् । इतरोऽपि हि पिता शरीरमात्रं जनयति तथाऽपि स पूज्यतमो लोके किमु वक्तव्यमात्यन्तिकाभयदातुरित्यभिप्रायः । नमः परमऋषिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो नमः परमऋषिभ्य इति द्विर्वचनमादरार्थम् ॥ ८ ॥

इति प्रश्नोपनिषदि षष्ठः प्रश्नः ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्कृतं प्रश्नोपनिषद्भाष्यं समाप्तिमगमत् ॥

प्रकिरणेनेति । प्रक्षेपेणेत्यर्थः । अतः पितृत्वं तवेति ।

"जनकश्चोपनेता च यश्च विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः" ॥

इति स्मृतेरित्यर्थः । योऽस्माकमिति हेतूक्तेस्तात्पर्यं वदन्पितृत्वोक्तिमात्रेण विद्यानिष्क्रयार्थं किं दत्तमित्यपेक्षायां स्वशरीरमेव परिचारकतया दासभावेन गुरवे दत्तमित्याह—

१ क. 'पि संप्र' । २ क. ख. ग. घ. ङ. च. दाससमा' ।

इतरस्मादिति । पितृत्वादेव किं पूज्यतरत्वं(?) परिचार्यत्वं स्वामित्वं(?) किमु वक्तव्यमित्यर्थः । अत एव वाजसनेयके मां चापि सह दास्यायेतीत्युक्तमिति भावः ॥ ८ ॥

इत्यानन्दज्ञानविरचितप्रश्नोपनिषद्भाष्यटीकायां षष्ठः प्रश्नः ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य[1]श्रीमदानन्दज्ञानविरचिताऽऽथर्वणप्रश्नोपनिषद्भाष्यटीका समाप्ता ॥

## इति सटीकभाष्योपेता प्रश्नोपनिषत्समाप्ता ।

---

१ ख. ग. घ. ङ. च °मत्कैवल्येन्द्रशिष्यज्ञानेन्द्रगुरुचरणसेविनारामचन्द्रसरस्वतीविरचितं प्रश्नोपनिषद्भाष्यविवरणं समाप्तम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

# अथ शंकरानन्दविरचितप्रश्नोपनिषद्दीपिकाप्रारम्भः ।

प्रश्नमुण्डकमन्त्राणां ब्राह्मणं कोऽहमीदृशम् ॥
इत्यादिप्रश्नतात्पर्यं व्याख्यास्ये ब्रह्मबोधकम् ॥ १ ॥

प्रथमतो ब्रह्मविद्यास्तुत्यर्थमाख्यायिकामवतारयति—**सुकेशा [च]** नामतो **भारद्वाजो** भरद्वाजस्यापत्यं **शैब्यश्च** शिबेरपत्यं **सत्यकामः** सत्ये ब्रह्मणि कामो यस्य स सत्यकामो यथार्थकामः । **सौर्यायणी च** सूर्यस्यापत्यं सौर्यायणिः, ईकारश्छान्दसः । **गार्ग्यो** गर्गगोत्रः । **कौशल्यश्च** कौशल्यो नामतः । **आश्वलायन** आश्वलस्यापत्यमाश्वलायनः । चकारचतुष्टयमुक्तानां सुकेशादीनां वक्ष्यमाणद्वयोः पिप्पलादं प्रति प्रश्नसमुच्चयार्थम् । **भार्गवो** भृगुगोत्रो भृगोरपत्यं वा । **वैदर्भिर्विदर्भदेशोद्भवः** । **कबन्धी** कबन्धी नाम **कात्यायनः** कत्य(त:)स्यापत्यं कात्यस्तस्य युवापत्यं कात्यायनस्ते प्रसिद्धा **महाशालाः** महाश्रोत्रियाः षट् । **ह** किलैत उक्ताः सुकेशसत्यकामसौर्यायणी(णि)कौशल्यमार्गवकबन्धिनः । **ब्रह्मपरा** वेदपरा वेदैकशरणा इत्यर्थः । **ब्रह्मनिष्ठा** वेदार्थतात्पर्यवन्तः । **परमुत्कृष्टं** निरुपचरितमित्यर्थः । **ब्रह्म** देशकालवस्तुपरिच्छेदशून्यमन्वे**षमाणाः** कीदृशं तदिति बुभुत्सां कुर्वाणा एवं प्रतिपन्नाः ॥ तत्प्रतिपत्तिप्रकारमाह—**एषोऽस्मद्बुद्धौ** वाचि च वर्तमानः पिप्पलादो **ह** किल **वै** स्मर्यमाणस्तदस्मद्बुद्धिस्थं **सर्वमस्माभिर्बुभुत्सितं** निखिलं पृष्टं **वक्ष्यति** कथयिष्यति । इत्यनेन प्रकारेण पर्यालोच्य **त उक्ताः** सुकेशादयो **ह** किल **समित्पाणयो** गुरूपगमनार्थं समिधः पाणौ येषां ते **समित्पाणयो भगवन्तं** पूजावन्तं **पिप्पलादं** पिप्पलादनामानमुपसन्नाः शास्त्रदृष्टेन विधिना समीपं प्राप्ताः ॥ १ ॥

तान्संप्रति समागतान्प्रश्नकर्तॄन्ह किल **स** पिप्पलाद **ऋषिरतीन्द्रियार्थस्य द्रष्टो-वाचोक्तवान्** । **भूय एव** यद्यपि पूर्वं भवन्तस्तपआदिभिः संपन्नास्तथाऽपि ब्रह्मविद्याग्रहणार्थं पुनरेव । **तपसा** शरीरशोषणादिना । **ब्रह्मचर्येण** योषित्स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणसंकल्पाध्यवसायक्रियानिर्वृत्तिवर्जनरूपेण । **श्रद्धया** वेदार्थास्तिक्यबुद्ध्या । **संवत्सरं** द्वादशसौरसंक्रान्तिकालमुक्तैः साधनैः संपन्नाः सन्तः । **संवत्स्यथ** सम्यग्वासं कारिष्यथ सम्यग्वासं कुर्वन्त्वित्यर्थः । ततो **यथाकामं** काममनतिक्रम्य स्वेच्छानुसारेणेत्यर्थः । **प्रश्नान्प्रष्टव्यार्थान्पृच्छत** प्रश्नानुद्दिश्य वाचं विसृजत ॥ इदानीं स्वस्य गर्वपरिहारार्थ-

* पृच्छथेति क्वचिन्मूले पाठः ।

१ ख. 'नानार्थ ।

माह—एवं पृष्टे भवद्भिर्यदि पक्षान्तरे भवदुक्ते ज्ञानाभावे मौनं करिष्याम इत्येकः पक्षः॥ द्वितीयं पक्षमाह—विज्ञास्यामोऽथ चोक्तविज्ञानवन्तो भविष्यामः। सर्वं निखिलं ह प्रसिद्धं वो युष्मभ्यं वक्ष्यामः कथयिष्यामः। इत्यनेन प्रकारेण॥ २॥

अथ तपोब्रह्मचर्यश्रद्धासंपत्त्या संवत्सरनिवासानन्तरं प्रश्नं कर्तुं भृशमुत्सुकः स्वैरनुज्ञातः कबन्धी कात्यायनः, व्याख्यातम्। उपेत्य पिप्पलादस्य समीपं शास्त्रोक्तमार्गेण समागत्य। पप्रच्छ प्रश्नं कृतवान्। भगवन्हे पूजावन्पिप्पलाद। कुतः कस्मादुपादानान्निमित्ताच्च कारणाद्ध प्रसिद्धाद्वै स्मर्यमाणादिमा विविधशब्दप्रत्ययगम्याः। प्रजाः स्थावरजङ्गमाः प्राणिनः। प्रजायन्त उत्पद्यन्ते। इत्यनेन प्रकारेण॥३॥

तस्मा एवं पृष्टवते कात्यायनाय। स पिप्पलादो ह किलोवाचोक्तवान्॥ तदुक्तिमाह—प्रजाकामः प्रजासु कामो यस्य स प्रजाकामो वै प्रसिद्धः स्मर्यमाणो वा प्रजापतिः प्रजानां पालयिता हिरण्यगर्भो जन्मान्तरानुष्ठितापराविद्याकर्मसमुच्चयः। स परमात्मनो भेदरहितः प्रजापतिस्तपः स्रष्टव्यविषयं पर्यालोचनमतप्यत* कृतवान्। स तपसा विज्ञातनिमित्तोपादान आत्मोपादानमात्मनिमित्तं च मिथुनं युग्ममुत्पादयते सर्गे सर्गे जनयति॥ मिथुनमाह—रयिं च चन्द्रमसं सर्वान्नभूतमप्प्रधानं प्राणं चाऽऽदित्यमत्तारमग्निप्रधानम्। चकारौ परिणामयोर्मिथुनत्वसमुच्चयार्थौ। इत्यनेन वक्ष्यमाणेनाभिप्रायेणोत्पादयत इत्यन्वयः॥ तदभिप्रायमाह—एतौ रयिप्राणौ मे मम प्रजापतेर्बहुधाऽनेकप्रकाराः प्रजाः स्थावरजङ्गमाः प्राणिनः। करिष्यत उत्पादयिष्यत इति यस्मात्तस्मात्स्रक्ष्यामीति शेषः। अथवाऽऽद्य इतिकार एवकारार्थः। अयं त्वभिप्रायार्थः॥ ४॥

इदानीं प्राणरयिशब्दयोरर्थमाह—आदित्यश्चन्द्रकिरणमण्डलात्मा ह प्रसिद्धो वै स्मर्यमाणः। प्राणः प्राणशब्दाभिधेयः। रयिरेव चन्द्रमाः [स्पष्टम्]॥ रयिशब्दाभिधेयस्य चन्द्रमसोऽन्नरूपस्य सार्वात्म्यमाह—रयिश्चन्द्रमा वै प्रसिद्ध एतत्परिदृश्यमानं सर्वं निखिलम्॥ सर्वशब्दार्थमाह—यत्प्रसिद्धं मूर्तं च तेजोबन्नरूपममूर्तं च वाय्वाकाशरूपमपि। चकारौ मूर्तामूर्तयोर्मिलितयोः प्रत्येकं च रयिस्वरूपत्वसमुच्चयार्थौ। यस्मान्मूर्तामूर्तात्मके जगति मूर्तेराधिक्यं तस्मात्ततो मूर्तिरेव रयिश्चन्द्रमास्तेजोबन्नरूप एव न त्वन्यः। अथवा मूर्तिः स्थूलमद्यमानं रयिरेव न तु प्राणः। अमूर्तिः सूक्ष्मं प्राणस्यापि स्वरूपमिति व्याख्येयम्॥ ५॥

ननु तर्हि किं रयेर्न्यूनवृत्तिः प्राण इत्याशङ्क्य तस्यापि सार्वात्म्यमाह—अथ हेतौ, आदित्य उक्त उदयन्नूर्ध्वमागच्छन्दिवसे दिवसे प्रातः प्रातो यद्यस्मात्प्राचीं दिशं प्रविशति, स्पष्टम्। तेन प्राचीदिक्प्रवेशेन स्वैः किरणैः। प्राच्यान्प्राचीदिग्गता-

---

* एतदग्रे मूले स तपस्तप्त्वेति पदत्रयमधिकमुपलभ्यते।

न्प्राणान्प्राणचक्षुरादीन्रश्मिषु किरणेषु। संनिधत्ते संबद्धान्कुरुते किरणैर्व्याप्नोतीत्यर्थः। यद्यस्मात्स्वैः किरणैर्दक्षिणां स्पष्टं दिशं प्रविशति तेन दाक्षिणात्यान्प्राणान्रश्मिषु संनिधत्त इति शेषः। यद्यस्मात्प्रतीचीं स्पष्टं दिशं प्रविशति तेन पाश्चात्यान्प्राणान्रश्मिषु संनिधत्त इति शेषः। यद्यस्मादुदीचीं स्पष्टं दिशं प्रविशति तेनोत्तरान्प्राणान्रश्मिषु संनिधत्त इति शेषः। यद्यस्मादधोऽधोवर्तिनीं दिशं प्रविशति तेनाधोदिग्भवान्प्राणान्रश्मिषु संनिधत्त इति शेषः। यद्यस्मादूर्ध्वमूर्ध्ववर्तिनीं दिशं प्रविशति तेनोर्ध्वदिग्भवान्प्राणान्रश्मिषु संनिधत्त इति शेषः। यद्यस्मादन्तरा मध्ये दिशो दिशामन्तरादिश इत्यवान्तरदिशो वा प्रविशति तेनान्तरादिग्भवान्प्राणान्रश्मिषु संनिधत्त इति शेषः। यद्यस्मात्सर्वं निखिलं दिग्जातं स्वैः किरणैः प्रकाशयति स्वतेजसोऽनुग्रहेण नयनगोचरत्वयोग्यं कारयति। तेन सर्वप्रकाशनेन सर्वानखिलदिग्भवानविशेषेण प्राणांश्चक्षुरादीन्रश्मिषु संनिधत्ते व्याख्यातम्। आद्यन्तयोः समप्रवाक्यस्य पाठो मध्येऽपठितस्यापि पाठार्थमवगन्तव्यः॥ ६॥

स परोक्ष एष प्रत्यक्षः किरणैः सर्वदिग्व्यापी। वैश्वानरो विश्वे नरा यस्य स विश्वनरः, विश्वश्चासौ नर इति वा। विश्वनर एव वैश्वानरः॥ वैश्वानरत्वे हेतुमाह— विश्वरूपः सर्वरूपः सर्वात्मेत्यर्थः। प्राण आदित्योऽग्निर्दाहपाचकप्रकाशहेतुरस्तोदयत ऊर्ध्वमागच्छति। तदादित्यस्य सार्वात्म्यमेतद्ब्राह्मणोक्तमृचा पादबद्धेन मन्त्रेणाभ्युक्तं सर्वैः कथितम्॥ ७॥

विश्वरूपं सर्वरूपं हरिणं हरणशीलं सर्वोपसंहारकारणं जातवेदसं जातानि वेदांसि विज्ञानानि सर्वविषयाणि यस्मात्स जातवेदास्तं जातवेदसं सर्वस्थितिसंहारोत्पत्तिकारणमिति वाक्यार्थः। परायणमुत्कृष्टाश्रयभूतं विश्वरूपत्वं तु स्थितौ संहार उत्पत्तौ च समानं परायणत्वं तु स्थितावेव विशेष इति न पुनरुक्तम्। ज्योतिस्तेजोमण्डलरूपमेकं विश्वस्य सृष्टिस्थितिसंहारकर्तृत्रिधात्मकमपि भेदशून्यं तपन्तमन्तर्बहिस्तापं कुर्वन्तं जातास्यहमिति शेषः॥ स्वज्ञानमेवाविर्दर्शयति—सहस्ररश्मिरनन्तकिरणः शतधा वर्तमानोऽनन्तप्रकारेण वर्तमानः प्राणः प्रजानां स्थावरजङ्गमानां सर्वव्यवहारनिर्वाहकारणमन्तर्जन्मनि जन्मनि बहिर्दिवसे दिवसे प्रातरुदयति, ऊर्ध्वं गच्छति। एष प्रत्यक्षः सूर्यः शोभनाया गतेः कर्ता सविता। एवं रयिप्राणौ सर्वात्मानौ मिथुनमित्युक्तम्॥ ८॥

अग्नीषोमात्मकस्य मिथुनस्य रूपान्तरं कालरूपं दर्शयति—प्रजोत्पादं विवक्षुः संवत्सरो व्याख्यातः। अत्र प्रथमान्तत्वं विशेषः। वै प्रसिद्धः। प्रजापती रयिप्राणावस्थो हिरण्यगर्भस्तस्य संवत्सरात्मन आदित्यचन्द्रनिष्पाद्यस्यायने भवत इति शेषः॥ ते आह— दक्षिणं च मासषट्कं दक्षिणायनमपि, उत्तरं च तावन्तं कालमुत्तरायणमपि। चकारौ द्वाभ्यां समुच्चिताभ्यां संवत्सरस्वरूपनिष्पत्तिसमुच्चयार्थौ॥ दक्षिणोत्तरप्रसङ्गेन दक्षिणो-

त्तरगती संवत्सरसाध्ये आह—**तत्त**त्राधिकारिषु त्रैवर्णिकेषु **ये** स्वर्गाभिलाषिणो **ह** प्रसिद्धा **वै** स्मर्यमाणास्तत्प्रसिद्धं कर्म ॥ प्रसिद्ध[त्व]मेवोपपादयति—**इष्टापूर्ते कृत**-**मिति** यस्मात्कृतं प्रयत्ननिष्पादितं ततस्तादिष्टापूर्ते इष्टं यागादि श्रौतं कर्मेत्यर्थः । पूर्तं कूपारामादिकरणं स्मार्तं कर्मेत्यर्थः । इष्टं च पूर्तं चेष्टापूर्ते । **उपासत** उपासनं कुर्वते फलकामास्तात्पर्येण तदेवानुतिष्ठन्तीत्यर्थः । **त** इष्टापूर्तोपासकाश्चान्द्रमसमेव चन्द्रमसि भवं न त्वन्यं **लोक**मिष्टापूर्तफलम**भिजयन्ते**ऽभिजयन्ति सर्वतः प्राप्नुवन्ति । **त एव** चान्द्रमसं प्राप्ता एव न त्वन्ये **पुनरावर्तन्ते** स्वकृतकर्मानुसारेण ब्राह्मणादियोनिं भूय आगच्छन्ति । यस्मात्त एव पुनरावर्तन्ते **तस्मात्तत एते** कर्मिण **ऋषयः** स्वर्गद्रष्टारः **प्रजाकामाः** प्रजासु कामो येषां ते प्रजाकामा **दक्षिणं** धूमादिमार्गं चन्द्रलोकप्राप्तिफलं **प्रतिपद्यन्ते** प्राप्नुवन्ति ॥ अस्तु तेषां तत्प्राप्तिः किं प्रस्तुत इत्यत आह—**एष** दक्षि-णमार्गप्राप्यश्चन्द्रलोको [ह] वै प्रसिद्धः सर्वान्नभूतो बुद्धिमज्ज्ञेयो **रयी** रयिशब्दाभि-धेयः प्रकृतिभागो **यः** प्रसिद्धः **पितृयाणो** धूमादिमार्गः ॥ ९ ॥

**अथ** प्रजाकामव्यतिरिक्तः प्राप्यः प्रकृतादन्य **उत्तरेणा**र्चिरादिमार्गेण । **तपसा ब्रह्मचर्येण श्रद्धया** व्याख्यातम् । **विद्यया** प्रजापत्याद्युपासनरूपयाऽऽत्मा**न**मादित्यं स्थावरजङ्गमप्राणम**न्विष्या**ऽऽचार्योपदेशानन्तरं प्रत्ययसंतानेनाहमस्मीति संप्राप्य । विद्ययेत्यस्य व्याख्यानमिदमवगन्तव्यम् । **आदित्यं** बाह्यं प्राणम**भिजयन्ति**(न्ते) सर्वतः प्राप्नुवन्ति । **एत**दादित्यस्वरूपं **वै** स्मर्यमाणं प्रसिद्धं वा, शास्त्रतः । **प्राणानां** प्राणश-ब्दाभिधेयानां प्राणचक्षुरादीना**मायतन**माश्रयभूतमेतत्प्राणानामायतन**ममृत**मविद्यादिका-रणवर्जित**मभय**मावृत्तिदुःखभयरहितमेतदमृतमभयं **परायणं** परेषामश्वमेधादिफलानां ससाधनानामाश्रयभूतमेतस्मात्प्राणायतनादमृतादभयात्पराश्रयात्**न पुनरावर्तन्ते** । यथा चन्द्रमसस्तद्वद्भूयो नाऽऽवर्तन्ते । इत्यनेन प्रकारेणोक्त इति शेषः । **एष** संवत्सरात्म-प्राणप्राप्तिरूपो **निरोधो** विनाशो मोक्ष इत्यर्थः । तत्तस्मिन्संवत्सरात्मन्युत्तरायणदक्षि-णायनसाम्येनोत्तरदक्षिणमार्गव्यापिन्येष वक्ष्यमाणः **श्लोको** मन्त्रः ॥ १० ॥

**पञ्चपादं** संवत्सरपरिवत्सरे[१]दावत्सरानुवत्सरवत्स(त्सरेद्वत्स)राः कालाग्न्यादित्यच-न्द्रमोवायुरूपाः पञ्च पादा यस्य स पञ्चपादस्तं **पितरं** सर्वस्य जनकं **द्वादशाकृतिं** द्वादशमासाकारं **दिव आहुः परे अर्धे पुरीषिणं** दिवः स्वर्गात्परे परस्मिन्नर्धे स्थाने पुरीषिणं पुरीषशब्दं सुवर्णभूमिसंनिहितं ब्रह्माण्डगोलकावरणं यस्य स पुरीषी तं पुरी-षिणमाहुः कथयन्ति । अथवा पञ्च शरदृतुवर्जिताः पादा यस्येति व्याख्येयम् । **अथ** पक्षान्तर **इमे** कालचक्रविदोऽन्ये पूर्वेभ्यो व्यतिरिक्ता **उ परे,** उ अपि परेऽन्य इत्यस्य व्याख्या । त उक्तव्यतिरिक्ता उत्कृष्टा वा **विचक्षणं** कुशलं सर्वोपद्रवशून्य-

---

१ ख. 'रेदाव' ।

मित्यर्थः । सप्तचक्रे सप्त गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्तिर्बृहती ककुबिति च्छन्दांसि परस्मिंश्चक्रे नेतृत्वेन संबद्धानि तत्सप्तचक्रं तस्मिन् । अथवा वर्णव्यत्यासात्सर्पचक्रे गमनवति चक्र इत्यर्थः । षडरे षडृतुरूपा अरा यस्य तत्षडरं तस्मिन्नाहुः कथयन्ति पर इत्यन्वयः । अर्पितं सचराचरं जगदर्पितं नानाविचाराः(?) । इति मन्त्रसमाप्तौ ॥ ११ ॥

यथा संवत्सरो रयिप्राणात्मकस्तथा मासोऽपीत्याहोपासनार्थम् । मासः पक्षद्वयात्मकः । वै प्रसिद्धः । प्रजापती रयिप्राणाभिन्नो हिरण्यगर्भस्तस्य मासस्य । कृष्णपक्ष एव चन्द्रक्षयपक्ष एव न त्वन्यो रयिश्चन्द्रमाः । शुक्लश्चन्द्रवृद्धिपक्षः । प्राण आदित्यो यस्माच्छुक्लः प्राणस्तस्मात्त एत ऋषयः प्रसिद्धाः प्राणव्यतिरिक्तानवलोकिनः कृष्णपक्षेऽपि कुर्वन्तः । शुक्ल इष्टं कुर्वन्तीष्टमिष्टापूर्तादिकं शुक्ले पक्षे कुर्वन्ति कृष्णपक्षस्येतरदर्शनादित्यर्थः । इतरे प्राणव्यतिरिक्तदर्शिनः शुक्ले पक्षेऽपि कुर्वन्त इष्टापूर्तादिकमितरस्मिन्कृष्णपक्षे कुर्वन्तीत्यनुषङ्गः ॥ १२ ॥

अहोरात्रस्त्रिंशन्मुहूर्तात्मको मनुष्यपितृदेवब्रह्मभेदभिन्नः । वै प्रजापतिर्व्याख्यातम् । तस्याहोरात्रस्याहरेवाऽऽदित्यस्योदयादास्तमयं काल एव प्राण आदित्यो रात्रिरेवाऽऽदित्यास्तमयादोदयं काल एव रयिश्चन्द्रमाः ॥ प्रसङ्गाद्दिवसे मैथुनं निषेधति—प्राणमादित्यं सर्वजीवनकारणं वै प्रसिद्धमेते दिवामैथुनरताः स्वोपकारिणं प्रस्कन्दन्ति प्रकर्षेण शोषयन्ति घ्नन्तीत्यर्थः । ये प्रसिद्धाः कामुका दिवा दिवसे रत्या युवतिजनसंभोगरूपिण्या । संयुज्यन्ते सम्यक्संबध्यन्ते ग्राम्यधर्मेण योषिता सह संबध्यन्त इत्यर्थः ॥ ननु तर्हि किं स्वयोषित्सु गमनं गृहस्थैर्न करणीयमित्याशङ्क्य रात्रौ तत्करणीयमित्येतद्वक्तुं रात्रिगमनं स्तौति—ब्रह्मचर्यमेव मैथुनाभावरूपमेव न तु मैथुनं तत्परोक्षं वक्ष्यमाणं यत्प्रसिद्धं गृहस्थानां मैथुनं रात्रौ क्रियमाणम् ॥ तदेतदाह—रात्रौ रत्या संयुज्यन्ते स्पष्टम् ॥ १३ ॥

इदानीं प्रजोत्पत्तिप्रकारं वक्तुं रेतो मैथुनं च स्तौति—अन्नमदनीयं वै प्रसिद्धं सर्वप्राणिनां प्रजापतिः कालात्मा रयिप्राणात्मकः । ततस्तस्मादन्नादद्यमानाद्ध प्रसिद्धं वै स्मर्यमाणं सर्वजगदुत्पादकत्वेन तत्प्राणरूपं सर्वजगद्बीजमन्नकार्यं रेतः स्त्रीपुंसयोर्वीर्यम् । तस्माद्रेतस इमाः प्रजाः प्रजायन्ते व्याख्यातम् । इत्यनेन रेतोवस्थावच्छिन्नेनाऽऽत्मोपादानेन चन्द्रादित्यसंवत्सरमासाहोरात्रमैथुनावस्थात्मनिमित्तेन प्रकारेणेमाः प्रजाः प्रजायन्त इत्यन्वयः ॥ १४ ॥

एवं प्रश्ननिर्णयं कृत्वा प्रसङ्गान्मैथुनब्रह्मचर्ययोर्विभागेन फलमाह—तद्ये ह संसारमण्डले । ये प्रसिद्धाः कामज्वरापहृतचित्तसर्वस्वा ह प्रसिद्धा वै स्मर्यमाणं तत्परोक्षं प्रजापतिव्रतं प्रजापतिना मनुना स्वार्थभूतायाः शतरूपायाः योषितोऽथोपहासवत्स्वयो-

विद्धोपहासं प्रजापतिव्रतं **चरन्त्या**चरन्तीत्यनुतिष्ठन्तीत्यर्थः । **ते** प्रजापतिव्रतचारिणो **मिथुनं** नारीपुरुषं नपुंसकं नोभयं वा त्रयं **वोत्पादयन्ते** जनयन्ति इष्टफलमिदम् ॥ इदानीमदृष्टफलमाह—**तेषामेव** प्रजापतिव्रतचारिणां न त्वन्येषामेष दक्षिणमार्गप्राप्यो **ब्रह्मलोको** ब्रह्मणः प्रजापते रयिरूपस्य चन्द्रमसो लोकः ॥ इदानीं ब्रह्मचर्ये फलमाह— **येषा**मर्चिरादिमार्गयायिनां तपो मनस इन्द्रियाणां चैकाग्र्यादि । **ब्रह्मचर्य**मुक्तम् । **येषु** निवृत्तिमार्गनिरतेषु **सत्यं** प्रियहितयथार्थभाषणं **प्रतिष्ठितं** प्रतिष्ठां प्राप्तं ये प्रमादेनाप्यसत्यं न वदन्तीत्यर्थः ॥ १९ ॥

**तेषां** तपोब्रह्मचर्यसत्यनिरतानामसौ परोक्ष आदित्यमार्गप्राप्यो **विरजो** विरजाश्चन्द्रलोकवत्क्षयिष्णुत्वादिदोषदूषितो न **ब्रह्मलोकः** कार्यब्रह्मलोकः ॥ इदानीं तपोब्रह्मचर्यसत्यवचनादीनां सद्भावेऽपि जैह्म्यादिसद्भावे न ब्रह्मलोक इत्यनुमतमर्थमाह—**न येषु** तपोब्रह्मचर्यसत्यसंपन्नेषु । **जिह्मं** कौटिल्यं स्वेन नोच्यमानमपि परैर्ज्ञायमानं न येष्वित्यन्वयः । **अनृतं** पण्डितमान्यत्वेन न विपरीतं वाक्यं सत्यवादिन एव न येष्वित्यनुषङ्गः । **न माया च** कार्यमन्तरेण परैरज्ञायमानं कौटिल्यं माया न येष्वनुवर्तते । चकाराद्धिंसास्तेयादिकमपि नेत्यवगन्तव्यम् । [ इत्यनेन प्रकारेण ] ॥ १६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरानन्दयतीन्द्रविरचितायामाथर्वणप्रश्नोपनिषद्दीपिकायां प्रथमः प्रश्नः ॥ १ ॥

---

## अथ द्वितीयः प्रश्नः ।

---

**अथ** कात्यायनप्रश्नानन्तरं पूर्ववदुत्सुको ह किलैनं पिप्पलादम् । **भार्गवो वैदर्भिः पप्रच्छ भगवन्**, व्याख्यातम् । **कत्येव** कियत्संख्यादिका एव निर्धारिता **देवा** देवशब्दाभिधेयाः । **प्रजां** स्थावरजङ्गमभूतरूपां **विधारयन्ते** विधारणं कुर्वन्ति । **कतर** एतेषु **देवेष्वदेवेषु** वा **कतर एतच्छरीरं** संसारयात्रानिर्वाहकं **प्रकाशयन्ते** प्रकाशं कुर्वन्ति । **कः पुनरेषां वरिष्ठ** एषां देवानां को नाम श्रेष्ठः । **इत्यनेन** प्रकारेण पप्रच्छेत्यन्वयः ॥ १ ॥

**तस्मै** भार्गवाय । **स होवाच** व्याख्यातम् ॥ प्रथमप्रश्नस्योत्तरं प्राण एव शरीरस्य विधारकः । द्वितीयतृतीययोश्चार्थादग्न्यादिरूपेण स एव प्रकाशको वरिष्ठश्चेति वक्तुं भूतेन्द्रियप्राणसंवादरूपामाख्यायिकामवतारयति—**आकाशो** भूताकाशो **ह** किल **वै** प्रसिद्ध **एष** प्रसारितनयनप्रत्यक्षः साक्षिप्रत्यक्षो वा **देवो** देवशब्दाभिधेयोऽन्यविजिगीषुत्वेन, **वायुरग्निरापः पृथिवी** स्पष्टम् । **वाग्वा**गिन्द्रियमुपलक्षणमेतत्पाणिपादपायूपस्थानाम् ।

मनोऽन्तःकरणं ज्ञानशक्ति चतुर्विधं मनःशब्दोपलक्षितं चक्षुः श्रोत्रं च स्पष्टं चकारात्त्वग्घ्राणरसनानि, ते पञ्चमहाभूतज्ञानेन्द्रियकर्मेन्द्रियचतुर्विधान्तःकरणरूपा मुख्यप्राणसंनिधिप्राप्तसामर्थ्यान्मुख्यप्राणप्रमादमजानन्तः(न्तः)। प्रकाश्येदं शरीरमवकाशादिव्यवहारक्षमत्वेन सर्वस्य लोकस्य दर्शयित्वाऽभिवदन्ति स्वव्यतिरिक्तान्सर्वान्सर्वतस्तिरस्कृत्य प्रत्येकं स्वात्मनि बहुवचनप्रयोगेणावकाशाद्यैकैककार्यक्षमा अपि सजीवनमवकाशादिसर्वकार्यक्षमत्वं स्वात्मन्यारोप्य वदन्ति वल्गन्ति॥ तद्वदनमाह—वयमाकाशादय एतत्सर्वप्राणिप्रत्यक्षं बाणं बाणवत्कर्मणा प्रापितं बाणमथवा बवयोरैक्याद्वाति कुत्सितं गन्धं वहन्व(द्व)णति शब्दं करोति गच्छति वा कर्मक्षये सति सत्यपि कर्मणि देशाद्देशान्तरं चेति वा वणं वणमेव वाणं शरीरमित्यर्थः। अवष्टभ्यावष्टम्भनं कृत्वा दृढतमं कृत्वेत्यर्थः। विधारयामो विविधावकाशादिकार्यक्षमत्वेन धारणं कुमः॥ ३॥

तानाकाशादीन्प्रत्येकं शरीरविधारणाभिमानेन वदतो वरिष्ठः सर्वेऽप्याकाशादयोऽवकाशादिकार्यकारित्वेन वरास्तत्कार्याणामपि मुख्यप्राणनिमित्तत्वान्मुख्यप्राणोऽतिशयेन [वरो वरिष्ठः] समीचीनः प्राणो मुख्यप्राणः प्राणादिपञ्चवृत्तिरुवाच हस्तसंज्ञया च निवारयन्नुक्तवान्॥ मुख्यप्राणोक्तिमाह—मा निषेधार्थः। मोहं विपरीतज्ञानमापद्यथ समन्तान्मा गच्छत॥ तत्र हेतुमाह—अहमेव मुख्यप्राण एव न त्वन्य एतदेवं स्वप्रत्यक्षं वक्ष्यमाणमात्मानं पञ्चधा प्राणापानव्यानोदानसमानैः पञ्चप्रकारैरात्मानं मुख्यप्राणस्वरूपं प्रविभज्य प्रकर्षेण स्थानक्रियानामादिभिर्विविधभेदवन्तं कृत्वैतद्बाणमवष्टभ्य व्याख्यातम्। विधारयामि विविधकार्यक्षमत्वेन जीववन्तं देहं करोमि। अयमर्थः। भवन्तोऽवकाशादिप्रातिस्विककार्यक्षमा न तु सर्वकार्यक्षमा अहं तु भवतामपि कार्ये निमित्तत्वाद्भवत्कार्यक्षमो मया क्रियमाणे जीवनादौ तु न कोऽपीति। इत्यनेन प्रकारेण। एवमुक्ते सति त आकाशादयः परस्परमुखावलोकनहास्यकरताडनादिचेष्टावन्तः प्राणोक्तेऽर्थेऽश्रद्दधाना इदमित्थमेवेत्यास्तिक्यबुद्धिशून्याः। बभूवुः स्पष्टम्॥ ३॥

अनन्तरं तेषां सदर्पपापमवलोक्य तच्छान्त्यर्थं स मुख्यप्राणोऽभिमानादात्मनः सर्वकारित्वलक्षणाद्यथावस्तुविषयादहंकारात्। ऊर्ध्वमष्टोत्तरशतमर्मस्थानानामुपरि स्थानचलनं कृतवानित्यर्थः। उत्क्रमत इवोत्क्रामतीव स्वात्मनः साक्षी, उत्क्रमणे प्रतिसमाधेयः शरीरविनाशः स्यादिति मत्वान उत्क्रमणमिव कृतवान्भूतानां सकारणानां स्वस्थानचलनेन व्याकुलत्वं कृतवानित्यर्थः। अथवाऽयमिवकारः प्रतिपत्तुः प्रतिपत्त्यैव प्राणसंवादमाह। न ह्याकाशादिदेवानां वागादयः सन्ति तेषां तदङ्गीकारे च न्यायादिविरोधात्। तस्मिन्मुख्ये प्राणेऽभिमानिन्युत्क्रामत्यूर्ध्वं गच्छति सत्यथानन्तरमितरे मुख्यप्राणादन्य आकाशादयः सर्व एव निखिला अपि पाशबद्धा विहङ्गा इव पाशस्योर्ध्वं नयना-

मुत्क्रामन्त उत्क्रामन्ति पराधीनाः सन्तः स्वस्थानेभ्यश्चलिता बभूवुः। नैकोऽप्यात्मानम-वष्टब्धवानित्यर्थः ॥ नैतत्तदा जातं किंतु सार्वकालीनमित्याह—तस्मिंश्च तस्मिन्मुख्य-प्राण एव यथोत्क्रामति सत्युत्क्रामति(न्ति) तथा सर्वदा प्रतिष्ठमाने प्रकर्षेण स्वस्वका-र्यक्षमत्वेनावस्थानं कुर्वन्ति(ति) सर्व एव प्र(प्रा)तिष्ठन्ते स्पष्टम्। तत्तत्र प्राण उत्क्रा-मत्युत्क्रामन्ति प्रतिष्ठमाने च प्रतितिष्ठन्त इत्यस्मिन्नर्थे दृष्टान्तः। यथा दृष्टान्ते, मक्षि-काः क्षुद्रा मधुकरा जीवा भ्रमरा वा मधुकरत्वसामान्यान्मधुकरराजानं मधुकरराजं मधु मध्वपूयान्तस्थं मधुररसं तत्कुर्वन्तीति मधुकरास्तेषु प्रधानभूतस्तैर्दृष्टातिशयः कश्चन जीव इत्यर्थः। तमुत्क्रामन्तं मध्वपूयं परित्यज्योर्ध्वं गच्छन्तं सर्वा एव निखिला अपि मक्षिका उत्क्रामन्त उत्क्रामन्ति तमनुगच्छन्तीत्यर्थः। तस्मिंश्च मधुकरराज एव मध्वपूये प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्ते स्पष्टम् ॥ दार्ष्टान्तिकमाह—एवं तथा वाङ्मनश्चक्षुः श्रोत्रं च चकारोऽनुक्तानामाकाशादीनां संग्रहार्थः । व्याख्यातमन्यत् । त उक्ता आकाशादयः परित्यक्तशरीरविधारकत्वाभिमानाः। प्रीताः प्राणस्यैव शरीरविधारकत्व-निश्चयेन परममोदमुपगताः। प्राणं मधुकरराजसमं मुख्यप्राणं कालत्रयेऽपि परोक्षं प्रत्यक्षं च स्तुव(न्व)न्ति स्तुतिं कुर्वन्ति ॥ ४ ॥

तत्स्तुतिमाह—एष मुखनासिकाभ्यां संचरन्स्पर्शनस्य साक्षिणो वा प्रत्यक्षोऽग्निर-ध्यात्मादौ जाठरभौमादिभेदभिन्नो वैश्वानरस्तपति संतापं करोति । एष व्याख्या-तम् । सूर्यः शोभनाया गतेः कर्ता चन्द्रमण्डलात्मैष व्याख्यातम् । पर्जन्यो वृष्ट्यभिमानिनी देवतैष इत्यनुवर्तते । मघवान्मघवा त्रिलोकीपतिः, अथवा पर्जन्यस्यैव विशेषणं मघवान्। तथा च पर्जन्येन्द्रयोरैक्यं स्यात्। एष व्याख्यातम्। वायुः प्रभञ्जनः। एष व्याख्यातम्। पृथिवी वसुंधरा, एष इत्यनुवर्तते वक्ष्यमाणेषु सर्वेषु। रयिश्च-न्द्रमाः। देवो विजिगीषापरो द्योतनात्मको वा तपनाग्निसूर्याद्यात्मकत्वेन। किं बहुना सद-सच्चास्ति नास्तीति व्यपदेशभूषितं चकारात्सदसद्विलक्षणमज्ञानमपि । अमृतं चामरण-धर्मात्मकं ब्रह्माप्यनुपचरितसदेकस्वभावं चकारादनुपचरितासत्स्वभावं नरविषाणादिक-मपि। यत्प्रसिद्धम् ॥ ५ ॥

न केवलमयं सर्वात्मा किंतु सर्वाधारोऽपीति दृष्टान्तेनाऽऽहुः—अराश्चक्रस्य नाभिनेम्योरन्तरालवर्तीनि चतुष्कोणानि वर्तुलानि वा तीक्ष्णाग्रपुच्छानि काष्ठानि। इव दृष्टान्ते। रथनाभौ रथचक्रस्य मध्यप्रदेशे प्रतितिष्ठत(न्ता) इति शेषः ॥ दार्ष्टान्तिकमाह—प्राणे संसारचक्रनाभिभूते मुख्ये प्राणे। सर्वं निखिलमग्निसूर्यादिकं प्राणात्मकम्। प्रति-ष्ठितं स्पष्टम्॥ अग्निसूर्यादिकमेव सर्वं प्राणे प्रतिष्ठितं न त्वन्यदिति शङ्कां वारयितुं सर्व-शब्दार्थमाह—ऋचः पादबद्धा मन्त्राः। यजूंष्यविवक्षितच्छन्दस्का मन्त्राः। सामानि गीतिसहिता ऋचो यज्ञो ज्योतिष्टोमादिरूपः। क्षत्रं क्षत्रियत्वजातिर्ब्रह्म च ब्राह्मणत्व-जातिः। चकारादुक्तमनुक्तं च सर्वम् ॥ ६ ॥

यथा प्रजा महाराजमेवैष इत्यङ्गुलिनिर्देशेन परस्परं दर्शयित्वा तद्गुणांश्च संकीर्त्य पश्चात्त्वं नः पिता मातेत्यादिना स्तुवन्ति तथैषोऽग्निः सूर्यश्च तपतीत्यादिना प्राणं दर्शयित्वा देवास्तद्गुणांश्च सर्वप्रतिष्ठादिलक्षणान्संकीर्त्यैवं स्तुवन्त इत्याहुः—प्रजापतिर्विराट्त्रिलोकीशरीरः प्रजानां पालयिता। चरसि गच्छसि वर्तस इत्यर्थः। गर्भे ब्रह्माण्डगोलकजठरे ॥ ननु गर्भस्थोत्तानशायिनोर्विभेदाद्गर्भाद्विनिर्गतो नाहमित्यत आहुः—त्वमेव प्राणः प्रजापतिरूपो गर्भस्थ एव न त्वन्यः। प्रतिजायसे स्वस्माज्जाताद्ब्रह्माण्डगोलकात्पुत्रभूतात्प्रति प्रातिलोम्येन पिता सन्पुत्रत्वमङ्गीकृत्योत्पद्यते(से)। तुभ्यं प्रजापतिरूपायोपकारार्थम्। प्राण हे प्राण प्रजास्त्विमाः प्रत्यक्षाः स्थावरजङ्गमास्त्वद्रूपभूताः। तोरेवकारार्थः। ता इमाः प्रजास्तुभ्यमेवेत्यन्वयः। [बलिं हरन्ति स्पष्टम्] ॥ ननु मम लोकावस्थिताय मह्यं कथमिमाः प्रजा [ बलिं हरन्ति ] इत्यत आहुः—यः प्रसिद्धः प्रजापतिर्हस्तिपुत्तिकादिशरीरेषु समः। प्राणैः प्राणापानादिभिः पञ्चभिर्वायुभेदैः सर्वेषु भूतेष्वेक एव। प्रतितिष्ठसि प्रातिकूल्येन भेदेन वर्तसे ॥ ७ ॥

इदानीमस्यैव प्रधानभूता विभूतीराहुः-देवानामिन्द्रादीनामसि भवसि। वह्नितमोऽतिशयेन हविषां वाहको देवतृप्तिकारणमित्यर्थः। पितॄणामग्निष्वात्तादीनां पितृलोकनिवासिनां प्रथमा पूर्वभाविनी नान्दीमुखश्राद्धादावन्यकर्मापेक्षया। स्वधा स्वान्यजमानस्य पितॄन्हविष्यदानेन धावति गच्छतीति स्वधा, ऋषीणां गौतमभरद्वाजप्रभृतीनां चरितं चेष्टितम्। किं परस्त्रीदर्शनादिकमपि प्राण इत्याशङ्क्य नेत्याह—सत्यमवितथं गुरुपादावलोकनादिकमित्यर्थः। अथवा मुख्यप्राणसाहचर्यात्सत्यं शरीरविधारणम् ॥ ऋषिविशेषणमाहुः—अथर्वाङ्गिरसामथर्वाङ्गिरसप्राणसाहचर्यादथर्वाङ्गिरस्त्वं गौतमादीनाम्। असि भवसि ॥ ८ ॥

इन्द्रः परमैश्वर्यसंपन्नस्त्वं प्राणः प्रजापतिः। प्राण हे प्राण। तेजसा सर्वसंहारकारिणा वीर्येण त्रिजगद्भेदकेन। रुद्रो रोदनहेतुभूतोऽसि भवसि। स्थितिकाले जगतः परिरक्षिता सर्वतो रक्षकः। त्वं प्राणः प्रजापतिः। अन्तरिक्ष आकाशे वाय्वादिरूपेण चरसि गच्छसि। सूर्यः शोभनाया गतेः कर्ता दिवाकरस्त्वं प्राणः प्रजापतिः। सूर्यविशेषणं ज्योतिषां पतिः, चन्द्रादीनां पालयिता। न केवलं ज्योतिषां पतिः किंतु प्रजानामप्यानन्दकारीत्येवमाहुः ॥ ९ ॥

यदा यस्मिन्काले त्वं प्राण सूर्यगोभिरभिवर्षसि सर्वतो नीरधारा मुञ्चसि। अथ तदेमाः प्रत्यक्षाः। प्राणते प्राणन्ति प्राणनादिचेष्टां कुर्वन्तीत्यर्थः। अथवा हे प्राण ते तवेमाः प्रजा इति वक्ष्यमाणेनान्वयः। प्रजाः स्थावरजङ्गमा आनन्दरूपा आनन्दः परमात्मा स एव रूपं यासां ता आनन्दरूपा निरतिशयसुखपूर्णा इत्यर्थः। तिष्ठन्ति

स्पष्टम् ॥ आनन्दरूपावस्थाने हेतुमाह—**कामाया**भिलाषाय यथाकाममित्यर्थः । **अन्न**-मदनीयं व्रीह्यादिकम् । **भविष्यति** स्पष्टम् । **इत्य**नेनाभिप्रायेण ॥ १० ॥

इदानीमस्य सर्वात्मनोऽपि पापलेशशून्यत्वमाहुः—**व्रात्यः** सर्वस्मात्प्रथमजत्वाद्य-थाकालमुपनयनादिसंस्कारशून्यः, पितृपितामहादेरभावाद्वा तत्सोमपानशून्यः, संस्कार-शून्योऽपि सर्वदा शुद्ध इत्यर्थः । त्वं प्रथमजः प्रजापतिः । **प्राण** हे प्राणैकऋषिराथ-र्वणानामेव प्रसिद्धोऽग्निरत्ता भोक्ता संहर्ता वा **विश्वस्य** चराचरस्य जगतः । **सत्पतिः** सतां ब्रह्मादीनां पालयिता संश्चासौ पतिश्चेति वा । **वयमाकाशाद्या** देवाः । **आद्यस्या**-दनीयस्य विषयजातस्य । **दातारः** समर्पकाः । **पिता** जनकस्त्वं प्राणो **मातरिश्व** मात-र्याकाशे श्वसितीति मातरिश्वा वायुस्वरूप इत्यर्थः । **नो**ऽस्माकमाकाशादीनाम् । अथवा सर्वजगत्कारणस्य मातरिश्वनो वायोस्त्वं पिता ॥ ११ ॥

एवं स्तुतिं कृत्वा कार्यमाहुः—**या** प्रसिद्धा । **ते** तव प्राणस्य **तनू**स्तनुरपानरूपा । **या** प्रसिद्धा । **वाचि** वागिन्द्रियेऽग्नौ पृथ्व्यां च वागिन्द्रियसहचरितायां **प्रतिष्ठिता**ऽव-स्थिता, **या** प्रसिद्धा व्यानरूपा **श्रोत्रे** श्रोत्रेन्द्रिये तत्सहचरितचन्द्रमस्याकाशे च, **या** **च** प्रसिद्धा प्राणरूपा चकारः पूर्वत्र वक्ष्यमाणे च पर्याये तनूः प्रतिष्ठितेत्येतदनुवृ-त्त्यर्थः । **चक्षुषि** चक्षुरिन्द्रिये तत्सहचरितेषु तेजोवन्नात्मकेषु रूपेष्वादित्ये च, **या** [**च**] प्रसिद्धा समानरूपा **मनसि** मनइन्द्रिये तत्सहचरितेषु भूतभौतिकेषु । **संतता** सम्य-ग्विस्तृता प्राणादिपञ्चवृत्तिगर्भिणीत्यर्थः । **शिवां** शिवानां मंगलानां स्वस्थानादच-लितामित्यर्थः । **तां** वागादिस्थितां तनुं **कुरु** स्पष्टं त्वं च **मोत्क्रमी**रुत्क्रमं मा कार्षीः ॥ १२ ॥

नास्माकमिदानीं पूर्ववत्स्वातन्त्र्यबुद्धिरित्याहुः—**प्राणस्य** पञ्चवृत्तेर्भवत **इदं** विविधप्र-त्ययगम्यमस्मदादिकं जगद्वशेऽधीनत्वेन **सर्वं** निखिलम् । सर्वशब्दार्थमाहुः—**त्रिदिवे** त्रिदिवोपलक्षितत्रिलोक्यां ब्रह्माण्डजठर इत्यर्थः । **यत्**प्रसिद्धमाकाशादिकं **प्रतिष्ठित**म-वस्थितम् । यस्मादेवं तस्माद्धे प्राण त्वमस्मान्**मातेव पुत्रान्**स्पष्टं **रक्षस्व** रक्ष सर्वतोऽ-नर्थेभ्यः पाहि ॥ तद्रक्षणं स्वयमेवाऽऽहुः—**श्रीश्च** श्रियश्च विविधा लक्ष्मीः । **प्रज्ञां च** लोकवेदविषयिणीं लोकद्वयेष्टकारिणीं बुद्धिं चकारौ तयोः स्थिरत्वोपयोज्यत्वे आहतुः । **विधेहि** विविधास्ववस्थासु धेहि प्रयच्छ । **नो**ऽस्मभ्यमाकाशादिभ्यो विगताभिमानेभ्यः । [**इति, अनेनप्रकारेण**] ॥ १३ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरानन्दयतीन्द्रविरचितायामा-थर्वणप्रश्नोपनिषद्दीपिकायां द्वितीयः प्रश्नः ॥ २ ॥**

---

## अथ तृतीयः प्रश्नः ।

---

प्राणस्य प्रजापतेश्च सर्वजगदात्मत्वं निर्धारितं यद्यपि तथाऽप्यस्य संहतत्वादनात्मत्वमित्येतदुपपादनार्थं तृतीयः प्रश्न आरभ्यते—**अथ** वैदर्भिप्रश्नानन्तरं **हैनं कौश(स)ल्यश्चाऽऽश्वलायनः पप्रच्छ** भगवन्व्याख्यातम् । **कुतः** कस्मादुपादानान्निमित्ताद्वैष प्रत्यक्षः क्रियावान्**प्राणः** पञ्चवृत्ति**र्जायत** उत्पद्यते । **कथं** केन प्रकारेणाऽऽ**यात्यागच्छत्यस्मिन्**स्थूले प्रत्यक्षे **शरीरे** विनाशिनि कलेवरे केन निमित्तेन शरीरं गृह्णातीत्यभिप्रायः । **आत्मानं वा** मुख्यप्राणस्वरूपं वाशब्दः प्राण एव धर्मान्तरप्रश्नार्थः । **प्रविभज्य** प्रकर्षेण विभागं कृत्वा । **कथं** केन प्रकारेण । **प्रातिष्ठते** वर्तत इत्यर्थः । **केन** वृत्तिविशेषेणो**त्क्रमत** उत्क्रामत्यस्माच्छरीरादपसर्पति । **कथं** केन प्रकारेण **बाह्य**मधिभूतमधिदैवं चाभि**धत्ते** सर्वतो धारयति । **कथं** केन प्रकारेणा**ध्यात्म**मात्मानमधिकृत्य वर्तमानमिदं शरीरेन्द्रियादिकम् । इत्यनेन प्रकारेण ॥ १ ॥

**तस्मै** कौश(स)ल्याय । **स होवाच** व्याख्यातम् । **अतिप्रश्नान्**स्यधिकारार्थान्(कार्यान्)निपहितार्थान्वाऽन्यप्रश्नविषयान्वा प्रष्टव्यानर्थान्पृच्छसि प्रश्नं करोषि यतस्ततो **ब्रह्मिष्ठो**ऽतिशयेन वेदार्थज्ञोऽत्रमत्तो वाऽसि भवसि । **इति** यस्मात्तस्मात्ततस्ते तुभ्यमाश्वलायनायाहं पिप्पलादाभिधो **ब्रवीमि** स्पष्टम् ॥ २ ॥

**आत्मन** आत्मनोऽभिन्ननिमित्तोपादानात् । **एष प्राणो जायते** व्याख्यातम् ॥ आत्मनः प्राणो जायमानो न वास्तव इत्येतद्दृष्टान्तेनाऽऽह—**यथा** दृष्टान्त **एषा** प्रत्यक्षा **पुरुषे** शिरःपाण्यादिमति **छाया** प्रसिद्धा पुरुषाकारै**वमेतस्मिन्**प्राणकारण आत्म**न्येतत्**प्राणसूत्रमाततं समन्ताद्विस्तृतं न वास्तवमित्यर्थः ॥ कथमायात्यस्मिञ्शरीर इत्यस्योत्तरमाह—**मनोकृतेन** मनःकृतेन करणं(ण)कृतशुभाशुभकर्मविद्यावासनानिमित्ते**नाऽऽयात्यस्मिञ्शरीरे** व्याख्यातम् ॥ ३ ॥

आत्मानं वा प्रविभज्य कथं प्रातिष्ठत इत्यस्योत्तरं दृष्टान्तपुरःसरमाह—**यथा** दृष्टान्ते । **सम्राडेव** सम्यग्राजत इति सम्राट्सर्वलक्षणसंपन्नः सार्वभौमो राजैव न त्वन्यो**ऽधिकृतान्**मन्त्रिबलरक्षकाधिकारिप्रभृती**न्विनियुङ्क्ते** विनियोगं कुरुते ॥ विनियोगप्रकारमाह—**एतान्ग्रामानेतान्ग्रामान्**कुरुपाञ्चालादिदेशगतान्सर्वसंपत्समृद्धान्पञ्चदश शतं सहस्रं वा ग्रामान्, विनियुज्यमानानां बहुत्वाभिप्राया वाक्यवीप्सा । मन्त्रिबलरक्षकाधिकारिन्निति प्रत्येक**मधितिष्ठस्वे**ति तिष्ठाधिष्ठानं कुर्वित्यनेन प्रकारेण ॥ दार्ष्टान्तिकमाह—**एवमेवा**नेनैव प्रकारेणैष मुख्यः **प्राण इतरान्**स्वात्मव्यतिरिक्तान्**प्राणा**न्प्राणशब्दान्वागादीन्**पृथक्पृथगेव** जिह्वादिगोलकेष्वन्यत्रान्यत्रैव न त्वेकत्र **संनिधत्ते** संनिधानं कुरुते स्थापयतीत्यर्थः ॥ ४ ॥

तेषां संनिधानस्यातिस्पष्टत्वात्परित्यज्य वागादीन्मुख्यस्यैव प्राणस्य पञ्चवृत्तिसंनिधानमाह—पायूपस्थे पायुश्चोपस्थश्च पायूपस्थं तस्मिन्मलमूत्रादिकारित्वेनापानमधश्चारिणं स्वात्मनो वृत्तिभेदं संस्थाप्येति शेषः। चक्षुःश्रोत्रे चक्षुश्च श्रोत्रं च चक्षुःश्रोत्रं तस्मिन्संनिधानं कृत्वेति शेषः। मुखनासिकाभ्यां स्पष्टं प्राणो मुख्यप्राणः स्वयं वृत्तिमान्वृत्तिमन्तरेण स्वेनैव रूपेण प्रातिष्ठते प्रतिष्ठते शरीरदेशाद्बहिर्गच्छति। मध्ये तु शरीरस्य मध्यभाग एव नाभौ न त्वन्यत्र समानोऽशितपीतसमनयनवृत्तिः, तिष्ठतीति शेषः॥ समानशब्दार्थमाह—एष नाभिस्थः प्राणवृत्तिभेदो हि यस्मादेतदन्नाख्यं प्रत्यक्षं हुतं विधिनाऽविधिना वाऽऽस्याहवनीये प्रक्षिप्तमन्नमदनीयं समं यावता नीयमानेन तत्तत्स्थानेन्द्रियादीनां बाधा न भवति तावत्तत्तत्स्थानेन्द्रियादौ। नयति प्रापयति। तस्मात्समानेन समत्वेन नीतादन्नादेताः साक्षिणः प्रत्यक्षाः श्रोत्रचक्षुर्नासिकामुखद्वाररूपेणास्मदादीनां वा सप्त सप्तसंख्याका मूर्धन्यद्वारस्था अर्चिषोऽर्चिरिव विषयप्रकाशरूपत्वाच्छब्दादिबुद्धयः। भवन्ति स्पष्टम्॥ ५॥

इदानीं व्यानवृत्तेः स्थलं वक्तुमाह—हृदि मांसपिण्डे कमठाकारे हि यस्मादेष साक्षिप्रत्यक्ष आत्माऽऽत्मसहचरितः पञ्चवृत्तिः प्राणो लिङ्गात्माऽत्रास्मिन्हृदय आत्माधिष्ठान एतत्सर्वशरीरपर्णस्य शङ्कुभूतमेकशतमेकाधिकं शतं नाडीनां प्रधानभूतानां सच्छिद्राणां शिराणाम्। तासां प्रधाननाडीनां शतं शतमेकैकस्या एकोत्तरशतसंख्याकानां प्रत्येकं शतं शतं तथा चैकोत्तरशतनाडीनां शाखाभूता नाड्यो दशसहस्रं शताधिकं भवन्ति। पुनश्च शताधिकानां दशसहस्राणामेकोत्तरशतनाडीशाखानाडीनामेकैकस्या *द्वासप्ततिं द्वासप्ततिं प्रतिशाखानाडीसहस्राणि शाखानाडीनां शाखाभूता नाड्यस्तासां प्रत्येकं द्विसहस्राधिकसप्ततिसहस्राणि। द्वासप्ततिं द्वासप्ततिमिति वीप्सा प्रत्येकं शाखानाडीसंबन्धार्था। प्रतिशाखानाडीनां सहस्राणि प्रतिशाखानाडीसहस्राणि। तथा च मूलशाखा[प्रतिशाखा]नाड्यो द्वासप्ततिकोटयो द्वासप्ततिलक्षाणि दशसहस्रं च शतद्वयमेका चेति भवन्ति। आसूक्तसंख्यासु मूलशाखाप्रतिशाखा+प्रतिशाखानाडीषु। व्यानो वीर्यवत्कर्महेतुः प्राणवृत्तिभेदश्चरति गच्छति॥ ६॥

केनोत्क्रमत इत्यस्योत्तरं वक्तुं पञ्चम्याः प्राणवृत्तेः संचरणमार्गमाह—अथ सर्वनाडीषु व्यानसंचारेणैव हेतुनैकया सुषुम्नाख्ययोर्ध्व ऊर्ध्वचारी उदान ऊर्ध्वचारित्वादेवोदाननामधेयः प्राणवृत्तिभेदेन पुण्येन शास्त्रीयेण कर्मणा। पुण्यं शुभकर्मफलं सुखप्रायं लोकं भोगभूमिभूतम्। नयति प्रापयति। पापेन शास्त्रनिषिद्धेन कर्मणा। पापमशुभकर्मफलं लोकं नयतीति देहलीप्रदीपन्यायेन संबध्यते। उभाभ्यामेव पुण्यपापाभ्या-

---

* द्वासप्ततिर्द्वासप्ततिरिति क्वचिन्मूले पाठः। + एकः प्रतिशाखाशब्दोऽधिकः।

मेव न तु केवलेन पुण्येन पापेन वा मनुष्यलोकं मानवं शरीरं सुखदुःखफलं नयतीत्यनुषङ्गः ॥ ७ ॥

कथं बाह्यमभिधत्ते कथमध्यात्ममित्येनयोरुत्तरमवशिष्यते। तत्र प्राणादिपञ्चवृत्तिभिरध्यात्ममभिधत्त इत्येतदात्मानं वा प्रविभज्य कथं प्रातिष्ठत इत्येतस्योत्तरेणैवार्थात्प्राणादिभिरभिधत्त इत्युत्तरमुक्तमिदानीं कथं बाह्यमभिधत्त इत्यस्योत्तरं प्राणापानसमानव्यानोदानाभिन्नैरादित्यपृथिव्याकाशवाय्वग्निभिरभिधत्त इत्याह—आदित्यो मण्डलाभिमानी पुरुषो ह प्रसिद्धो वै स्मर्यमाणो बाह्योऽध्यात्मव्यतिरिक्तः। प्राणो मुख्यप्राण उदयति, उदयं गच्छति। एष बाह्यः प्राणो मण्डलात्मा पुरतः स्थित इति हि यस्मादेनं साक्षिप्रत्यक्षं चाक्षुषं चक्षुषि भवं प्राणं प्राणवृत्त्याख्यमनुगृह्णानोऽनुग्रहं कुर्वन्नुद्यतीत्यन्वयः। पृथिव्यां पञ्चगुणायां विस्तीर्णायां भुवि या प्रसिद्धा बाह्यापानरूपा देवताऽधिष्ठात्री। सा पृथिवी देवतैषा प्रत्यक्षेव पुरुषेणानुभूयमाना। पुरुषस्य शिरःपाण्यादिमतः शरीरस्यापानमाध्यात्मिकमपानवृत्तेर्भेदमवष्टभ्य स्वशक्त्या सर्वात्मना गच्छन्तं विधायाभिधत्त इति शेषः। अन्तराऽऽदित्यपृथिव्योर्मध्ये यद्यः प्रसिद्धः समानसम आकाशः सर्वसमावकाशकर्मा सोऽन्तराकाशः समानो बाह्यसमानवृत्तिभेदो वायुः प्रसिद्धः प्रभञ्जनो वीर्यवत्कर्मा व्यानो व्यानवृत्तिभेदो बाह्यः ॥८॥

तेजो दाहपावकप्रकाशकरं ह प्रसिद्धं *वाव तेज एव न त्वन्यदुदानो वा उदानवृत्तिभेदः॥ तेजस उदानत्वे हेतुमाह—तस्माद्यस्मात्तेज एवोदानस्तत उपशान्ततेजा उच्छिन्नजाठरजातवेदाः करस्पर्शेनानुपलभ्यमानौष्ण्यः पुनर्भवमेतच्छरीरं प्रतिपद्यत इति शेषः। अथवा प्राणस्यैतद्विशेषणं व्यवहितं पुनः पुनः शरीरे शरीरे भवतीति पुनर्भवस्तं पुनर्भवम्॥ प्रतिपत्तिकाले सप्रकारमाह—इन्द्रियैर्वागादिभिर्मनस्यन्तःकरणे स्वस्ववृत्त्युपरमेण संपद्यमानैः संगतिं कुर्वद्भिः, यदेन्द्रियाणि मनसि संपद्यन्ते तदेत्यर्थः ॥ ९ ॥

यच्चित्तो यदेव देवतिर्यगादिशरीरं सम्यगिति सर्वदा चित्ते यस्य स यच्चित्तस्तेन देवतिर्यगादिसंकल्पविशिष्टेन मनसा सेन्द्रियेण सहैषोऽन्तःकरणाभिमानी मुमूर्षुः। प्राणं पञ्चवृत्तिं मुख्यप्राणं मधुकरराजसममायात्यागच्छति ज्ञानशून्यः सन्, श्वासैकसहायः परिशिष्यत इत्यर्थः। प्राण उक्तः श्वासोच्छ्वासकर्ता। तेजसा शरीरेण पाकप्रकाशोष्णकारिणोदानवृत्त्यात्मकेन। युक्तः संबद्ध उदानवृत्तिप्रधान इत्यर्थः। सहाऽऽत्मनाऽन्तःकरणाभिमानिना साकम्। यथासंकल्पितं कृतकर्मविद्याकशाघातसमुत्थितपूर्वप्रज्ञास्वविषयीकृतं देवतिर्यगादि यादृशसंकल्पविषयं यथासंकल्पितम्। लोकं कर्मविद्याफलं भाविशरीरमित्यर्थः। नयति प्रापयति ॥ १० ॥

* भाष्ये "ह वै" इति पाठ एव धृतः।

प्रासङ्गिकं प्राणोपासनस्य फलमाह—यः प्राणोपासक एवमुक्तेन प्रकारेणाऽऽत्मनः प्राणो जायते मनःकृताभ्यां धर्माधर्माभ्यां शरीरं गृह्णात्यात्मानं च पञ्चधा विभज्य पायूपस्थयोरपानं स्वं चक्षुःश्रोत्रयोर्नाभौ समानं व्यानं नाडीसमूह उदानं च सुषुम्नायां स्थापयत्युदानेनोत्क्रामति बाह्यैः प्राणापानसमानव्यानोदानैः सूर्यपृथिव्याकाशवाय्वग्नि-भिरान्तरोपकारकैरध्यात्मव्यतिरिक्तमान्तरैश्च बाह्योपकारकैरध्यात्मं धारयति स एव चोदानवृत्तिप्रधानो लोकान्तरमपि नयतीति विद्वाञ्ज्ञानवान् । **प्राणं** पञ्चवृत्तिमात्मन-श्छायारूपम् । **वेद** जानाति । **न ह** निश्चितं नेत्यस्य निषेधार्थस्य हीयत इत्यनेन संबन्धः । **अस्य** प्राणविदः । **प्रजा** पुत्रपौत्रादिसंततिरूपा । **न हीयते** न विनश्यति संततेरुच्छेदो न भवतीत्यर्थः । स्वयं च प्राणविज्ञानेन विशुद्धान्तःकरणसमुत्पन्नब्रह्मज्ञा-नोऽमृतो मरणकारणाविद्याशून्यो भवति स्पष्टं तत्तत्र प्राणविज्ञानेनोक्तोऽमृतो भवती-त्यस्मिन्नर्थे । **एष** वक्ष्यमाणः । **श्लोको** मन्त्रो भवतीति शेषः ॥ ११ ॥

**उत्पत्तिं** प्राणस्याऽऽत्मनो जनिमायतिमायामं धर्माधर्मनिमित्तमागमनमित्यर्थः । अथवा छान्दसो दीर्घलोपः, आयातिमागमनम् । अथवाऽऽगमनस्योत्तरकालभावित्वादा-यत्या गमनमेव लक्ष्यते । **स्थानं** पायूपस्थचक्षुःश्रोत्रनाभिनाडीसमूहसुषुम्नाख्यमपानप्राण-समानव्यानोदानानां स्थानम् । **विभुत्वं चैव** सूर्यपृथिव्याकाशवाय्वग्निभिर्व्याप्तं (व्याप्तत्वं) चकार उ(रादु)दानोत्क्रमणं च । एवकारो भिन्नक्रमः पञ्चधेत्यनेन संबध्यते, **पञ्चधा** बहिरध्यात्मं च सूर्यप्राणादिभेदैः पञ्चप्रकार एव न त्वधिको न्यूनश्च, **अध्यात्मं चैवा**ऽऽत्मानं शरीरमधिकृत्य वर्तत इत्यध्यात्मं चकारादधिदैवमधिभूतं च । एवकारो भिन्नक्रमः प्राणस्येत्यनेन संबध्यते । **प्राणस्य** यद्यपि सूर्यादयश्चक्षुरादयश्च मुख्येन प्राणेन भेदरहितास्तत्रा(थाऽ)पि मुख्यस्य प्राणस्यैवैतद्विभूतिजातं न त्वन्यस्य सूर्यादेर्वि-**ज्ञाय** विशेषेणोक्तेन प्रकारेण ज्ञात्वाऽमृतं मोक्षमश्नुते व्याप्नोति स्वेन प्रकाशेनाऽऽन-न्दात्मरूपेण युक्तो भवतीत्यर्थः । **विज्ञायामृतमश्नुते** व्याख्यातं पादाभ्यासः प्राणवि-द्यापरिसमाप्त्यर्थः । **इतिः** प्रश्नसमाप्त्यर्थः ॥ १२ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरानन्दयतीन्द्रविरचितायामा-थर्वणप्रश्नोपनिषद्दीपिकायां तृतीयः प्रश्नः ॥ ३ ॥**

---

## अथ चतुर्थः प्रश्नः ।

---

प्राणस्यानात्मत्वे निर्धारिते तद्व्यतिरिक्तात्मस्वरूपनिर्धारणार्थमुत्तरो ग्रन्थ आरभ्यते—**अथ** कौश(स)ल्याश्वलायनप्रश्नानन्तरं **हैनं सौर्यायणी गार्ग्यः पप्रच्छ भगवन्**, **व्याख्यातम्** । **एतस्मिन्प्रत्यक्षे** । **पुरुषे** शिरःपाण्यादिमति । **कानि करणानि सम्भूतानि** ।

स्वपन्ति स्वापं कुर्वन्ति । कानि व्याख्यातम् । अस्मिन्पुरुषे जाग्रति जागरणं कुर्वन्ति, कतरः करणभूतयोर्मध्ये क एष ज्ञानवानहं पश्यामीतिप्रत्ययेन प्रत्यक्षो देवो द्योतनात्मकः । स्वप्नान्वासनाविलासाद्गजरथयोगादीन्पश्यत्यवलोकयति । कस्य भूतकरणाद्यन्यतमस्य तद्व्यतिरिक्तस्य वैतत्सौषुप्तं सुखमनुकूलप्रत्ययवेदनीयम् । भवति स्पष्टम् । कस्मिन्कुत्र । नु वितर्के सर्वाधारस्यापि प्राणस्य जायमानाद्वि(मानत्वाद्वि)तर्कः । सर्वे सप्राणभूतरूपा देवा निखिलाः । संप्रतिष्ठिताः सम्यक्प्रतिष्ठां प्राप्ताः । भवन्ति स्पष्टमित्यनेन प्रकारेण । अयमर्थः । वागादीनां साकाशादीनां प्राणपरतन्त्रत्वात्प्राणस्य चाऽऽमरणमनुपरमात्स्वप्नजागरणयोश्चोपलम्भात्स्वप्नेऽपि जागरणवद्व्यवहारदर्शनात्करणेष्वनुपरतेषु स्वप्नस्यासंभवाच्च स्वप्ने चक्षुरादीनामुपरमस्य जागरणेऽनुपरमस्य च दर्शनेऽपि कानि स्वपन्ति कानि जाग्रतीति प्रश्न उपपन्नः । आत्मनोऽसङ्गोदासीनत्वात्प्राणस्य भूतस्याप्यचेतनत्वाच्च चक्षुरादीनां चोपरतत्वात्स्वप्नानुभवस्य चाध्यक्षत्वात्कतर एष देवः स्वप्नान्पश्यतीत्यपि(पि) प्रश्न उपपन्नः । सुषुप्तेऽपि सर्वकरणोपरमादात्मनश्च सुखरूपत्वात्पूर्ववत्कस्यैतत्सुखं भवतीत्युपपन्नः प्रश्नः । प्राणविलक्षणस्याद्याप्यनधिगतत्वात्कस्मिन्नित्याद्यपि पृष्टमुपपन्नमेव । वागादीनां सप्राणभूतानामनात्मत्वकथनानन्तरमुक्ता एवैते प्रश्नाः, तथा च तथाऽक्षराद्विविधाः सौम्य भावा इति मन्त्रोक्ताक्षरस्य प्राणविलक्षणस्य भावानां च सप्राणानां व्याख्यानमप्यत्तरेणापि ग्रन्थेन क्रियत इति ॥ १ ॥

तस्मै गार्ग्याय । स होवाच व्याख्यातम् ॥ मनःप्राणव्यतिरिक्तानि सर्वाणि करणानि स्वपन्तीत्यभिप्रायेण दृष्टान्तपुरःसरमुत्तरमाह — यथा दृष्टान्ते । गार्ग्य हे गार्ग्य । मरीचयः किरणाः । अर्कस्याऽऽदित्यस्यास्तं गच्छतः सायंकाले नयनपथागोचरं देशं व्रजतः । सर्वा निखिला एतस्मिन्नत्यस्ते तेजोमण्डले ज्योतिर्बिम्ब एकी भवन्ति, एकतां गच्छन्ति तेजोमण्डलादर्शने न दृश्यन्त इत्यर्थः । ताः पुनरादित्यमण्डल एकतां गता एव मरीचयः । पुनरुदयतः सवितुर्भूयो नयनपथमागच्छतो द्वितीये दिवसे । प्रचरन्ति प्रकर्षेण विभागरूपेण गच्छन्ति सर्वासु दिक्षु, एवमनेन प्रकारेण ह प्रसिद्धं वै स्मर्यमाणं तद्वागादिकं मरीचिस्थानीयं सर्वं निखिलं परे उत्कृष्टे वागादिवृत्त्युत्पत्तिनिरोधनिमित्ते । देवे सर्वव्यवहारकारणे । मनस्यन्तःकरणेऽर्कस्थानीये स्वप्नावसरे एकी भवति स्पष्टम् । तेनैकीभवनेन हेतुना तर्हि तदा स्वप्नावसरे एष प्रत्यक्षः पुरुषः स्थूलो देहो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नाऽऽदत्ते नाऽऽनन्दयते न विसृजते नेयायते । श्रोत्रचक्षुर्घ्राणरसनत्वग्वाग्घस्तोपस्थपायुपादानां कर्मनिषेधकानि दश वाक्यानि स्पष्टानि । नेयायत इत्यत्र न गच्छतीति व्याख्येयम् । स्वपिति शयनं करोति, इत्यनेन प्रकारेणाऽऽचक्षते कथयन्ति विद्वांसः ॥ २ ॥

कानि स्वपन्तीत्यस्य बाह्यज्ञानकर्मेन्द्रियाणीत्युत्तरं जातं कान्यस्मिञ्जाग्रतीत्यस्योत्तरमाह—**प्राणाग्नय एव** प्राणाः प्राणवृत्तिभेदाः पञ्च त एवाग्नयः। यद्यपि जागरणं श्रोत्रादीनां जागरणे जागरणस्वप्नयोश्च मनसस्तथाऽपि सुषुप्ते नैकस्यापि, प्राणस्य पुनरवस्थात्रयेऽपि जागरणमेव तदभिप्रायस्त्वयमेवकारः। **एतस्मिन्प्रत्यक्षे पुरे** नवद्वारे शरीरे **जाग्रति** जागरणं कुर्वन्ति॥ प्राणानामग्नित्वमुपपादयति प्रसङ्गेनोपासनार्थम्—**गार्हपत्यो** गार्हपत्याभिधेयोऽग्निर्निरन्तरं रक्षणीयोऽग्निहोत्रिभिर्ह प्रसिद्धो **वै** स्मर्यमाण **एष** साक्षिप्रत्यक्षोऽ**पानो** मलमूत्रापनयनकारी प्राणवृत्तिभेदः। **व्यानो** दक्षिणसुषिरस्थः प्राणवृत्तिभेदोऽ**न्वाहार्यपचनो** दक्षिणाग्निः॥ इदानीमपानस्य गार्हपत्यत्वे प्राणस्य चाऽऽहवनीयत्व उक्ते वक्ष्यमाणे च साधारणं हेतुमाह—**यद्यस्माद्गार्हपत्या**दुक्तादग्नेः **प्रणीयते** प्रकर्षेण नीयते स्थानान्तरे पृथक्क्रियत इत्यर्थः। **प्रणयनादाहवनीयः प्राण** आधारस्थादपानाद्गार्हपत्यस्थानीयात्प्रकर्षेणाऽऽस्यकुण्डमदनीयाहुतिप्रक्षेपार्थमाहवनीयो नीयत इति प्रणयनेन हेतुनाऽऽहवनीयोऽग्निः प्राण इति॥ ३॥

अपानव्यानप्राणेषु गार्हपत्यदक्षिणाग्न्याहवनीयाख्याग्नित्रय इ(दृ)ष्टिमुक्त्वेदानीं समानश्वासोच्छ्वासमनउदानानामपूर्वाहुतियजमानेष्टफलत्वदृष्टिमाह—**यद्यस्मादुच्छ्वासनिश्वासौ** प्राणस्य शरीराद्बहिर्गमनं पुनः शरीर आगमनं **चैतावुक्तावुच्छ्वासनिश्वासौ** द्वित्वसंख्यासामान्यादा**हुती** काले काले पयःप्रभृतिद्रव्यप्रक्षेपेणाऽऽहवनीये संपन्ने द्वे आहुती **ते समं नयति** वातपित्तश्लेष्मणां त्वगादीनां च धातूनामशितपीतयोश्च समं समत्वं क्षोभराहित्यं यथा भवति तथा नयति प्रापयति शरीराद्बहिर्देशं शरीरं वाऽऽहुतिजन्यापूर्ववदिति यस्मात्तस्मादपूर्वं **स समानः** समानाख्यः प्राणवृत्तिभेदः। **मनो ह वाव** प्रसिद्धमन्तःकरणमेव सर्वव्यापारनिमित्तत्वसामान्येन **यजमानो** यागस्य कर्ता। **इष्टफलमेव** यागफलमेवोर्ध्वत्वसामान्या**दुदानः** सुषुम्नाचारी प्राणवृत्तिभेदः। **स** उक्त उदान **एनं** संघाताभिमानिनमात्मानं **यजमानं** मनउपाधिक**महरहर्**नित्यं नित्यं सुषुप्तिकाले **ब्रह्म** सत्यज्ञानादिलक्षणमानन्दैकरसस्वभावं ब्रह्म **गमयति** प्रापयति। गार्हपत्योऽपान इत्याद्युक्तेन प्रकारेणोपासनं कुर्वतो ब्रह्मज्ञानोत्पादद्वारा मुक्तिरेव फलं भवतीत्येतद्बहिरेवावगन्तव्यम्॥ ४॥

कतर एष देवः स्वप्नान्पश्यतीत्यस्योत्तरमाह—**अत्रास्यां** वागाद्युपरमरूपायां स्वप्नावस्थाया**मेष** वागाद्युत्पत्तिविनाशनिमित्तभूतः साक्षिप्रत्यक्षो **देवः** सर्वसंसारव्यवहारकारणमनआख्यः। **स्वप्ने** स्वप्नस्थाने **महिमानं** स्वात्मनो गिरिनदिसमुद्रादिरूपेण महत्त्वम**नुभवति** स्वयमेव कर्तृत्वं प्राप्य स्वप्नबलादवगच्छति॥ महिमानमनुभवतीत्युक्तं तदेतदुपपादयति—**यत्प्रसिद्धं** करिनरतुरगादि **दृष्टं दृष्टं** नयनपथमागतं पदाभ्यासो वासनाप्राबल्यमाह। **अनु** पश्चात्पूर्वं जागरणे दृष्टेत्यर्थः। **पश्यत्यवलोकयति। श्रुतं**

जागरणावस्थायां श्रवणपथमागतं [श्रु]तमेव* श्रुतमेव न त्वन्यमर्थं विषयजातमनुशृणोति स्पष्टम् । देशदिगन्तरैश्च देशान्तरैर्गृहादिभिर्दिगन्तरैरुत्तराद्याशादिभिः, चकारादन्यैरपि कालादिभिर्निमित्तभूतैः प्रत्यनुभूतं प्रति प्रकर्षेण न केवलमित्यर्थः । अ[नुभूतम]िगतं पुनः पुनर्भूयो भूयः स्वप्ने दिवसे दिवसे प्रत्यनुभवति अनेकवारमनुभवति ॥ यद्येवं तर्हि स्वप्नस्मृतिः स्यादित्यत आह—दृष्टं चादृष्टं च दृष्टं नयनपथमागतमदृष्टं नयनसंप्रयोगमन्तरेण स्वप्नादिवद्दृष्टमत्यन्तादृष्टे वासनानुपपत्तेः । चकारौ प्रत्यनुभवतीति क्रियापदस्य संबन्धार्थौ । श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च श्रुतं श्रोत्रेन्द्रियसंबद्धं तद्विपरीतमश्रुतं प्रमाणव्यवधानेनान्तःकरणसंबद्धमनुभूतं तद्विपरीतमननुभूतम् । चकारौ पर्यायद्वयेऽपि पूर्ववद्व्याख्येयौ । सच्चासच्च दृष्टं श्रुतमनुभूतं सत्तद्विपरीतमसत् । चकारौ पूर्ववत्क्रियापदानुषङ्गार्थौ । अथवाऽस्मिञ्जन्मनि दृष्टं श्रुतमनुभूतं जन्मान्तरविषयं सतोऽप्यसति वासनासु स्मृतेरभावाद्दृष्टं श्रुतमनुभूतमप्यदृष्टमश्रुतमननुभूतम् । किं बहुना सर्वं निखिलं पश्यति स्पष्टं, स्वयं च सर्वो निखिलदेवतिर्यगादिरूपः सन्पश्यति स्पष्टम् ॥ ५ ॥

इदानीं कस्यैतत्सुखं भवतीत्यस्योत्तरमात्मन एव भवतीत्यभिप्रायेणाऽऽह—स मनआख्यो देवो यदा यस्मिन्काले तेजसा नाडीगतेन पित्ताख्येन ब्रह्मणा वाऽभिभूतस्तिरस्कृतवासनो भवति स्पष्टम् । अत्रास्या सर्ववासनोपरमरूपायां सुषुप्तावस्थायामेष देवः स्वप्नान्न पश्यति स्पष्टम् । अथ तदा यत्प्रसिद्धं ब्राह्मं स्वरूपं मनउपाधिकमात्मनस्तदेतस्मिञ्शरीर एतत् , स्पष्टम् । सुखं सुखस्वरूपं पूर्वमपि तद्रूपः सन्वि-(पं सद्वि)शेषज्ञानाभावाद्भवति स्पष्टम् ॥ ६ ॥

कस्मिन्नु सर्वं संप्रतिष्ठिता भवन्तीत्यस्योत्तरमाह दृष्टान्तेन—स आत्मनि सर्वसंप्रतिष्ठात्वे प्रसिद्धो दृष्टान्तः । यथा दृष्टान्ते, सोम्य प्रियदर्शन गार्ग्य वयांसि पक्षिणो वासोवृक्षं सायंवासार्थं वृक्षं वासवृक्षमित्यर्थः । नित्यं नित्यं सर्वतो गत्वा पुनः सायंकाले संप्रतिष्ठन्ते सम्यक्तत्प्राप्तिफलत्वेन गच्छन्ति । एवमनेन प्रकारेण ह वै प्रसिद्धं स्मर्यमाणं तदुक्तं वागादिकं सप्राणभूतं सर्वं निखिलं परेऽविद्यातत्कार्यतत्संस्कारेभ्यो व्यतिरिक्त आत्मनि स्वयंप्रकाशमान आनन्दात्मनि संप्रतिष्ठते सम्यगवतिष्ठते ॥ ७ ॥

सर्वशब्दार्थमाह—पृथिवी च पृथिवीमात्रा चाऽऽपश्चाऽऽपोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाऽऽकाशश्चाऽऽकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक्च स्पर्शयितव्यं च वाक्च वक्तव्यं च हस्तौ चाऽऽदातव्यं चोपस्थश्चाऽऽनन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च

---

* मूले क्वचित् "तमेव" इत्यपि पाठो वर्तते ।

**बुद्धिश्च बोद्धव्यं चाहंकारश्चाहंकर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ।** आपोमात्राऽम्मात्रा । **रसो** रसनम् । तेजो ज्ञानशक्तिसामान्यमन्तःकरणचतुष्टयानुगतम् । विद्योतयितव्यमन्तःकरणचतुष्टयसामान्यस्यैव सामान्यं विषयभूतम् । प्राणः क्रियाशक्तिः सूत्ररूप आध्यात्मिकबाह्यभेदभिन्नः । विधारयितव्यं सूत्रात्मन्योतं च प्रोतं च प्राणव्यतिरिक्तं निखिलं विश्वम् । द्वाचत्वारिंशच्चकारास्तावद्भिः पादैः पर आत्मनि संप्रतिष्ठन्त इति वाक्यानुषङ्गार्थाः । वाक्यानुषङ्गाश्च यथावचनं करणीयाः । पृथिव्यादिपञ्चमहाभूतस्थूलसूक्ष्मज्ञानकर्मेन्द्रियतद्विषयान्तःकरणचतुष्टयतद्विषयाभिधायकानि पदानि स्पष्टार्थानि ॥ ८ ॥

इदानीं सर्वाधारस्य परस्याऽऽत्मनो जीवादुपाधिकृतभेदमन्तरेण भेदं वारयति—**एष हि** एष एव सर्वाधारः पर एव न त्वन्यः कश्चन वस्तुतश्चक्षुर्धर्मानात्मन्यध्यस्यन्**द्रष्टा** चाक्षुषज्ञानस्य कर्ता ॥ एवं त्वक्श्रोत्रघ्राणरसनाहंमतिबुद्धिक्रियाशक्तिधर्मानात्मन्यध्यस्यत्यन्तःकरणोपाधिकः सन्वस्तुनः पूर्ण एवोक्तेन्द्रियज्ञानानां क्रियायाश्च कर्ता भवतीत्याह—**स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता,** स्पष्टम् । मन्तृत्वादिपदत्रय उपलक्षणादिन्यायेन व्याख्येयाः(?) । **विज्ञानात्मा**ऽन्तःकरणोपाधिकः । **पुरुषः** परिपूर्णः परमात्मैव सन्ननाद्यविद्यावशादन्तःकरणविशिष्टः पुरिशयो मनुष्यत्वाद्यभिमानीत्यर्थः । **सोऽपि** भेदविवक्षायां **परेऽक्षर आत्मनि** संप्रतिष्ठत *इति शेषः ॥ ९ ॥

ननु यद्येष विज्ञानात्मा पुरुषो द्रष्टृत्वादिगुणकस्तर्हि द्रष्टा श्रोतेत्यादिज्ञानात्पुरुषार्थः स्यादित्याशङ्क्य नेत्याह—**स** प्रसिद्धोऽधिकारी **यो** यः कश्चनाधीतवेदान्तवाक्यो **ह** प्रसिद्धं **वै** स्मर्यमाणं **तत्**सर्वाधारभूतं विज्ञानात्मस्वरूपं द्रष्टृत्वादिगुणकं शरीरे वर्तमान**मच्छायं** छायाऽविद्या सप्राणा तया वर्जितमच्छाय**मशरीरं** शरीरमात्रशून्य**मलोहितं** लौहित्यं तु रागस्तद्वाचिना लोहितशब्देन तत्कारणमन्तःकरणं लक्ष्यते तेनान्तःकरणशून्यमलोहितमत एव सर्वोपाधिराहित्या**च्छुभ्रं** सर्वोपाधिरहितं स्वयंप्रकाशमानानन्दात्मस्वरूप**मक्षरं** विनाशरहितं व्याप्तिमद्वा **वेदयते** वेत्ति । योऽच्छायादिगुणकं वेत्ति स वेत्तीत्यभिप्रायः ॥ इदानीमच्छायादिविज्ञानिनः पुरुषार्थमाह—**यस्तु** यः पुनरच्छायादिविज्ञानी **सोम्य** हे प्रियदर्शन गार्ग्य **स** उक्तोऽच्छायादिरूपज्ञानी **सर्वज्ञः** सर्वमस्मीति जानातीति सर्वज्ञः **सर्वो भवति** वर्तमाने शरीरे सर्वस्य वर्तमानोऽपि वस्तुतः सर्वरूपो भवति । **तत्**तस्मिन्नर्थे सर्वाधारात्माच्छायादिरूपविज्ञानात्पुरुषार्थप्राप्तावेष **श्लोकः** [मन्त्रः] ॥ १० ॥

**विज्ञानात्मा** व्याख्यातम् । यद्यप्येष एव विज्ञानात्मा तथाऽपि विज्ञानस्यान्तःकर-

---

* " इति शेषः " इति पदद्वयस्थाने स्पष्टमिति पदमपेक्षितं किंचैतदग्रे " परमेवाक्षरं प्रतिपद्यते " इति पदचतुष्टयं त्रुटितम् ।

णस्य वैशिष्ट्यं पृथगङ्गीकृत्य तस्यापि तस्मिन्प्रतिष्ठोच्यत इत्यविरोधः। परमात्मैवान्तःकरणविशिष्टः सह देवैश्च सर्वैर्निखिलैः करणैर्वागादिभिर्देवशब्दाभिधेयैरपि साकं प्राणाः प्राणवृत्तिभेदाः पञ्च भूतानि पृथिव्यादीनि पञ्च महाभूतानि स्थूलानि सूक्ष्माणि स्थावरजङ्गमानि च संप्रतिष्ठन्ति संप्रतिष्ठन्ते। यत्र यस्मिन्परे आत्मनि विज्ञानात्माभिन्नेऽच्छायादिरूपे तत्सर्वाधारभूतमक्षरम्। वेदयते यस्तु सोम्य स सर्वज्ञो व्याख्यातम्। सर्वमेव निखिलमेवाऽऽत्मत्वेनाऽऽविवेश समन्तात्प्रवेशं कृतवान्करोतीत्यर्थः। [इति मन्त्रसमाप्त्यर्थः।] ॥ ११ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरानन्दयतीन्द्रविरचितायामाथर्वणप्रश्नोपनिषद्दीपिकायां चतुर्थः प्रश्नः ॥ ४ ॥

---

## अथ पञ्चमः प्रश्नः।

अक्षरविज्ञानात्परपुरुषार्थप्राप्तिरुक्ता तत्प्रसङ्गेनोंकारस्याप्यक्षररूपत्वादोमित्येतदक्षरमिदं सर्वमित्यादिना ब्रह्मसमानत्वेनोक्तत्वाच्च तद्विज्ञानात्परः पुरुषार्थः स्यान्न वेति संदेहात्प्रश्नोत्थाने तद्विज्ञानादपि परः पुरुषार्थः प्रकारान्तरेण भवतीत्येतदर्थमयं प्रश्न आरभ्यते—अथ गार्ग्यप्रश्नानन्तरं हैनं शैब्यः सत्यकामः पप्रच्छ व्याख्यातम्। स ओंकारब्रह्मणोऽक्षरशब्दाभिधेयत्वाभिज्ञो यो यः कश्चन त्रैवर्णिको ह वै प्रसिद्धः स्मर्यमाणोऽधिकारिगणे, 'तदद्भुतमिव' भगवन्हे भगवन्मनुष्येषु मनुजेषु मध्ये प्रायणान्तं मरणपर्यन्तमोंकारं प्रणवमभिध्यायीताभिध्यायेत्सर्वतो ध्यानं कुर्यात्कतमंसेषु तेषु परापरविद्याफलभूतेषु कं वावैव परमपरमुभयं चे(वे)त्यर्थः। स ओंकाराभिध्याता तेनोंकारध्यानेन लोकं विद्याफलं जयति प्राप्नोतीत्यनेन प्रकारेण। तस्मै शैब्याय स होवाच व्याख्यानम् ॥ १ ॥

एतद्वा एतदेव सत्यकाम हे सत्यकाम परं चापरं च [ब्रह्म] परं निरतिशयमपरमृग्वेदादिरूपं चकारौ यदस्ति यन्नास्ति च तदप्येतदेवेत्याहतुः ॥ ब्रह्मशब्दवाच्यमेतच्छब्दार्थमाह—यत्प्रसिद्धः सर्ववेदेषु, ओंकारः प्रणवस्तस्मात्परमपरं च ब्रह्मोंकारस्ततो विद्वानोंकारध्यानविज्ञानवानेतेनैव सर्ववेदे प्रसिद्धेनोक्तेनोंकारेणैव न त्वन्येनाऽऽयतनेनाऽऽश्रयेणैकतरं स्वाभिप्रेतं परमपरं वा ब्रह्म परापरयोर्ब्रह्मणोर्मध्येऽन्वेति शास्त्रोपदिष्टेन मार्गेणोपास्य पश्चाद्गच्छति ॥ २ ॥

इदानीं मात्राभेदज्ञानाद्विशेषफलान्याह—सोऽभिध्याता यदि पक्षान्तरे एकमात्रमेकमात्राकालमकारमात्रं वाऽभिध्यायीत व्याख्यातं स एकमात्राभिध्याता तेनैवैकमात्राध्यानेनैव न त्वन्येन संवेदित एकमात्राभ्यासि सम्यग्बोधितस्तूर्णमेव शीघ्रमेव त

तु विलम्बेन जगत्यां स्थावरजङ्गमव्याप्तिमत्यां भूमौ तादात्म्येन तदधिष्ठातृत्वेन वाऽभिसंपद्यते सर्वतः संपन्नो भवति । तं पृथिवीसंपन्नमृचः पादबद्धा मन्त्रा ऋग्वेदाख्या मनुष्यलोकं मनुजशरीरफलं सर्वगुणसंपन्नं सार्वभौमानन्दमित्यर्थः । उपनयन्ते सत्कृत्य समीपतः प्रापयन्ति । स ऋग्भिर्मनुष्यलोकं प्रापितस्तत्र तस्मिन्मनुष्यलोके तपसा स्वधर्मवर्तनादिना ब्रह्मचर्येण सर्वात्मना मैथुनवर्जनेन श्रद्धया वेदोक्तार्थ आस्तिक्यबुद्ध्या संपन्नः संप्राप्तो महिमानं महत्त्वं स्वात्माभिन्नं मानुषमानन्दमित्यर्थः । अनुभवति साक्षात्करोति । एतदुक्तं भवति । ऋग्भिर्मनुष्यलोकं प्रापितोऽपि तपआदिवर्जितो न तं लोकमनुभवति राजमन्त्रिभिः स्निग्धो राजश्रियं प्रापितः पान्थ इव पुण्यहीनो न राजश्रियमनुभवतीति ॥ ३ ॥

अथैकमात्राद्व्यतिरिक्तेन यदि केनाचिद्दैवयोगेन द्विमात्रेण द्विमात्रकालेनाकारोकाराभ्यां वा मनसि संपद्यतेऽन्तःकरणे संपन्नो भवति, अभिध्यायेदित्यर्थः । स मनसि संपन्नोऽन्तरिक्षमन्तरिक्षाधारं यजुर्भिरविवक्षितच्छन्दस्कैर्मन्त्रैर्यजुर्वेदशब्दवाच्यैरुन्नीयत ऊर्ध्वं प्राप्यते सोमलोकं सोमस्य प्रियदर्शनस्य लोकं प्रियदर्शनं मनुष्यानन्दादभ्यधिकानन्दं पित्रादिशरीरमित्यर्थः । स यजुर्भिः सोमलोकं प्रापितो ब्रह्मज्ञानहीनः सोमलोके व्याख्याते शरीरे विभूतिं परमैश्वर्यमनुभूय साक्षात्कृत्य दुर्मन्त्रीव महाराज(जा!)प्रसादे पुनरावर्तते पूर्वमपि तस्मात्प्रच्युतस्तमारूढो भूयः खरशूकरादियोनिं ब्राह्मणादियोनिं वा स्वकर्मानुसारेणाऽऽगच्छति ॥ ४ ॥

यः पुनर्यस्तु प्रसिद्धः पूर्वेभ्योऽन्योऽभिध्यातैतं बुद्धेर्द्रष्टारमानन्दात्मानं त्रिमात्रेणाकारोकारमकाररूपेण ॥ त्रिमात्ररूपमाह—ॐ अवतीत्योमित्यनेन प्रकारेण त्रिमात्रः । एतेनैवोक्तेन त्रिमात्रेणैव परमपुरुषाभिधानेनाभिन्नेनाऽऽलम्बनेनाक्षरेण वर्णात्मकेनाविनाशिना व्याप्तिमता वा परमविद्यातत्कार्यतत्संस्कारेभ्यो व्यतिरिक्तं पुरुषं परिपूर्णमभिध्यायीत व्याख्यातम् । सोऽभिध्याता तेजसि तेजोमण्डले सूर्ये शोभनाया गतेः कर्तरि संपन्नः सम्यक्प्राप्तः ॥ इदानीं सूर्यं प्राप्तस्य पापविनिर्मोक्षे दृष्टान्तमाह—यथा दृष्टान्ते, पादोदर उदरमेव पादा यस्य स पादोदरः सर्प इत्यर्थः । त्वचा जीर्णेन कञ्चुकेन विनिर्मुच्यते विशेषेण निःशेषेण मुक्तो भवति । एवमनेनैव प्रकारेण ह प्रसिद्धो वै स्मर्यमाणः स सूर्यं प्राप्तः पाप्मना पापाविनाभूतेन पुण्येन पापेन च विनिर्मुक्तो विशेषेण निःशेषेणासंबद्धः स पापरहितः सामभिर्गीतिप्रधानैर्मन्त्रैः सामवेदाभिधानैरुन्नीयते सूर्यादूर्ध्वं प्राप्यते ब्रह्मलोकं कार्यस्य ब्रह्मणो निवासभूतं देशम् । स ब्रह्मलोकं प्राप्त एतस्माद्ब्रह्मलोकस्थानाद्धिरण्यगर्भाज्जीवघनाज्जीवानां कार्यकारणात्मनां घनोऽखिलो जीवघनः सर्वकार्यकारणादिकारणमित्यर्थः । तस्मात्परात्स्थावरजङ्गमेभ्य उत्कृष्टात्परमुत्कृष्टमुत्कृष्टाज्जीवघनात्पुरिशयं सर्वशरीरे शयानं

पुरुषं परिपूर्णमीक्षते साक्षात्करोति। एवमुक्तं भवति, ब्रह्मलोक उत्पन्नब्रह्मसाक्षात्कारो विदेहकैवल्यं प्राप्नोतीति। तत्तस्मिन्नुक्तेऽर्थे एतौ वक्ष्यमाणौ श्लोकौ मन्त्रौ भवतः स्पष्टम् ॥ ५ ॥

तिस्रस्त्रिसंख्याका मात्रा मीयन्तेऽध्यात्ममधिभूतमधिदैवं च याभिस्ता अकारोकारमकाराख्या मृत्युमत्यो ब्रह्मदृष्टिमन्तरेण दृष्टा मरणवत्यः प्रयुक्ता एता एव ब्रह्मज्ञानमन्तरेण स्वातन्त्र्येण ध्यानाय प्रकर्षेणावगता अन्योन्यसक्ताः परस्परसंबद्धाः॥ अन्योन्यसक्तत्वमाह—अनविप्रयुक्ता विशेषेण प्रयुक्ता एकस्मिन्नर्थे ध्यानकाले संबद्धा विप्रयुक्ताः [ न विप्रयुक्ता अविप्रयुक्ता नाविप्रयुक्ता अनविप्रयुक्ताः। विप्रयुक्ता एवेत्यर्थः। ] क्रियासु कर्मरूपासु ॥ क्रिया आह—बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तिपुरुषविषयासु। अथवा यागादिक्रिया बाह्याः प्राणायामाद्या आभ्यन्तरा मानसजपाद्या मध्यमास्तासु बाह्याभ्यन्तरमध्यमासु। सम्यक्प्रयुक्तास्वहं ब्रह्मास्म्येता अपि ब्रह्मणोऽभिन्ना इति सम्यगवगत्य प्रकर्षेण कृतासु न कम्पते न चलति ज्ञो ब्रह्मवित् ॥ ६ ॥

ऋग्भिः पादबद्धैर्मन्त्रैरेतं मनुष्यलोकं यजुर्भिरविवक्षितच्छन्दस्कैर्मन्त्रैरन्तरिक्षमन्तरिक्षाधारं* सोमलोकं सामभिर्गीतिप्रधानैर्मन्त्रैर्यत्तत्कवयो वेदयन्ते यत्प्रसिद्धं कवयः क्रान्तदर्शिनो ब्रह्मज्ञानिनोऽवगच्छन्ति तत्स्थानं ब्रह्मलोकाख्यमन्वेतीति त्रिष्वपि संबध्यते। किं बहुना तं स्वयंप्रकाशमानन्दात्मानमोंकारेणैवाऽऽयतनेनान्वेति विद्वान्, स्पष्टम् ॥ तच्छब्दार्थमाह—यत्प्रसिद्धं वेदान्तेषु तत्त्वमसीत्यादिनोक्तं शान्तं रागादिदोषरहितमजरं जरा शरीरवैरूप्यकारणं तया रहितममृतं मरणादिदोषरहितमभयं द्वितीयाभावाद्भयवर्जितं परं चोत्कृष्टम्। चकारात्पूर्वोक्तमृग्यजुःसामप्राप्यमपरमपि [ इति वाक्यसमाप्तौ। ] ॥ ७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरानन्दयतीन्द्रविरचितायामाथर्वणप्रश्नोपनिषद्दीपिकायां पञ्चमः प्रश्नः ॥ ५ ॥

---

## अथ षष्ठः प्रश्नः।

---

ओंकारेणावाप्यं परं ब्रह्मेत्युक्तं न तत्स्वरूपं निर्धारितं तन्निर्धारणार्थमयं प्रश्न आरभ्यते—अथ शैब्यप्रश्नानन्तरं हैनं सुकेशा च भारद्वाजः पप्रच्छ भगवन्, व्याख्यातम्। हिरण्यनाभो नामतः कौसल्यः कोसलायां भवो राजपुत्रः क्षत्रियः कस्यचि-

* एतदग्रे 'सः' इति पदमधिकं क्वचिन्मूले तच्च भाष्यदीपिकयोर्न गृहीतम्।

**द्राजस्तनयो मां** भारद्वाजमुपेत्य समीपमागत्य विधिवदेनं(तं)* वक्ष्यमाणं **प्रश्नं प्रष्ट**व्यार्थम**पृच्छतापृच्छत्पृष्टवान्** । **षोडशकलं** षोडशसंख्याकाश्चन्द्रस्येव कला उपचयापचयहेतुभूता यस्य स षोडशकलस्तं **भारद्वाज** हे भारद्वाज **पुरुषं परिपूर्णं वेत्थ** जानीषे, तं हिरण्यनाभं मा पृच्छन्तमहं भारद्वाजः **कुमारं** राजबालम**ब्रुवमुक्तवान्** । **नाहमिमं वेद**, इमं षोडशकलं त्वत्पृष्टं पुरुषमहं भारद्वाजो न जानामि ॥ स्वाज्ञानेऽन्यथाऽनुपपत्तिमाह—**यदि** पक्षान्तरे, **अहमिमं** व्याख्यातम् । **अवेदिषं** ज्ञातवानस्मि **कथं** केन हेतुना **ते** तुभ्यं राजकुमाराय शिष्याय **नावक्ष्यं** न कथयिष्यामि तस्मान्न नानाम्येवेत्यर्थः । **इत्यनेन** प्रकारेण ॥ मैवं शङ्किष्ठा अयमनृतं वदतीत्येवमाह—**समूलो वै**+ सह मूलेन शुभकर्मविद्यादिना वर्तमानः समूल **एवैषो**ऽनृतवादी **परिशुष्यति** सर्वतः शोषं गच्छति, इह परत्र वा सुखलेशेन शून्यः स्थावरजङ्गमैर्भूतैर्वाक्कायमनोभिस्तिरस्कृतस्त्रिविधदुःखाग्निना दंदह्यमानसर्वदेहेन्द्रियोऽयं भ्रमतीत्यर्थः । कः, **यः** प्रसिद्धोऽनृतवागनृतमयथादृष्टार्थवचनम**भिवदति** सर्वतो ब्रूते । यस्मादेवं **तस्मात्तो नार्हामि** न योग्यो भवाम्यनृतमयथाभूतार्थं **वक्तुं** भाषितुम् । अयमर्थः । यो ह्यनृतवदनजं दोषं न जानाति स तु वदतु नामानृतमहं तु तदभिज्ञः कथमनृतं वदामीति । एवं मद्वाक्यं श्रुत्वा **स** राजपुत्रोऽयमपि या(मा)दृश इति मत्समीपागमनेन लज्जितस्**तूष्णीं** साध्वसाधु वेति मां प्रतिवचनमदत्त्वैव **रथमारुह्य** स्वयानारूढः स्वं नगरं **प्रवव्राज** प्रकर्षेण शीघ्रं जगाम । अनयाऽऽख्यायिकयैतद्दर्शितं महद्धानां राज्ञां तपःश्रद्धादियुक्तानां मुनीनां च ब्रह्मविद्या दुर्लभा किमुतान्येषामिति । तं षोडशकलं पुरुषं हिरण्यनाभेन मां प्रति पृष्टं **त्वा** त्वां प्रति पिप्पलादं **पृच्छामि क्व** कुत्र प्रदेशेऽसौ षोडशकलः **पुरुषः** परिपूर्णः, इत्यनेन प्रकारेण ॥ १ ॥

**तस्मै** भारद्वाजाय पृच्छते । **स होवाच** व्याख्यातम् । **इहैवास्मिन्नेव** स्थाने न त्वन्यत्र ॥ सामान्यत उक्तं विशेषत आह—**अन्तःशरीरे** शरीरस्य मध्ये हृदयपुण्डरीक इत्यर्थः । **सोम्य** हे प्रियदर्शन **स** हिरण्यनाभेन भवन्तं परिपृष्टः **पुरुषः** षोडशकलः पुरुषो यस्मिन्हृदयपुण्डरीकस्थे पुरुष **एता** वक्ष्यमाणाः **षोडश** षोडशसंख्याकाः **कलाः** कं ब्रह्म लीयते तिरस्क्रियते याभिस्ताः । कलाः **प्रभवन्ति** प्रकर्षेण भवन्ति, यत उत्पद्य यस्मिन्वर्तन्ते लीयन्ते चेत्यर्थः । **इत्यनेन** प्रकारेण ॥ २ ॥

संक्षेपेणोक्त्वा विस्तरेणाऽऽह—**स** हृदयपुण्डरीकस्थः षोडशकलः पुरुष **ईक्षांचक्रे** चिन्तनं कृतवान् ॥ तच्चिन्तितमर्थमाह—**कस्मिन्नु*** विचारे केन नाम तत्त्वेन क्रियावताऽहमसङ्गोदासीनोऽद्वितीयः क्रियाकारकफलशून्यः स्वयंप्रकाशमान आनन्दात्मोत्क्रान्त

---

* क्वचिन्मूले "एनम्" इति पाठो वर्तते । + क्वचिन्मूले "ह वै" इति पाठः । * भाष्यकृता गुरुमन्दरादितः पाठ एव स्वीकृतः ।

उत्क्रान्तेनोर्ध्वं गतेन यथाश्रुतं वा कस्मिन्नुत्क्रामति सति, उत्क्रान्तो भविष्याम्यूर्ध्वं गतः स्याम्। कस्मिन्वा कस्मिंस्तत्स्थानान्तरे वाशब्दः क्रियान्तरनिर्देशार्थः। प्रतिष्ठितेऽवस्थिते। प्रतिष्ठास्यामि, अवस्थास्य इत्यनेन प्रकारेण विचिन्त्य प्राणस्य क्रिययाऽऽत्मनि क्रियामवलोक्य च ॥ ३ ॥

सोऽन्यक्रिययाऽऽत्मनि क्रियाकामी षोडशकलः पुरुषः प्राणमाधिदैविकं सर्वप्राणिसूत्रभूतमसृजत्तोत्पादितवान् ॥ तावता च संसारयात्राया निर्वाहमपश्यञ्श्रद्धाद्या अप्यन्याः पञ्चदश कलाः समसर्जेत्याह—प्राणात्सूक्ष्माद्धिरण्यगर्भोद्भूतसूक्ष्मात्सर्वकारणाद्ब्रह्मणः प्रथमजाच्छ्रद्धामास्तिक्यबुद्धिमसृजतेत्यनुवर्तते ॥ इदानीं शेषाण्यपि गणयति—खं वायुर्ज्योतिरापः पृथिवी, स्थूलानि पञ्च महाभूतानि । इन्द्रियं मनः, भौतिकं ज्ञानकर्माख्यं चक्षुरादिकं वागादिकं च दशकमिन्द्रियं मनोऽन्तःकरणमन्नं प्रसिद्धं व्रीह्यादिकमदनीयमन्नादन्नात्तद्वीर्यं शरीरेन्द्रियसामर्थ्यं तपः शरीरशोषणादिरूपं मन्त्रा ऋग्यजुःसामाथर्वाङ्गिरसः कर्म ज्योतिष्टोमादिरूपं लोकाः कर्मफलभूताः सोमलोकाद्या लोकेषु चोक्तेषु चशब्दादन्येष्वपि नाम [ च ] देवदत्तो यज्ञदत्त इत्यादि नामधेयम् ॥ ४ ॥

इदानीं पुरुषस्यास्य निमित्तमात्रत्वं न तूपादानत्वमितीमां शङ्कां वारयितुं दृष्टान्तेन षोडशकलानां पुरुष उपसंहारमाह—स दृष्टान्तः, यथा दृष्टान्त इमाः प्रत्यक्षा नद्यो गङ्गाद्याः सरितः स्यन्दमानाः स्रवन्त्यः समुद्रायणाः समुद्रे गमनं यासां ताः समुद्रायणाः समुद्रं सिन्धुराजं प्राप्य तादात्म्येन संबध्यास्तं गच्छन्ति अदर्शनं प्राप्नुवन्ति ॥ अस्तगमनं स्वयमाह—भिद्येते विनश्येते ता(स्यनस्ता)सां नदीनां नामरूपे गङ्गेत्यादिकं नाम शुभ्रमधुरनीलत्वादिकं रूपं नाम च रूपं च नामरूपे। नामरूपभेदानन्तरं समुद्रः शब्दानुकरणमिति, अनुकरणार्थः । एवमनेन प्रकारेण प्रोच्यते प्रकर्षेण कथ्यते। एवमेवानेनैव प्रकारेणास्य षोडशकलस्य पुरुषस्य परिद्रष्टुः सर्वतः सर्वसाक्षिण इमाः प्राणाद्या नामान्ताः षोडश कला अनात्मगतम् पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चाऽऽसां नामरूपे पुरुष इत्येवं प्रोच्यते। समुद्रस्थले पुरुषेति तासामितिस्थले चाऽऽसामिति पाठतो विशेषः । ततः समुद्रनदीवाक्यवत्पुरुषकलावाक्यं व्याख्येयम्। नदीनां सर्वैः प्राणिभिः प्रत्यक्षीकर्तुमशक्यत्वात्तासामिति निर्देशः । कलानां च प्रतिप्राणिप्रत्यक्षत्वादासामिति । चकारः कैमुतन्यायार्थः । नदीनामसमुद्रजानामपि समुद्रे लयो दृष्टः किमुत पुरुषजानां कलानां पुरुषे लय इति । न चानेनैव निदर्शनेन पुरुषस्यानुपादानत्वं, लयमात्रत्वस्य निदर्शनत्वात्। विवक्षितांशपरित्यागेनान्यत्र निदर्शनाङ्गीकारे सर्वत्रातिप्रसङ्गात्। स कलोपादान एष बुद्धेर्द्रष्टाऽकलो वस्तुतः कलारहितोऽ-*

---

* 'भविष्यामि' इत्येतदत्र इतिकर्त्तव्योऽधिकः क्वचिन्मूले।

**मृतोऽ**विद्यातत्कार्यतत्संस्कारमरणहेतुशून्यो भवति स्पष्टम्। तत्तस्मिन्षोडशकलाधारेऽ**कले पुरुष एष श्लोको** [ व्याख्यातम् ] ॥ ५ ॥

**अरा इव रथनाभौ** व्याख्यातं, **कला यस्मिन्प्रतिष्ठिताः** स्पष्टम् । **तं** कलाधा**वेद्यं** वेदनीयं साक्षात्करणीयं **पुरुषं** परिपूर्णं **वेद***यथा हे शिष्या मद्वचनोदवगच्छतान्ये यूयं मद्भ्यः स्वशिष्येभ्यो वेदयत ब्रह्मविद्यासंप्रदायं प्रवर्तयतेत्यर्थः । ब्रह्मविद्यासंप्रदायप्रवर्तनेऽस्माकं संसारो भविष्यतीति भीतिं मा कुरुत भवतामयं मया वरो द**इत्याह—मा वो मृत्युः परिव्यथा** वो युष्मान्ब्रह्मविद्यासंप्रदायप्रवर्तकान्मृत्युर्विपरीत**ज्ञानरूपो** मा परिव्यथा मा परिव्यथयतु । अथवा वेदयथ(था) जानीथ ॥ तज्ज्ञा**लाभमाह—वो** ब्रह्मज्ञानिनो मृत्युर्मा परिव्यथाः ॥ इदानीं श्रुतिराह—**इत्य**नेन प्रकारेण ॥ ६ ॥

**तान्भारद्वाज**सत्यकामगार्ग्याश्वलायनवैदर्भिकात्यायनान्ह किलोवाचोक्तवानेतावदे**वेत्थमेवाहं** पिप्पलाद **एतत्परं ब्रह्म** व्याख्यातं **वेद** जानामि ॥ एवशब्दव्यावर्त्यं स्वय**माह—नातः परमस्ति,** अतोऽस्मादुक्ताद्ब्रह्मज्ञानात्परमधिकं मम वाऽन्यस्य वा नास्ति [ इति श्लोकसमाप्तौ ] ॥ ७ ॥

**एवं** पिप्पलादेनोक्ते सति **ते** पिप्पलादशिष्या भारद्वाजादयस्तं स्वगुरुं पिप्पलाद**मर्चयन्तो** मनोवाक्कायैर्यथोचितं पूजयन्त इदमुक्तवन्त इत्याह—**त्वं** पिप्पलाद(दो) **हि निश्चितं नो**ऽस्माकं भारद्वाजादीनां **पिता** जनकः । पितृत्व उपपत्तिमाह—**यः प्रसिद्धो गुरुरस्माकं** भारद्वाजादीनामविद्याया आवरणविक्षेपशक्तेः सर्वानर्थमूलायाः **परं पार**मगाधजलायाः सिन्धोरिव परतीरमविद्यालेशशून्यमानन्दात्मानमित्यर्थः । **तारयसि** दर्शयसि । इत्यनेन प्रकारेण । **नमो** नमस्कारः **परमर्षिभ्य** उत्कृष्टेभ्योऽतीन्द्रियब्रह्मविद्यासंप्रदायकर्तृभ्यो ब्रह्मादिभ्यः । **नमः परमर्षिभ्यो** व्याख्यातम् । वाक्याभ्यास उपनिषत्परिसमाप्त्यर्थः ॥ ८ ॥

इति प्रश्नोपनिषदि षष्ठः प्रश्नः ॥ ६ ॥

## इति श्रीमदानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ प्रश्नोपनिषद्दीपिका समाप्ता ॥

---

* भाष्ये 'वेद यथा' इति पृथक्पदे ।

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९

# मुण्डकोपनिषत्

आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता ।

तथा

नारायणविरचिता मुण्डकोपनिषद्दीपिका च ।

पुस्तकद्वयमेतदानन्दाश्रमस्थपण्डितैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

द्वितीयेयं मुद्रणावृत्तिः ।

शालिवाहनशकाब्दाः १८१८

खिस्ताब्दाः १८९६



मूल्यं दशाऽऽणकाः ।

# आदर्शपुस्तकोल्लेखपत्रिका ।

---

अथास्या मुण्डकोपनिषद् आदर्शपुस्तकानि यैः संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च प्रदर्श्यन्ते ।

( क. ) इति संज्ञिता—मुण्डकोपनिषत्सटीकभाष्योपेता बिब्लिओथिका इण्डिकेत्याख्यग्रन्थावल्यां मुद्रिता, पुण्यपत्तननिवासिनां कै० वे० शा० रा० रा० देवोपाह्वबालशास्त्रिणाम् ।

( ख. ) इति संज्ञिता—मुण्डकोपनिषत्सटीकभाष्योपेता, इन्दूरपुरनिवासिनां किबे इत्युपाह्वानां श्रीयुतानां रा. रा. भाऊसाहेब बाळासाहेब इत्येतेषाम् ।

( ग. ) इति संज्ञिता—मुण्डकोपनिषत्सटीकभाष्योपेता काश्यां शिलामुद्रिता, आनन्दाश्रमपुस्तकसंग्रहस्था । मुद्रणकालः—सं० १९४२ ।

( घ. ) इति संज्ञिता—मुण्डकोपनिषन्मूलमात्रा, पुण्यपत्तननिवासिनां श्रीयुतानां रा. रा. भाऊसाहेब नगरकर इत्येतेषाम् । लेखनकालः—शके १७०१ ।

( ङ. ) इति संज्ञिता—मुण्डकोपनिषत्सटीकभाष्योपेता, वटोदरनिवासिनां श्रीयुतानां पटवर्धनोपाह्वानां रा० रा० कृष्णराव भीमाशंकर इत्येतेषाम् ।

( च. ) इति संज्ञिता—मुण्डकोपनिषत्सटीकभाष्योपेता उज्जयिनीक्षेत्रनिवासिनां वे. शा. सं. रा. रा. सोरटीबुवा इत्येतेषाम् ।

( छ. ) इति संज्ञिता—मुण्डकोपनिषद्भाष्यटीका, उज्जयिनीक्षेत्रनिवासिनां आठवले इत्युपाह्वानां वे. रा. रा. रामचन्द्र भट्ट इत्येतेषाम् । लेखनकालः—शके १६३२ ।

( ज. ) इति संज्ञिता—मुण्डकोपनिषद्भाष्यसमेता, विंचूरपुरनिवासिनां श्रीयुतानां रा. रा. रावसाहेब अण्णासाहेब इत्येतेषाम् ।

( झ. ) इति संज्ञिता—मुण्डकोपनिषत्सटीकभाष्योपेता, वटोदरनिवासिनां श्रीयुतानां पटवर्धनोपाह्वानां रा. रा. कृष्णराव भीमाशंकर इत्येतेषाम् ।

( ञ. ) इति संज्ञिता—मुण्डकोपनिषत्सटीकभाष्योपेता नागपुरनिवासिनां श्रीयुतानां रा. रा. अप्पासाहेब बुटी इत्येतेषाम् ।

( ट. ) इति संज्ञिता—मुण्डकोपनिषत्सटीकभाष्योपेता करवीरपुरनिवासिनां श्रीमतां वे. शा. सं. गुरुमहाराजानाम् । लेखनकालः—संवत् १८७८ ।

( क. ) इति संज्ञिता—मुण्डकोपनिषद्दीपिका मुम्बापुरनिवासिनां वे. शा. सं रा. रा. जयकृष्णमहाराजानाम् ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

---

# मुण्डकोपनिषत् ।

## आनन्दगिरिकृतटीकासंवलितशांकरभाष्यसमेता ।

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
॥ ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ ब्रह्मा देवानामित्याद्याथर्वणोपनिषत् । अस्याश्च विद्यासंप्रदायकर्तृपारम्पर्यलक्षणसंबन्धमादावेवाऽऽह स्वयमेव स्तुत्यर्थम् । एवं हि महद्भिः परमपुरुषार्थ-

---

यदक्षरं परं ब्रह्म विद्यागम्यमितीरितम् ।
यस्मिञ्ज्ञाते भवेज्ज्ञातं सर्वं तत्स्यामसंशयम् ॥ १ ॥

ब्रह्मोपनिषद्गर्भोपनिषदाद्या अथर्वणवेदस्य बह्व्य उपनिषदः सन्ति । तासां शारीरकेऽनुपयोगित्वेनाव्याचिख्यासितत्वाददृश्यत्वादिगुणको धर्मोक्तेरित्याद्यधिकरणोपयोगितया मुण्डकस्य व्याचिख्यासितस्य प्रतीकमादत्ते—**ब्रह्मा देवानामित्याद्याथर्वणोपनिषदिति** । व्याचिख्यासितेति शेषः । नन्वियमुपनिषन्मन्त्ररूपा मन्त्राणां चेषे त्वेत्यादीनां कर्मसंबन्धेनैव प्रयोजनवत्त्वम् । एतेषां च मन्त्राणां कर्मसु विनियोजकप्रमाणानुपलम्भेन तत्संबन्धासंभवान्निष्प्रयोजनत्वाद्व्याचिख्यासितत्वं न संभवतीति शङ्कमानस्योत्तरम् । सत्यं कर्मसंबन्धाभावेऽपि ब्रह्मविद्याप्रकाशनसामर्थ्याद्विद्यया संबन्धो भविष्यति । ननु विद्यायाः पुरुषकर्तृकत्वात्तत्प्रकाशकत्वेऽस्या उपनिषदोऽपि पौरुषेयत्वप्रसङ्गात्पाक्षिकपुरुषदोषजत्वशङ्कयाऽप्रामाण्याद्व्याचिख्यासितत्वं नोपपद्यत इत्याशङ्क्याऽऽह[3]—**अस्याश्चेति** । विद्यायाः संप्रदायप्रवर्तका एव पुरुषा न तूत्प्रेक्षया निर्मातारः संप्रदायकर्तृत्वमपि नाधुनातनं येनानाश्वासः स्यात् । किंत्वनादिपारम्पर्यगतम् । ततोऽनादिप्रसिद्धब्रह्मविद्याप्रकाशनसमर्थोपनिषदः पुरुषसंबन्धः संप्रदायकर्तृत्वपारम्पर्यलक्षण एव तमादावेवाऽऽहेत्यर्थः । विद्यासंप्रदायकर्तृत्वमेव पुरुषाणाम् । यथा विद्यायाः पुरुषसंबन्धस्तथैवोपनिषदोऽपि । यदि पुरुषसंबन्धो विवक्षितः पौरुषेयत्वपरिहाराय तर्हि तथाभूतसंबन्धाभिधायकेनान्येन भवितव्यं स्वयमेव स्वसंबन्धाभिधायकत्वे स्ववृत्तिप्रसङ्गादित्याशङ्क्याऽऽह—**स्वयमेव स्तुत्यर्थमिति** ।

---

१ ङ. च. छ. 'नत्व' । २ ङ. च. झ. 'तव्यं न । ३ क. ख. 'त्याह । ४ ग. च. झ. 'धायिनाऽन्ये' । ५ क. ख. 'कत्व आत्माश्रयप्र' ।

**साधनत्वेन गुरुणाऽऽयासेन लब्धा विद्येति श्रोतृबुद्धिप्ररोचनाय विद्यां महीकरोति । स्तुत्या प्ररोचितायां हि विद्यायां सादराः प्रवर्तेरन्निति । प्रयोजनेन तु विद्यायाः साध्यसाधनलक्षणसंबन्धमुत्तरत्र वक्ष्यति—"भिद्यते हृदयग्रन्थिः" इत्यादिना । अत्र चापरशब्दवाच्यायामृग्वेदादिलक्षणायां विधिप्रतिषेधमात्रपरायां विद्यायां संसारकारणाविद्यादिदोषनिवर्तकत्वं नास्तीति स्वयमेवोक्त्वा परापरविद्याभेदकरणपूर्वकमविद्यायामन्तरे वर्तमाना इत्यादिना तथा परप्राप्तिसाधनं सर्वसाधनसाध्यविषयवैराग्यपूर्वकं गुरुप्रसादलभ्यां ब्रह्मविद्यामाह—परीक्ष्य लोकानित्यादिना । प्रयोजनं चासकृद्ब्रवीति ब्रह्म वेद ब्रह्मैव भवतीति ।**

---

विद्यास्तुतौ तात्पर्यान्न स्ववृत्तिर्दोष इत्यर्थः । स्तुतिर्वा किमर्थेत्यत आह—**श्रोतृबुद्धीति ।** प्रवर्तेरन्निति पाठो युक्तः । वृतुधातोरात्मनेपदित्वात् । विद्याया यत्प्रयोजनं तदेवास्या उपनिषदोऽपि प्रयोजनं भविष्यतीत्यभिप्रेत्य विद्यायाः प्रयोजनसंबन्धमाह—**प्रयोजनेन त्विति ।** संसारकारणनिवृत्तिर्ब्रह्मविद्याफलं चेत्तर्ह्यपरविद्ययैव तन्निवृत्तेः संभवान्न तदर्थं ब्रह्मविद्याप्रकाशकोपनिषद्व्याख्यातव्येत्याशङ्क्याऽऽह—**अत्र चेति ।** संसारकारणमविद्यादि दोषस्तन्निवर्तकत्वमपरविद्यायाः कर्मात्मिकाया न संभवत्यविरोधात् । न हि शतशोऽपि प्राणायामं कुर्वतः शुक्तिदर्शनं विना तदविद्यानिवृत्तिर्दृश्यते । ततोऽपरविद्यायाः संसारकारणाविद्यानिवर्तकत्वं नास्तीति स्वयमेवोक्त्वा ब्रह्मविद्यामाहेति संबन्धः । किंच परमपुरुषार्थसाधनत्वेन ब्रह्मविद्यायाः परविद्यात्वं निकृष्टसंसारफलत्वेन च कर्मविद्याया अपरविद्यात्वम् । ततः समाख्याबलादपरविद्याया मोक्षसाधनत्वाभावोऽवगम्यत इत्यभिप्रेत्याऽऽह—**परापरेति ।** यद्वाऽऽहुः कर्मजडाः केवलब्रह्मविद्यायाः कर्तृसंस्कारत्वेन कर्माङ्गत्वात्स्वातन्त्र्येण पुरुषार्थसाधनत्वं नास्तीति तदनन्तरश्रुत्यैव निराकृतमित्याह—**तथा परप्राप्तिसाधनमिति ।** ब्रह्मविद्यायाः कर्माङ्गत्वे कर्मणो निन्दा न स्यात् । न खल्वङ्गविधानाय प्रधानं विनिन्द्यते । अत्र तु सर्वसाध्यसाधननिन्दया तद्विषयवैराग्याभिधानपूर्वकं परप्राप्तिसाधनं ब्रह्मविद्यामाह । अतो ब्रह्मविद्यायाः स्वप्रधानत्वात्तत्प्रकाशकोपनिषदां न कर्तृस्तावकत्वमित्यर्थः । यद्युपनिषदां स्वतन्त्रब्रह्मविद्याप्रकाशकत्वं स्यात्तर्हि तदध्येतॄणां सर्वेषामेव किमिति ब्रह्मविद्या न स्यादित्याशङ्क्याऽऽह—**गुरुप्रसादलभ्यामिति ।** गुर्वनुग्रहादिसंस्काराभावात्सर्वेषां यद्यपि न भविष्यति तथाऽपि विशिष्टाधिकारिणां भविष्यतीति भावः । ननु स्वतन्त्रा चेद्ब्रह्मविद्या तर्हि प्रयोजनसाधनं न स्यात् । सुखदुःखप्राप्तिपरिहारयोः प्रवृत्तिनिवृत्तिसाध्यतावगमात्तत्राऽऽह—**प्रयोजनं चेति ।** स्मरणमात्रेण विस्मृत-

---

१ क. ग. ङ. च. ज. ञ. 'र्तेयुरिति । २ क. ख. साधनसाध्यल' । ३ क. 'परेति वि' । ४ क. 'ह्मविद्यै' । ५ ङ. च. ञ. 'रणानि' । ६ ङ. च. ञ. तत्र ।

परामृताः परिमुच्यन्ति सर्वे इति च । ज्ञानमात्रे यद्यपि सर्वाश्रमिणामधिकार-स्तथाऽपि संन्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधनं न कर्मसहितेति भैक्ष्यचर्यां चरन्तः संन्यासयोगादिति च ब्रुवन्दर्शयति । विद्याकर्मविरोधाच्च । न हि ब्रह्मात्मैकत्वदर्शनेन सह कर्म स्वप्नेऽपि संपादयितुं शक्यम् । विद्यायाः कालविशेषाभावादनियतनिमित्तत्वात्कालसंकोचानुपपत्तिः । यत्तु गृहस्थेषु ब्रह्मविद्यासंप्रदायकर्तृत्वादि लिङ्गं न तत्स्थितन्यायं बाधितुमुत्सहते । न हि विधिशते-

---

सुवर्णलाभे सुखप्राप्तिप्रसिद्धे रज्जुतत्त्वज्ञानमात्राच्च सर्पजन्यभयकम्पादिदुःखनिवृत्तिप्रसिद्धेश्च न प्रवृत्तिनिवृत्तिसाध्यत्वं प्रयोजनस्यैकान्तिकम् । अतो विश्रब्धं श्रुतिः प्रयोजनसंबन्धं विद्याया असकृद्ब्रवीति । तस्मात्तत्प्रकाशकोपनिषदो व्याख्येयत्वं संभवतीत्यर्थः । यच्चाऽऽहुरेकदेशिनः स्वाध्यायाध्ययनविधेरर्थावबोधफलस्य त्रैवर्णिकाधिकारत्वादधीतोपनिषज्जन्ये ब्रह्मज्ञानेऽस्त्येव सर्वेषामधिकारः । ततः सर्वाश्रमकर्मसमुच्चितैव ब्रह्मविद्या मोक्षसाधनमिति तत्राऽऽह—**ज्ञानमात्र इति** । सर्वस्वत्यागात्मकसंन्यासनिष्ठैव परब्रह्मविद्या मोक्षसाधनमिति वेदो दर्शयति । तादृशसंन्यासिनां च कर्मसाधनस्य स्वस्याभावान्न कर्मसंभवः । आश्रमधर्मोऽपि शमदमाद्युपबृंहितविद्याभ्यासनिष्ठत्वमेव । तेषां शौचाचमनादिरपि तत्त्वतो नाऽऽश्रमधर्मो लोकसंग्रहार्थत्वात् । ज्ञानाभ्यासेनैवापावनत्वनिवृत्तेः "न हि ज्ञानेन सदृशं पवित्रमिह विद्यते" इति स्मरणात् । त्रिषवणस्नानविध्यादेरज्ञसंन्यासिविषयत्वात् । अतः कर्मनिवृत्त्यैव साहित्यं ज्ञानस्य न कर्मणेत्यर्थः । इतश्च न कर्मसमुच्चिता विद्या मोक्षसाधनमित्याह—**विद्याकर्मविरोधाच्चेति** । अकर्तृ ब्रह्मैवास्मीति करोमि चेति स्फुटो व्याघात इत्यर्थः । यदा ब्रह्मात्मैकत्वं विस्मरति तदोत्पन्नविद्योऽपि करिष्यति ततः समुच्चयः संभाव्येत इति न वाच्यमित्याह—**विद्याया इति** । ननु गृहस्थानामङ्गिरःप्रभृतीनां विद्यासंप्रदायप्रवर्तकत्वदर्शनाद्गृहस्थाश्रमकर्मभिः समुच्चयो लिङ्गादवगम्यत इत्याशङ्क्याऽऽह—**यत्त्विति** । लिङ्गस्य न्यायोपबृंहितस्यैव गमकत्वाङ्गीकारात्समुच्चये च न्यायाभावात्प्रत्युत विरोधदर्शनान्न लिङ्गेन समुच्चयसिद्धिः । संप्रदायप्रवर्तकानां च गार्हस्थ्यस्याऽऽभासमात्रत्वात्तत्त्वानुसंधानेन मुहुर्मुहुर्बाधात् ।

"यस्य मे चास्ति सर्वत्र यस्य मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे किंचन दह्यते"

इत्युद्गारदर्शनात्कर्माभासेन न समुच्चयः स्यात्तत्र च विधिर्न दृश्यत इति भावः ।

---

१ क. ख. 'मृतात्परि' । २ क. ज. भैक्षच' । ३ क. ख. 'लकर्मसं' । ४ ग. क. ख. 'नस्या' । ग. 'नस्य धनस्या' । ५ क. 'मेण इत्य' । ६ क. 'व्य इ' । ७ क. ख. 'त्वानु' ।

नापि तमःप्रकाशयोरेकत्वसद्भावः शक्यते कर्तुं किमुत लिङ्गैः केवलैरिति। एवमुक्तसंबन्धप्रयोजनाया उपनिषदो[2]ऽल्पाक्षरं ग्रन्थविवरणमारभ्यते । य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयत्यविद्यादिसंसारकारणं चात्यन्तमवसादयति विनाशयतीत्युपनिषत् । उपनिपूर्वस्य सदेरेवमर्थस्मरणात् ।

**ॐ ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥**

ब्रह्मापरिवृढो महान्धर्मज्ञानवैराग्यैश्वर्यैः सर्वानन्यानतिशेत[4] इति। देवानां द्योतनवतामिन्द्रादीनां प्रथमो गुणैः प्रधानः सन्प्रथमोऽग्रे वा संबभूवाभिव्यक्तः सम्यक्स्वातन्त्र्येणेत्यभिप्रायः। न तथा यथा धर्माधर्मवशात्संसारिणोऽन्ये जायन्ते। "योऽसावतीन्द्रियोऽग्राह्यः" इत्यादिस्मृतेः। विश्वस्य सर्वस्य जगतः कर्तोत्पादयिता। भुवनस्योत्पन्नस्य गोप्ता पालयितेति विशेषणं ब्रह्मणो विद्यास्तुतये। स एवं प्रख्यातमहत्त्वो ब्रह्मा ब्रह्मविद्यां ब्रह्मणः परमात्मनो विद्यां ब्रह्मविद्यां 'येनाक्षरं पुरुषं वेद सत्यम्' इति विशेषणात्परमात्मविषया हि सा। ब्रह्मणा वाऽग्रजेनोक्तेति ब्रह्मविद्या । तां सर्वविद्याप्रतिष्ठां सर्वविद्याभिव्यक्तिहेतुत्वा-

साधितं व्याख्येयत्वमुपसंहरति—एवमिति । ग्रन्थे कथमुपनिषच्छब्दप्रयोग इति शङ्कायामुपनिषच्छब्दवाच्यविद्यार्थत्वाल्लाक्षणिक इति दर्शयितुं विद्याया उपनिषच्छब्दार्थत्वमाह—य इमामिति। आत्मभावेनेति। प्रेमास्पदतयेत्यर्थः। अनर्थपूगं क्लेशसमूहं निशातयति शिथिलीकरोत्यपरिपक्वज्ञानाद्वित्रैर्जन्मभिर्मोक्षसंभवादित्यर्थः।

"ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः।
ऐश्वर्यं चैव धर्मश्च सह सिद्धं चतुष्टयम्" ॥

इति स्मरणाद्धर्मज्ञानवैराग्यैश्वर्यैः सर्वानन्यानतिक्रम्य वर्तत इति परिवृढत्वं सिद्धमित्यर्थः।

"योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः।
सर्वभूतमयोऽचिन्त्यः स एष स्वयमुद्बभौ" ॥

---

१ क. °कश्च संभवः। ख. °कश्च स°। २ क. ज. °दोऽल्पग्र°। ३ क. °वृद्धो म°। ४ क. °तिशयेनेति। ५ क. °तिषे य°। ६ क. °वृढत्वं।

त्सर्वविद्याश्रयामित्यर्थः। सर्वैर्विभिर्... ...न्दो गवेज्ञायत इति। "येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं ... इति श्रुतेः। सर्वविद्याप्रतिष्ठामिति च स्तौति। विद्यामथर्वाय ज्येष्ठपुत्राय प्राह ... ज्येष्ठश्चासौ पुत्रश्चानेकेषु ब्रह्मणः सृष्टिप्रकारेष्वन्यतमस्य सृष्टिप्रकारस्य प्रावस्थे पूर्वमथर्वा सृष्ट इति ज्येष्ठस्तस्मै ज्येष्ठपुत्राय प्राहोक्तवान् ॥ १ ॥

अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम्। स भारद्वाजाय सत्यवहाय[1] प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥

यामेतामथर्वणे प्रवदेतावदद्ब्रह्म। वेद्यां ब्रह्मा तामेव ब्रह्मणः प्राप्तामथर्वा पुरा पूर्वमुवाचोक्तवानङ्गिरेऽङ्गिर्नाम्ने ब्रह्मविद्याम्। स चाङ्गिर्भारद्वाजाय भरद्वाजगोत्राय सत्यवहाय[2] सत्यवहनाम्ने[3] प्राह प्रोक्तवान्। भारद्वाजोऽङ्गिरसे स्वशिष्याय पुत्राय वा परावरां परस्मात्परस्मादवरेण प्राप्तेति परावरा परावरसर्वविद्याविषयव्याप्तेर्वा तां परावरामङ्गिरसे प्राहेत्यनुषङ्गः ॥ २ ॥

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ। कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥

शौनकः शुनकस्यापत्यं महाशालो महागृहस्थोऽङ्गिरसं भारद्वाजशिष्यमाचार्यं विधिवद्यथाशास्त्रमित्येतत्। उपसन्न उपगतः सन्पप्रच्छ पृष्टवान्। शौनकाङ्गिरसोः[4] संबन्धादर्वाग्विधिवद्विशेषणादुपसदनविधेः पूर्वेषामनियम इति गम्यते। मर्यादाकरणार्थं मध्यदीपिकान्यायार्थं वा विशेषणम्। अस्मदादिष्वप्युपसदनविधेरिष्टत्वात्। किमित्याह कस्मिन्नु भगवो विज्ञाते नु इति वितर्के भगवो हे भगवन्सर्वं यदिदं विज्ञेयं विज्ञातं विशेषेण ज्ञातमवगतं भवतीत्येकस्मिञ्ज्ञाते

'स्वयमुद्भूतः शुक्रशोणितसंयोगमन्तरेणाऽऽविर्भूतः'—इति स्मृतेः स्वातन्त्र्यं गम्यत इत्यर्थः। वाक्योत्थबुद्धिवृत्त्यभिव्यक्तं ब्रह्मैव ब्रह्मविद्या। तच्च ब्रह्म सर्वाभिव्यञ्जकम्। ततः सर्वविद्यानां व्यञ्जकतयाऽऽश्रीयत इति सर्वविद्याश्रयाऽथवा सर्वविद्यानां प्रतिष्ठा परिसमाप्तिर्भवति यस्यामुत्पन्नायां ज्ञातव्याभावात्सा सर्वविद्याप्रतिष्ठेत्याह—सर्वविद्यावेद्यं वेति ॥ १ ॥ २ ॥

प्रश्नबीजमाहैं—एकस्मिन्निति। उपादानात्कार्यस्य पृथक्सत्त्वाभावादुपादाने ज्ञाते

१ क. °त्यवाहा°। २ क. ज. °त्यवाहा°। ३ क. °त्यवाह°। ४ क. भ. क. घ. ङ. °रसयोः सं°। ५ क. च. °ह—के°।

सर्वविद्भवतीति शिष्टप्रवादसद्भावः शक्यते कर्तुं विशेषं विज्ञातुकामः सन्कस्मि-न्निति वितर्कयन्पप्रच्छ । अथवा सर्वज्ञोऽल्पाक्षरं पृष्टया ज्ञात्वैव पप्रच्छ । सन्ति लोके सुवर्णादिशकलभेदाः सुवर्णत्वाद्येकत्वविज्ञानेन विज्ञायमाना लौकिकैः । तथा किन्वस्ति सर्वस्य जगद्भेदस्यैकं कारणम् । यदेकस्मिन्विज्ञाते सर्वं विज्ञातं भवतीति । नन्वविदिते हि कस्मिन्निति प्रश्नोऽनुपपन्नः । किमस्ति तदिति तदा प्रश्नो युक्तः । सिद्धे ह्यस्तित्वे कस्मिन्निति स्यात् । यथा कस्मिन्निधेयमिति । नाक्षरबाहुल्यादायासभीरुत्वात्प्रश्नः संभवत्येव किंत्वेकस्मिन्विज्ञाते सर्ववि-त्स्यादिति ॥ ३ ॥

तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च ॥४॥

तस्मै शौनकायाङ्गिरा आह किलोवाच । किमित्युच्यते । द्वे विद्ये वेदितव्ये इति । एवं ह स्म किल यद्ब्रह्मविदो वेदार्थाभिज्ञाः परमार्थदर्शिनो वदन्ति । के ते इत्याह । परा च परमात्मविद्या । अपरा च धर्माधर्मसाधनतत्फलवि-षया । ननु कस्मिन्विदिते सर्वविद्भवतीति शौनकेन पृष्टं तस्मिन्वक्तव्येऽपृष्ट-माहाङ्गिरा द्वे विद्ये इत्यादिना । एष दोषः क्रमापेक्षत्वात्प्रतिवचनस्य । अपरा हि विद्याऽविद्या सा निराकर्तव्या । तद्विषये हि विदिते न किंचि-त्तत्त्वतो विदितं स्यादिति निराकृत्य हि पूर्वपक्षं पश्चात्सिद्धान्तो वक्तव्यो भवतीति न्यायात् ॥ ४ ॥

तत्रापरा, ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योति-षमिति । अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥

तत्र काऽपरेत्युच्यते । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इत्येते चत्वारो

---

तत्कार्यं ततः पृथङ्नास्तीति ज्ञातं भवतीति सामान्यव्याप्तिस्तद्बलाद्वा पप्रच्छेत्याह—अथवेति । प्रश्नाक्षराजस्यमाक्षिप्य समाधत्ते—नन्वविदिते हीत्यादिना । किमस्ति तदिति प्रयोगेऽक्षरबाहुल्येनाऽऽयासः स्यात्तद्भीरुतया कस्मिन्नित्यक्षराजस्ये लाघवा-त्प्रश्न इत्यर्थः ॥ ३ ॥ ४ ॥

कल्पः सूत्रग्रन्थः । अनुष्ठेयक्रमः कल्प इत्यर्थः । अविद्याया अपगम एव पर-

---

१ क. 'के सवर्णादिसक' । २ क. 'दाः सव' । ३ क. ख. 'किं त्वस्ति तद्यस्मिन्नेक' । ४ क. 'तत्त्वं नो वि' ।

वेदाः। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि षडे-षाऽपरा विद्या। अथेदानीमियं परा विद्योच्यते यया तद्वक्ष्यमाणविशेषण-मक्षरमधिगम्यते प्राप्यते। अधिपूर्वस्य गमेः प्रायशः प्राप्त्यर्थत्वात्। न च परप्राप्तेरवगमार्थस्य भेदोऽस्ति। अविद्याया अपाय एव हि परप्राप्तिर्नार्था-न्तरम्। ननु ऋग्वेदादिबाह्या तर्हि सा कथं परा विद्या स्यान्मोक्षसाधनं च। या वेदबाह्याः स्मृतय इति हि स्मरन्ति। कुदृष्टित्वान्निष्फलत्वादनादेया स्यात्। उपनिषदां च ऋग्वेदादिबाह्यत्वं स्यात्। ऋग्वेदादित्वे तु पृथक्करणमनर्थकम्। अथ कथं परेति न वेद्यविषयविज्ञानस्य विवक्षितत्वात्। उपनिषद्वेद्याक्षरविषयं हि विज्ञानमिह परा विद्येति प्राधान्येन विवक्षितं नोपनिषच्छब्दराशिः। वेद-शब्देन तु सर्वत्र शब्दराशिर्विवक्षितः। शब्दराश्यधिगमेऽपि यत्नान्तरमन्तरेण गुर्वभिगमनादिलक्षणं वैराग्यं च नाक्षराधिगमः संभवतीति पृथक्करणं ब्रह्मवि-द्यायाः परा विद्येति कथनं चेति ॥ ५ ॥

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तद-पाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तद-व्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥

यथा विधिविषये कर्त्राद्यनेककारकोपसंहारद्वारेण वाक्यार्थज्ञानकालादन्य-त्रानुष्ठेयोऽर्थोऽस्त्यग्निहोत्रादिलक्षणो न तथेह परविद्याविषये वाक्यार्थज्ञान-समकाल एव तु पर्यवसितो भवति। केवलशब्दप्रकाशितार्थज्ञानमात्रनिष्ठाव्य-

---

प्राप्तिरुपचर्यते। अविद्यापगमश्च ब्रह्मावगतिरेवेति व्याख्यातमस्माभिः। ज्ञातोऽर्थस्तज्ज्ञ-प्तिर्वाऽविद्यानिवृत्तिरित्येतद्व्याख्यानावसरेऽतोऽधिगमशब्दोऽत्र प्राप्तिपर्याय एवेत्याह— **न च परप्राप्तेरिति**। साङ्गानां वेदानामपरविद्यात्वेनोपन्यासात्तः पृथक्करणाद्वेदबाह्य-तया ब्रह्मविद्यायाः परत्वं न संभवतीत्याक्षिपति—**नन्विति**।

"या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः" इति स्मृतेः

कुदृष्टित्वादनुपादेया स्यादित्यर्थः। विद्याया वेदबाह्यत्वे तदर्थानामुपनिषदाम-प्यृग्वेदादिबाह्यत्वं प्रसज्येतेत्यर्थः। वेदबाह्यत्वेन पृथक्करणं न भवति। किंतु वैदिक-स्यापि ज्ञानस्य वस्तुविषयस्य शब्दराश्यतिरेकाभिप्रायेणेत्याह—**न वेद्यविषयेति** ॥५॥

कर्मज्ञानाद्विलक्षणत्वाभिप्रायेण च पृथक्करणमित्याह—**यथा विधिविषय इति**।

---

१ क. ख. 'गम्येऽपि। २ क. न संभ'। ३ क. 'ति। वैराग्यं चेत्यत्र यत्नान्तरमिति शेषो द्रष्टव्यः॥ ५॥

तिरिक्ताभावात्। तस्मादिह पर[illegible]ः शक्यते कर्तुं [illegible]शेष[illegible]रेण विशिनष्टि—यत्तदद्रेश्यमित्यादिना। [illegible]वक्ष्यमाणं [illegible]पा[illegible] [illegible]वत्परामृश्यते—यत्तदिति। अद्रेश्यमदृश्यं सर्वेषां बुद्धीन्द्रियाणाम[illegible]यमित्य[illegible]त्। दृशेर्बहिष्प्रवृत्तस्य पञ्चेन्द्रियद्वारकत्वात्। अग्राह्यं कर्मेन्द्रियाविषयमित्येतत्। अगोत्रं गोत्रमन्वयो मूलमित्यनर्थान्तरम्। अगोत्रमनन्वयमित्यर्थः। न हि तस्य मूलमस्ति येनान्वितं स्यात्। वर्ण्यन्त इति वर्णा द्रव्यधर्माः स्थूलत्वादयः शुक्लत्वादयो वा। अविद्यमाना वर्णा यस्य तदवर्णमक्षरम्। अचक्षुःश्रोत्रं चक्षुश्च श्रोत्रं च नामरूपविषये करणे सर्वजन्तूनां ते अविद्यमाने यस्य तदचक्षुःश्रोत्रम्। यः सर्वज्ञः सर्वविदित्यादिचेतनावत्त्वविशेषणत्वात्प्राप्तं संसारिणामिव चक्षुःश्रोत्रादिभिः करणैरर्थसाधकत्वं तदिहाचक्षुःश्रोत्रमिति वार्यते "पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिदर्शनात्। किंच तदपाणिपादं कर्मेन्द्रियरहितमित्येतत्। यत एवमग्राह्यमग्राहकं चातो नित्यमविनाशि। विभुं विविधं ब्रह्मादिस्थावरान्तप्राणिभेदैर्भवतीति विभुम्। सर्वगतं व्यापकमाकाशवत्सुसूक्ष्मं शब्दादिस्थूलत्वकारणरहितत्वात्। शब्दादयो ह्याकाशवाय्वादीनामुत्तरोत्तरं स्थूलत्वकारणानि तदभावात्सुसूक्ष्मम्। किंच तदव्ययमुक्तधर्मत्वादेव न व्येतीत्यव्ययम्। न ह्यनङ्गस्य स्वाङ्गापचयलक्षणो व्ययः संभवति शरीरस्येव। नापि कोशापचयलक्षणो[1] व्ययः संभवति राज्ञ इव। नापि गुणद्वारको व्ययः संभवत्यगुणत्वात्सर्वात्मकत्वाच्च। यदेवंलक्षणं भूतयोनिं भूतानां कारणं पृथिवीव स्थावरजङ्गमानां परिपश्यन्ति सर्वत आत्मभूतं सर्वस्याक्षरं पश्यन्ति धीरा धीमन्तो विवेकिनः। ईदृशमक्षरं यया विद्ययाऽधिगम्यते सा परा विद्येति समुदायार्थः॥ ६॥

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति। यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम्॥ ७॥

भूतयोन्यक्षरमित्युक्तं तत्कथं भूतयोनित्वमित्युच्यते प्रसिद्धदृष्टान्तैः।

---

अप्राप्ते[2] प्रतिषेधप्रसङ्गान्न प्रधानपरत्वमपि शङ्कनीयमिति मत्वाऽऽह—यः सर्वज्ञ इति। अगुणत्वादिति। उपसर्जनरहितत्वादित्यर्थः। सर्वात्मकत्वाच्चेति। हेयस्यातिरिक्तस्याभावाच्चेत्यर्थः॥ ६॥

ब्रह्म न कारणं सहायशून्यत्वात्कुलालमात्रवदित्यस्यानैकान्तिकत्वमुक्तमूर्णनाभि-

---

१ क. कोषाप°। २ क. ग. 'प्रातप्र°'।

यथा लोके प्रसिद्धम् । ऊर्णनाभिर् [illegible] वा किंचित्कारणान्तरमनपेक्ष्य स्वय-मेव सृजते स्वशरीराव्यतिरिक्त [illegible] गति पुनस्तानेव गृह्णते च गृह्णाति स्वात्मभावमेवा ऽपा [illegible] वस्त्वेव्यामोषधयो व्रीह्यादिस्था-वरान्त [illegible] त्यर्थः । स्वात्माव्यति [illegible] ज्ञातम [illegible] । यथा च सतो विद्यमा-नाज्जीवतः पुरुषात्केशलोमानि [illegible] संभवन्ति विलक्षणानि । यथैते[2] दृष्टान्तास्तथा विलक्षणं सल [illegible] ान्तरा [illegible] पेक्षाद्यथोक्तलक्षणा-दक्षरात्संभवति समुत्पद्यत इह संसारमण्डले विश्वं समस्तं जगत् । अनेकदृष्टा-न्तोपादानं तु सुखार्थप्रबोधनार्थम् । यद्ब्रह्मण उत्पद्यमानं विश्वं तदनेन क्रमे-णोत्पद्यते न युगपद्बदरमुष्टिप्रक्षेपवदिति ॥ ७ ॥

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्ना-त्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥ ८ ॥

क्रमनियमविवक्षार्थोऽयं मन्त्र आरभ्यते । तपसा ज्ञानेनोत्पत्तिविधिज्ञ-तया भूतयोन्यक्षरं ब्रह्म चीयत उपचीयत उत्पिपादयिषदिदं जगदङ्कुरमिव बीजमुच्छूनतां[3] गच्छति पुत्रमिव पिता हर्षेण । एवं सर्वज्ञतया सृष्टिस्थितिसंहा-रशक्तिविज्ञानवत्तयोपचितात्ततो ब्रह्मणोऽन्नमद्यते[4] भुज्यत इत्यन्नमव्याकृतं साधारणं संसारिणां व्याचिकीर्षितावस्थारूपेणाभिजायत उत्पद्यते । ततश्चा-

---

दृष्टान्तेन । ब्रह्म जगतो नोपादानं तदभिन्नत्वात्स्वरूपस्यैवेत्यनुमानान्तरस्यानैकान्तिक-त्वमाह—यथा च पृथिव्यामिति । जगन्न ब्रह्मोपादानं तद्विलक्षणत्वात् । यद्यद्वि-लक्षणं तत्तदुपादानकं न भवति । यथा घटो न तन्तूपादानक इति । अस्य व्यभि-चारार्थमाह—यथा च सत इति । एकस्मिन्नपि दृष्टान्ते सर्वानुमानानामनैकान्तिकत्वं योजयितुं शक्यमिति शङ्कमानं प्रत्याह—अनेकदृष्टान्तेति ॥ ७ ॥

ईश्वरत्वोपाधिभूतं मायातत्त्वं महाभूतादिरूपेण सर्वजीवैरुपलभ्यत इति सर्वसाधार-ण्येऽपि कथं जायतेऽनादिसिद्धत्वादित्याशङ्क्याऽऽह—व्याचिकीर्षितेति । कर्मापूर्व-समवायिभूतसूक्ष्ममव्याकृतमिति केचित् । तन्न तस्य प्रतिजीवं भिन्नत्वादीश्वरत्वोपाधि-त्वासंभवात् । सामान्यरूपेण संभवेऽपि पृथिव्यादिसामान्यानां बहुत्वात् । प्रकृतावेक-त्वश्रुतिव्याकोपापाताज्जाड्यमहामायारूपेणैव संभवेऽपि न कर्मापूर्वसमवायित्वम् । तस्याकारकत्वाद्द्रव्यादीनामेव कारकत्वाभिधानात् । कारकावयवेष्वेव क्रियासमवाया-भ्युपगमात् । किंच न कार्यस्य स्वकारणप्रकृतित्वं दृष्टमिति भूतसूक्ष्मस्यापञ्चीकृतं-

---

१ क. °न्ताः । स्वा° । २ क. °थैतदृष्टान्तस्त° । ३ क. °मुच्छून्यतां । ग. ङ. च. झ. ञ. °मुत्सून° । ४ क. °रणोऽपि । ५ ग. ङ. ञ. °क्षमस्य प° । ६ क. °तपश्चकम्° ।

व्याकृताद्व्याचिकीर्षितावस्थातोऽन्नात्प्राणो हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठितजगत्साधारणोऽविद्याकामकर्मभूतसमुदायबीजाङ्कुरो जगदात्माऽभिजायत इत्यनुषङ्गः। तस्माच्च प्राणान्मनो मनआख्यं संकल्पविकल्पसंशयनिर्णयाद्यात्मकमभिजायते। ततोऽपि संकल्पाद्यात्मकान्मनसः सत्यं सत्याख्यमाकाशादिभूतपञ्चकमभिजायते। तस्मात्सत्याख्याद्भूतपञ्चकादण्डक्रमेण सप्तलोका भूरादयः। तेषु मनुष्यादिप्राणिवर्णाश्रमक्रमेण कर्माणि। कर्मसु च निमित्तभूतेष्वमृतं कर्मजं फलम्। यावत्कर्माणि कल्पकोटिशतैरपि न विनश्यन्ति तावत्फलं न विनश्यतीत्यमृतम् ॥ ८ ॥

**यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मा-**
**देतद्ब्रह्म नाम रूपमन्नं च जायते ॥ ९ ॥**

## इत्यथर्ववेदीयमुण्डकोपनिषदि प्रथममुण्डके प्रथमः खण्डः ॥१॥

उक्तमेवार्थमुपसंजिहीर्षुर्मन्त्रो वक्ष्यमाणार्थमाह—य उक्तलक्षणोऽक्षराख्यः सर्वज्ञः सामान्येन सर्वं जानातीति सर्वज्ञः। विशेषेण सर्वं वेत्तीति सर्ववित्। यस्य ज्ञानमयं ज्ञानविकारमेव सार्वज्ञ्यलक्षणं तपो नाऽऽयासलक्षणं तस्माद्यथोक्तात्सर्वज्ञादेतदुक्तं कार्यलक्षणं ब्रह्म हिरण्यगर्भाख्यं जायते। किंच नामासौ

---

भूतप्रकृतित्वं न स्यात्। तस्मान्महाभूतसर्गादिसंस्कारास्पदं गुणत्रयसाम्यं मायातत्त्वमव्याकृतादिशब्दवाच्यमिहाभ्युपगन्तव्यम्। पूर्वस्मिन्कल्पे हिरण्यगर्भप्राप्तिनिमित्तं प्रकृष्टं ज्ञानं कर्म च येनानुष्ठितं तदनुग्रहाय मायोपाधिकं ब्रह्म हिरण्यगर्भावस्थाकारेण विवर्तते। स च जीवैतदवस्थाभिमानी हिरण्यगर्भ उच्यत इत्यभिप्रेत्याऽऽह—**ब्रह्मण इति**। ज्ञानशक्तिभिः क्रियाशक्तिभिश्चाधिष्ठितं विशिष्टं जगद्व्यष्टिरूपं तस्य साधारणः समष्टिरूपः सूत्रसंज्ञक इत्यर्थः। **मनआख्यमिति** समष्टिरूपं विवक्षितम्। व्यष्टिरूपस्य लोकसृष्ट्युत्तरकालत्वात् ॥ ८ ॥

**वक्ष्यमाणार्थमिति**। वक्ष्यमाणस्याविद्याविवरणप्रकरणस्याऽऽरम्भार्थमुक्तपरविद्यासूत्रार्थोपसंहार इत्यर्थः। **सामान्येनेति**। समष्टिरूपेण मायाख्येनोपाधिनेत्यर्थः। **विशेषेणेति**। व्यष्टिरूपेणाविद्याख्येनोपाधिनाऽनन्तजीवभावमापन्नः स एव सर्वं स्वोपाधितत्संसृष्टं च वेत्तीत्यधिदैवमध्यात्मं च तत्त्वाभेदः सूचितः। स्रष्टृत्वं प्रजापतीनां तपसा प्रसिद्धम्। तद्वद्ब्रह्मणोऽपि स्रष्टृत्वे तपोनुष्ठानं वक्तव्यम्। ततः संसारित्वं प्रसज्येतेत्याशङ्क्याऽऽह—**यस्य ज्ञानमयमिति**। सत्त्वप्रधानमायाया ज्ञानाख्यो विकारस्तदुपा-

---

१ क. 'वस्तद'।

देवदत्तो यज्ञदत्त इत्यादिलक्षणम्। रूपमिदं शुक्लं नीलमित्यादि। अन्नं च व्रीहियवादिलक्षणं जायते। मन्त्रोक्तक्रमेणेत्यविरोधो द्रष्टव्यः॥ ९॥

इति मुण्डकोपनिषद्भाष्ये प्रथममुण्डके प्रथमः खण्डः॥ १॥

तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा संततानि। तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके॥ १॥

साङ्गा वेदा अपरा विद्योक्ता—ऋग्वेदो यजुर्वेद इत्यादिना। यत्तदद्रेश्यमित्यादिना नामरूपमन्नं च जायत इत्यन्तेन ग्रन्थेनोक्तलक्षणमक्षरं यया विद्ययाऽधिगम्यत इति परा विद्या सविशेषणोक्ता। अतःपरमनयोर्विद्ययोर्विषयौ विवेक्तव्यौ संसारमोक्षावित्युत्तरो ग्रन्थ आरभ्यते। तत्रापरविद्याविषयः कर्त्रादिसाधनक्रियाफलभेदरूपः संसारोऽनादिरनन्तो दुःखस्वरूपत्वाद्धातव्यः प्रत्येकं शरीरिभिः। सामस्त्येन नदीस्रोतोवदव्यवच्छेदरूपसंबन्धस्तदुपशमलक्षणो मोक्षः परविद्याविषयोऽनाद्यनन्तोऽजरोऽमरोऽमृतोऽभयः शुद्धः प्रसन्नः स्वात्मप्रतिष्ठालक्षणः परमानन्दोऽद्वय इति। पूर्वं तावदपरविद्याया विषयप्रद-

---

धिकं ज्ञानविकारं सृज्यमानसर्वपदार्थाभिज्ञत्वलक्षणं तपो न तु क्लेशरूपं प्रजापतीनामिवेत्यर्थः॥ ९॥

इति मुण्डकोपनिषद्भाष्यटीकायां प्रथममुण्डके प्रथमः खण्डः॥ १॥

अनादिरुपादानरूपेणानन्तो ब्रह्मज्ञानात्प्रागन्तासंभवात्प्रत्येकं शरीरिभिर्हातव्यो दुःखरूपत्वादित्यनेन यदाहुरेकजीववादिन एकं चैतन्यमेकयैवाविद्यया बद्धं संसरति। तदेव कदाचिन्मुच्यते नास्मदादीनां बन्धमोक्षौ स्त इति तदपास्तं भवति। श्रुतिबहिष्कृतत्वात्। सुषुप्तेऽपि क्रियाकारकफलभेदरूपस्य प्रहाणं भवति। बुद्धिपूर्वकप्रहाणस्य ततो विशेषमाह—सामस्त्येनेति। स्वोपाध्यविद्याकार्यस्याविद्याप्रहाणेनाऽऽत्यन्तिकप्रहाणं विद्याफलमित्यर्थः। अमरोऽपक्षयरहितः। अमृतो नाशरहित इत्यर्थः। अपरविद्यायाः परविद्यायाश्च विषयौ प्रदर्श्य पूर्वमपरविद्याया विषयप्रदर्शने श्रुतेरभिप्रायमाह—पूर्वं तावदिति। यदिष्टसाधनतयाऽनिष्टसाधनतया वा वेदेन बोध्यते कर्म तस्यासति प्रतिबन्धे तत्साधनत्वाव्यभिचारः सत्यत्वं न स्वरूपाबाध्यत्वं प्लवा ह्येत इत्यादिना निन्दितत्वात्स्वरूपबाध्यत्वेऽपि चार्थक्रियासामर्थ्यं स्वप्नकामिन्यामिव घटत

---

१ ङ. च. झ. °रोऽमृ°। २ क. °दस्य। ३ च. अजरो°।

र्शनार्थमारम्भः। तद्दर्शने हि तन्निर्वेदोपपत्तेः। तथा च वक्ष्यति—"परीक्ष्य लोकान्कर्मचितान्" इत्यादिना। न ह्यप्रदर्शिते निर्वेदोपपद्यत इति तत्प्रदर्शयन्नाह तदेतत्सत्यमवितथम्। किं तन्मन्त्रेष्वृग्वेदाद्याख्येषु कर्माण्यग्निहोत्रादीनि मन्त्रैरेव प्रकाशितानि कवयो मेधाविनो वसिष्ठादयो यान्यपश्यन्दृष्टवन्तः। यत्तदेतत्सत्यमेकान्तपुरुषार्थसाधनत्वात्तानि च वेदविहितान्यृषिदृष्टानि कर्माणि त्रेतायां त्रयीसंयोगलक्षणायां हौत्राध्वर्यवौद्गात्रप्रकारायामधिकरणभूतायां बहुधा बहुप्रकारं संततानि प्रवृत्तानि कर्मिभिः क्रियमाणानि त्रेतायां वा युगे प्रायशः प्रवृत्तान्यतो यूयं तान्याचरथ निर्वर्तयथ नियतं नित्यं सत्यकामा यथाभूतकर्मफलकामाः सन्तः। एष वो युष्माकं पन्था मार्गः सुकृतस्य स्वयं निर्वर्तितस्य कर्मणो लोके फलनिमित्तं लोक्यते दृश्यते भुज्यत इति कर्मफलं लोक उच्यते। तदर्थं तत्प्राप्तय एष मार्ग इत्यर्थः। यान्येतान्यग्निहोत्रादीनि त्रय्यां विहितानि कर्माणि तान्येष पन्था अवश्यफलप्राप्तिसाधनमित्यर्थः॥ १॥

**यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने[3]।**
**तदाऽऽज्यभागावन्तरेणाऽऽहुतीः प्रतिपादयेत्॥ २॥**

तत्राग्निहोत्रमेव तावत्प्रथमं प्रदर्शनार्थमुच्यते सर्वकर्मणां प्राथम्यात्। तत्कथम्। यदैवेन्धनैरभ्याहितैः सम्यगिद्धे समिद्धे हव्यवाहने लेलायते चलत्यर्चिस्तदा तस्मिन्काले लेलायमाने चलत्यर्चिष्याज्यभागावाज्यभागयोरन्तरेण मध्य आवापस्थान आहुतीः प्रतिपादयेत्प्रक्षिपेद्देवतामुद्दिश्य। अनेकाहप्रयोगापेक्षयाऽऽहुतीरिति बहुवचनम्। एष सम्यगाहुतिप्रक्षेपादिलक्षणः कर्ममार्गो लोकप्राप्तये पन्थास्तस्य च सम्यक्करणं दुष्करम्। विपत्तयस्त्वनेका भवन्ति॥२॥

---

इत्यभिप्रेत्याऽऽह—तदेतत्सत्यमिति। ऋग्वेदविहितः पदार्थो हौत्रम्। यजुर्वेदविहित आध्वर्यवम्। सामवेदविहित औद्गात्रम्। तद्रूपायां त्रेतायामित्यर्थः। सत्यकामा मोक्षकामा इति समुच्चयाभिप्रायेण व्याख्यानमयुक्तम्। 'एष वः पन्थाः सुकृतस्य लोके' इति स्वर्गफलसाधनत्वविषयवाक्यशेषविरोधादिति॥ १॥

आहवनीयस्य दक्षिणोत्तरपार्श्वयोराज्यभागाविज्येते अग्नये स्वाहा सोमाय स्वाहेति दर्शपूर्णमासे। तयोर्मध्येऽन्ये यागा अनुष्ठीयन्ते। तन्मध्यमावापस्थानमुच्यते। अग्निहोत्राहुत्योर्द्वित्वं प्रसिद्धम्। सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातः। अग्नये स्वाहा प्रजापतये स्वाहेति सायम्। तत्कथमग्निहोत्रं प्रक्रम्याऽऽहुतीरिति बहुवचनं तत्राऽऽह—अनेकाहेति। अनेकेष्वहःसु प्रयोगानुष्ठानानि तदपेक्षयेत्यर्थः॥ २॥

---

१ ग. ङ. च. झ. निर्वृत्तानि। २ क. यानि यान्य°। ३ क. °येच्छ्रद्धया हुतम्॥ २॥ ४ क. °पन्थाः श्रद्धया हुतं तस्य। ५ ख. ग. ङ. च. छ. झ. ञ. °ते इन्द्राय स्वाहा प्रजापतये स्वाहे°।

**यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान्हिनस्ति ॥३॥**

कथं यस्याग्निहोत्रिणोऽग्निहोत्रमदर्शं दर्शाख्येन कर्मणा वर्जितम् । अग्निहोत्रिणोऽवश्यकर्तव्यत्वाद्दर्शस्य । अग्निहोत्रसंबन्ध्यग्निहोत्रविशेषणमिव भवति । तदक्रियमाणमित्येतत् । तथाऽपौर्णमासमित्यादिष्वप्यग्निहोत्रविशेषणत्वं द्रष्टव्यम् । अग्निहोत्राङ्गत्वस्याविशिष्टत्वादपौर्णमासं पौर्णमासकर्मवर्जितम् । अचातुर्मास्यं चातुर्मास्यकर्मवर्जितम् । अनाग्रयणमाग्रयणं शरदादिकर्तव्यं तच्च न क्रियते यस्य । तथाऽतिथिवर्जितं चातिथिपूजनं चाहन्यहन्यक्रियमाणं यस्य स्वयं सम्यगग्निहोत्रकालेऽहुतम् । अदर्शादिवदवैश्वदेवं वैश्वदेवकर्मवर्जितं हूयमानमप्यविधिना हुतं न यथाहुतमित्येतत् । एवं दुःसंपादितमसंपादितमग्निहोत्राद्युपलक्षितं कर्म किं करोतीत्युच्यत आसप्तमान्सप्तमसहितांस्तस्य कर्तुर्लोकान्हिनस्ति हिनस्तीवाऽऽयासमात्रफलत्वात् । सम्यक्क्रियमाणेषु हि कर्मसु कर्मपरिणामानुरूपेण भूरादयः सत्यान्ताः सप्त लोकाः फलं प्राप्यन्ते । ते लोका एवंभूतेनाग्निहोत्रादिकर्मणा त्वप्राप्यन्त्वाद्धिंस्यन्त इवाऽऽयासमात्रं त्वव्यभिचारीत्यतो हिनस्तीत्युच्यते । पिण्डदानाद्यनुग्रहेण वा संबध्यमानाः पितृपितामहप्रपितामहाः पुत्रपौत्रप्रपौत्राः स्वात्मोपकाराः सप्त लोका उक्तप्रकारेणाग्निहोत्रादिना न भवन्तीति हिंस्यन्त इत्युच्यते ॥ ३ ॥

दर्शस्याग्निहोत्राङ्गत्वे प्रमाणाभावात्कथं तदकरणमग्निहोत्रस्य विपत्तिरित्याशङ्क्य यावज्जीवचोदनावशादग्निहोत्रिणोऽवश्यकर्तव्यत्वात्तदकरणं भवेद्विपत्तिरित्यभिप्रेत्य विशेषणम् । शरदादिषु नूतनान्नेन कर्तव्यमाग्रयणं कर्म । अदर्शादिवदवैश्वदेवमिति विशेषणम् । वैश्वदेवस्याग्निहोत्रानङ्गत्वेऽप्यावश्यकत्वादित्यर्थः । पिण्डोदकदानेन पित्रादीनां त्रयाणामुपकरोति यजमानः पुत्रादीनां च त्रयाणां ग्रासादिदानेन । ततो मध्यवर्तिना यजमानेन संबध्यमानाः पूर्वे त्रय उत्तरे च त्रयो गृह्यन्त इत्याह—**पिण्डदानादीति** ॥ ३ ॥

---

१ ख. ज. हुतमय° । २ क. प्राप्यते । ३ क. °र्शपूर्णमासस्या° ।

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः । काल्याद्या विश्वरुच्यन्ता लेलायमाना अग्नेर्हविराहुतिग्रसनार्था एताः सप्त जिह्वाः ॥ ४ ॥

एतेषु यश्चरते भ्राजमानेषु यथाकालं चाऽऽहुतयो ह्याददायन् । तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥

एतेष्वग्निजिह्वाभेदेषु योऽग्निहोत्री चरते कर्माऽऽचरत्यग्निहोत्रादि भ्राजमानेषु दीप्यमानेषु । यथाकालं च यस्य कर्मणो यः कालस्तत्कालं यथाकालं यजमानमाददायन्नाददाना आहुतयो यजमानेन निर्वर्तितास्तं नयन्ति प्रापयन्त्येता आहुतयो या इमा अनेन निर्वर्तिताः सूर्यस्य रश्मयो भूत्वा रश्मिद्वारैरित्यर्थः । यत्र यस्मिन्स्वर्गे देवानां पतिरिन्द्र एकः सर्वानुपर्यधिवसतीत्यधिवासः ॥ ५ ॥

एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥

कथं सूर्यस्य रश्मिभिर्यजमानं वहन्तीत्युच्यत एह्येहीत्याह्वयन्त्यः । सुवर्चसो दीप्तिमत्यः । किंच प्रियामिष्टां वाचं स्तुत्यादिलक्षणामभिवदन्त्य उच्चारयन्त्योऽर्चयन्त्यः पूजयन्त्यश्चैष वो युष्माकं पुण्यः सुकृतः पन्था ब्रह्मलोकः फलरूपः । एवं प्रियां वाचमभिवदन्त्यो वहन्तीत्यर्थः । ब्रह्मलोकः स्वर्गः प्रकरणात् ॥ ६ ॥

---

॥ ४ ॥ ५ ॥

आहुतयो यजमानं वहन्तीति संबन्धः ॥ ६ ॥

---

१ क. ख. 'कृतो यथा म' ।

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥ ७ ॥

एतच्च ज्ञानरहितं कर्मैतावत्फलमविद्याकामकर्मकार्यमतोऽसारं दुःखमूलमिति निन्द्यते। प्लवा विनाशिन इत्यर्थः। हि यस्मादेतेऽदृढा अस्थिरा यज्ञरूपा यज्ञस्य रूपाणि यज्ञरूपा यज्ञनिर्वर्तका अष्टादशाष्टादशसंख्याकाः षोडशर्त्विजः पत्नी यजमानश्चेत्यष्टादश। एतदाश्रयं कर्मोक्तं कथितं शास्त्रेण। येष्वष्टादशस्ववरं केवलं ज्ञानवर्जितं कर्म। अतस्तेषामवरकर्माश्रयाणामष्टादशानामदृढतया प्लवत्वात्प्लवते सह फलेन तत्साध्यं कर्म। कुण्डविनाशादिवत्क्षीरदध्यादीनां तत्स्थानां नाशः। यत एवमेतत्कर्म श्रेयः श्रेयःकरणमिति येऽभिनन्दन्त्यभिहृष्यन्त्यविवेकिनो मूढा अतस्ते जरां च मृत्युं च जरामृत्युं किंचित्कालं स्वर्गे स्थित्वा पुनरेवापि यन्ति भूयोऽपि गच्छन्ति ॥ ७ ॥

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥ ८ ॥

किंचाविद्यायामन्तरे मध्ये वर्तमाना अविवेकप्रायाः स्वयं वयमेव धीरा धीमन्तः पण्डिता विदितवेदितव्याश्चेति मन्यमाना आत्मानं संभावयन्तस्ते च जङ्घन्यमाना जरारोगाद्यनेकानर्थव्रातैर्हन्यमाना भृशं पीड्यमानाः परियन्ति विभ्रमन्ति मूढाः। दर्शनवर्जितत्वादन्धेनैवाचक्षुष्केणैव नीयमानाः प्रदर्श्यमानमार्गा यथा लोकेऽन्धा अक्षिरहिता गर्तकण्टकादौ पतन्ति तद्वत् ॥ ८ ॥

अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः । यत्कर्मिणो न प्रवेदयन्ति रागात्तेनाऽऽतुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥

किंचाविद्यायां बहुधा बहुप्रकारं वर्तमाना वयमेव कृतार्थाः कृतप्रयोजना इत्येवमभिमन्यन्त्यभिमानं कुर्वन्ति बाला अज्ञानिनः। यद्यस्मादेवं कर्मिणो न

---

रूप्यते निरूप्य यदाश्रयतया यज्ञस्ते यज्ञरूपाः ॥ ७ ॥
स्वयमेवेति तत्त्वदर्श्युपदेशानपेक्षतया स्वमनोरथेनैवेत्यर्थः ॥ ८ ॥

---

१ क. वयमेवेति ।

